Government Oriental Library Series.

BIBLIOTHECA SANSKRITA—No. 5.

# तैत्तिरीयसंहिता

## भट्टभास्करमिश्रविरचितभाष्यसहिता.

# THE TAITTIRÍYA SAMHITÁ

OF THE

## KRISHNA-YAJUR-VEDA

WITH THE

COMMENTARY OF BHATTA BHA'SKARA MIS'RA.

Vol. II.

(Kanda I—Prasnas 4—6).

EDITED BY

A. MAHA'DEVA S'A'STRI, B. A.,
*Curator, Government Oriental Library, Mysore.*

AND

PANDITARATNAM K. RANGA'CHA'RYA,
*Pandit, Government Oriental Library, Mysore.*

Published under the Authority of the Government of His Highness the Maharaja of Mysore.

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS,

1894.

Price Rs. 2½

# PREFACE.

The manuscripts used in editing the portion comprised in this volume are the same as those referred to in the preface to the Volume I.

A. M. S.

# विषयानुक्रमणिका.

## तैत्तिरीयसंहिता.

### १ काण्डे चतुर्थः प्रपाठकः.


| | | | अनुवाकाः. |
|---|---|---|---|
| सोमाभिषवमन्त्राः | ... | ... | १ |
| ग्रहग्रहणासादनादिमन्त्राः— | ... | ... | |
| उपांशुग्रहः | ... | ... | २ |
| अन्तर्यामग्रहः | ... | ... | ३ |
| वायव्यैन्द्रवायवग्रहौ | ... | ... | ४ |
| मैत्रावरुणग्रहः | ... | ... | ५ |
| आश्विनग्रहः | ... | ... | ६–७ |
| शुक्रग्रहः | ... | ... | ८ |
| मन्थिग्रहः | ... | ... | ९ |
| आग्रयणग्रहः | ... | ... | १०–११ |
| उक्थ्यग्रहः | ... | ... | १२ |
| ध्रुवग्रहः | ... | ... | १३ |
| ऋतुग्रहाः | ... | ... | १४ |
| ऐन्द्राग्नग्रहः | ... | ... | १५ |
| वैश्वदेवग्रहः | ... | ... | १६ |
| मरुत्वतीयग्रहाः | ... | ... | १७–१९ |
| माहेन्द्रग्रहः | ... | ... | २०–२१ |
| आदित्यग्रहः | ... | ... | २२ |
| सावित्रग्रहः | ... | ... | २३–२५ |
| वैश्वदेवग्रहः | ... | ... | २६ |
| पात्नीवतग्रहः | ... | ... | २७ |
| हारियोजनग्रहः | ... | ... | २८ |

| | | | 
|---|---|---|
| | | अनुवाकाः. |
| अतिग्राह्येषु आग्नेयैन्द्रग्रहौ | ... ... | २९–३० |
| षोडशिग्रहः | ... ... | ३१–३६ |
| दक्षिणासङ्गता मन्त्राः (दाक्षिणहोमादिः) | ... ... | ३७ |
| समिष्टयजुर्होममन्त्राः | ... ... | ३८ |
| अवभृथसङ्गता मन्त्राः | ... ... | ३९ |
| संहितायां २–२–४ र्थानुवाकशेषे समाम्नातानां काम्येष्टीनां याज्यापुरोनुवाक्याः | ... ... | ४० |

| | | |
|---|---|---|
| | | मन्त्राः. |
| पुत्रवद्यागे याज्यापुरोनुवाक्ये | ... ... | १–२ |
| ऐन्द्रयागे „ | ... ... | ३–४ |
| रसवद्यागे „ | ... ... | ५–६ |
| वसुमद्यागे „ | ... ... | ७–८ |
| वाजसृद्यागे „ | ... ... | ९–१० |
| अग्निवद्यागे „ | ... ... | ११–१२ |
| ज्योतिष्मद्यागे „ | ... ... | १३–१४ |

## १ काण्डे पञ्चमः प्रपाठकः.

| | | |
|---|---|---|
| पुनराधेयब्राह्मणम् | ... ... | |
| कालद्रव्यविधिः | ... ... ... | १ |
| याज्याद्यङ्गविधिः | ... ... ... | २ |
| पुनराधेयमन्त्राः | ... ... ... | ३ |
| पुनराधेयमन्त्राणां ब्राह्मणम् | ... ... | ४ |
| [अग्निहोत्राङ्गस्य]अग्न्युपस्थानस्य मन्त्रा ब्राह्मणानि च. | | |
| आहवनीयोपस्थानमन्त्राः | ... ... | ५ |
| सपरिकरगार्हपत्याहवनीययोरुपस्थानमन्त्राः | ... | ६ |
| ५मानुवाकाम्नातानाम्मन्त्राणां ब्राह्मणम् | ... | ७ |
| ६ष्ठानुवाके समाम्नातानाम्मन्त्राणां ब्राह्मणम् | ... | ८ |
| अग्निहोत्रब्राह्मणम् (सायम्प्रातर्विधिरुपस्थानविधिश्च) | ... | ९ |

अनुवाकाः.
प्रवत्स्यतः अग्न्युपस्थानमन्त्राः ... ... १०^1-6
दार्शिकयाजमानशेषाः आचमनव्रतोपायनादीनां मन्त्राः... १०^7-14
संहितायां २, २, ५–६ नुवाकयोराम्नातानां काम्येष्टीनां याज्यापुरोनुवाक्याः— ... ... ११
मन्त्राः.
अभिशस्यमानकर्तृके त्रिहविष्याद्यस्य वैश्वानरयागस्य पुरोनुवाक्या. १
विद्विषाणान्नादननिमित्तके वैश्वानरयागे याज्या. २
जातेष्टिरूपे वैश्वानरयागे पुरोनुवाक्या ३
दर्शाद्यतिपत्तिनिमित्तके वैश्वानरयागे याज्या. ४
जातेष्ट्याः याज्या. ५
त्रिहविष्याद्यस्य वैश्वानरयागस्य याज्या. ६
आयतनगमननिमित्तके वैश्वानरयागे याज्या. ७
सनिमेष्यतो वैश्वानरयागे याज्या. ८
त्रिहविषि मध्यमस्य वारुणस्य पुरोनुवाक्या ९
" याज्या. १०
त्रिहविष्युत्तमस्य दाधिक्राव्णस्य पुरोनुवाक्या ११
" याज्या. १२
अग्निमुद्वासयिष्यतः आग्नेये याज्या अनुवाक्या च ... १३–१४
ग्रामकामस्य मारुते पुरोनुवाक्या याज्या च ... १५–१६
संग्राममुपप्रयास्यत आदित्ये " " ... १७–२०

## १ काण्डे षष्ठः प्रपाठकः.

ऐष्टिकयाजमानमन्त्राः .... ....
आज्यग्रहणानुमन्त्रणादिमन्त्राः ... ... १
परिध्यनुमन्त्रणादिमन्त्राः ... ... २
इडादिभागस्य भक्ष्यस्यानुमन्त्रणमन्त्राः ... ३
अनूयाजादीनामनुमन्त्रणमन्त्राः ... ... ४
ध्रुवानुमन्त्रणयजमानभागप्राशनादिमन्त्राः ... ५
आहवनीयोपस्थानादिमन्त्राः ... ... ६
ऐष्टिकयाजमानब्राह्मणम् किञ्चिदाध्वर्यवब्राह्मणं च—
अन्वाधानव्रतोपनयनादिविधिः ... ... ७

| | |
|---|---|
| | अनुवाकाः. |
| प्रणयनयज्ञायुधसम्भरणादिविधिः ... ... | ८ |
| दर्शपूर्णमासयोस्स्तुतिः, द्वादशद्वन्द्वसम्पत्तिश्च ... | ९ |
| २यानुवाकाम्नातमन्त्राणां विवरणब्राह्मणं हविरासादनविधिश्च | १० |
| आश्रावणादिमन्त्रविधिः २यानुवाकाम्नातप्रयाजानुमन्त्रणविवरणं च. | ११ |
| संहितायां २, २, ७ मानुवाकाम्नातानां काम्येष्टीनां याज्यापुरोनुवाक्याः | १२ |

| | |
|---|---|
| | मन्त्राः. |
| पशुकामस्यैन्द्रे पुरोनुवाक्या याज्या च ... | १–२ |
| इन्द्रियावद्यागे „ ... ... | ३–४ |
| घर्मवद्यागे „ ... ... | ५–६ |
| अर्कवद्यागे „ ... ... | ७–८ |
| अंहोमुग्यागे „ ... ... | ९–११ |
| वैमृधयागे „ ... ... | १२–१५ |
| त्रातयागे „ ... ... | १६–१७ |
| अर्काश्वमेधवद्यागे „ ... ... | १८–१९ |

हरिः ओम्.

# तैत्तिरीयसंहिता

## भट्टभास्करीयभाष्ययुक्ता.

### प्रथमः काण्डः.

### चतुर्थः प्रश्नः

आ द॑दे ग्रावा॑स्यध्वर॒कृद्दे॒वेभ्यो॑

[1]एति॑ । द॒दे॒ । [2]ग्रावा॑ । अ॒सि॒ । अ॒ध्व॒र॒कृदित्य॑-

---

ओम्.

## भट्टभास्करीयं ज्ञानयज्ञाख्यम्

## तैत्तिरीयसंहिताभाष्यम्.

[1]अतः परं ग्रहकाण्डं सोमार्थेयम् । उपांशुसवनं ग्रावाणमादत्ते—आदद इति ॥ ग्रावाणमिति शेषः । 'देवस्य त्वा'* इति सावित्रोस्य शेषो व्याख्यात एव । 'देवस्य त्वा सवितुः प्रसव इति ग्रावाणमा दत्ते प्रसूत्यै'† इत्यादि ब्राह्मणम् । 'पशवो वै सोमो व्यान उपांशुसवनः'† इत्यादि च ॥

[2]तमभिमन्त्रयते—ग्रावासीति त्रिष्टुभा पञ्चपदया ॥ यथोक्तं—'चतुर्भिरष्टाक्षरैः द्वादशाक्षरेण चैकेन त्रिष्टुप्' इति । हे

*सं. १-१-४

†सं. ६-४-४.

गम्भीरमिममध्वरङ्कृध्युत्तमेन पवि-
नेन्द्राय सोमꣳ सुषुतम्मधुमन्तम्प-

ध्वर-कृत् । देवेभ्यः । गम्भीरम् । इमम् । अ-
ध्वरम् । कृधि । उत्तमेनेत्युत्-तमेन । पविना ।
इन्द्राय । सोमम् । सुषुतमिति सु-सुतम् । मधु-
मन्तमिति मधु-मन्तम् । पयस्वन्तम् । वृष्टिवनि-

उपांशुसवन अध्वरकृत् अध्वरस्य यज्ञस्य कर्ता अभिषवद्वारेण सम्पादयिता ग्रावा त्वमसि । एवं नाम प्रशस्तोसि । यद्वा—अध्वरकृत्यात्* स्तोतव्यस्त्वमसि । गृणातेः स्तुतिकर्मणः 'अन्येभ्योपि दृश्यते' इति क्वनिप्, आडागमः, इत्वाभावश्च दृशिग्रहणात् । गिरतेर्वा, गिरति सोममभिषवकाल इति । स त्वं देवेभ्यो देवार्थम् । षष्ठ्यर्थे वा चतुर्थी । देवानां सम्बन्धिनं गम्भीरं गहनमिमं प्रस्तुतमध्वरं कृधि सम्पादय । करोतेर्लोटि 'बहुलं छन्दसि' इति शपो लुक्, 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' इति हेर्धिभावः, पादादिरपि व्यत्ययेन निहन्यते । तदर्थं किं क्रियतामित्यत आह—उत्तमेनोत्कृष्टेन पविना पवनेन† शोधनेन अभिषवात्मना तत्कर्तृकेण । इन्द्राय इन्द्रार्थं सोमं सुषुतं सुष्ठु अभिमतं कृधीत्यत्रापि सम्बध्यते । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम्, 'उपसर्गात्सुनोति' इति षत्वम् । यद्वा—इन्द्राय इन्द्रस्य यः पविर्वज्रः उत्तमस्तेन सोमं सुषुतं कुरु । तेनैव खल्विदं कृतं भवति, यत्त्वया क्रियत इति भावः।

*ख—कृत. ग—कृत्त्वात्. †क. ख—पावनेन.

**पयस्वन्तं वृष्टिवनिमिन्द्राय त्वा वृत्रघ्न इन्द्राय त्वा वृत्रतुर इन्द्राय**

**मिति वृष्टि-वनिम्। [3]इन्द्राय। त्वा। वृत्रघ्न इति वृत्र-घ्ने। [4]इन्द्राय। त्वा। वृत्रतुर इति वृत्र-तुरे। [5]इन्द्राय।**

---

'अच इः' इति पवतेरिप्रत्ययः। उत्तमशब्द उञ्छादिरन्तोदात्तः। सोमो विशेष्यते—मधुमन्तं मधुररसवन्तं स्वादुभूतम्* पयस्वन्तं क्षीरवन्तम्, 'पयसा श्रीणाति'† इति श्रवणात्। यद्वा—'पयः पिबतेः प्यायतेर्वा'‡ इति निर्वचनात् सेचनवन्तं वृद्धिमन्तं वा। उभयत्राप्यसुनि पीभावः§। वृष्टिवनिं यागसाधनद्वारेण वृष्टेर्दातारं सम्भक्तारं वा। 'छन्दसि वनसन' इतीन्प्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वम्॥

[3]तमभिमिमीते राजानम्—इन्द्राय त्वेति। इन्द्राय त्वा वृत्रघ्ने वृत्रमसुरं हतवते त्वा सोमं मिमे इति शेषः। 'ब्रह्मभ्रूण' इति क्विप्, उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्॥

[4]द्वितीयं मिमीते—इन्द्राय त्वा वृत्रतुर इति॥ तुर त्वरणे, वृत्रं बाधितवत इत्यर्थः। 'बहुलं छन्दसि' इति क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वम्॥

[5]तृतीयं मिमीते—इन्द्राय त्वाभिमातिघ्न इति॥ अभिमातिः पाप्मा, तस्य¶ हन्त्रे। द्वितीयवत्प्रत्ययः, प्रथमवत्स्वरः॥

---

*ख. ग—स्वादुभूतमिति नास्ति. †सं. ६-४-८. ‡निरु. नै. २-२-१.
§ख—असुन्नन्तान्मतुप्. ¶क. घ—तस्येत्यस्य स्थाने 'पाप्मनां' इति पाठः.

त्वाभिमातिघ्न इन्द्राय त्वादित्यवंत
इन्द्राय त्वा विश्वदेव्यावते श्वात्रा-

त्वा। अभिमातिघ्न इत्यभिमाति-घ्ने। [6]इन्द्राय। त्वा। आदित्यवंत इत्यादित्य-वते। [7]इन्द्राय। त्वा। विश्वदेव्यावत इति विश्वदेव्य-वते। [8]श्वात्राः। स्थ। वृत्रतुर इति वृत्र-तुरः। राधोगूर्ता इति

---

[6]चतुर्थं मिमीते—इन्द्राय त्वादित्यवत इति ॥ आदित्यैस्तद्वते॥

[7]पञ्चमं मिमीते—इन्द्राय त्वा विश्वदेव्यावते इति ॥ विश्वे देवा एव विश्वदेव्याः। स्वार्थिको यत्, 'मन्त्रे सोमाश्व' इति दीर्घः, मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम्। यद्वा—देवार्हं देव्यं, 'छन्दसि च' इति यत्प्रत्ययः। देवेषु वा साधु देव्यम्, विश्वं देव्यं येषामिति विश्वदेव्याः देवविशेषाः, तद्वते। 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम्। 'इन्द्राय त्वेन्द्राय त्वेति मिमीते'* इत्यादि ब्राह्मणम्॥

[8]तं राजानं होतृचमसीयाभिरुपसृजति सोमेव [च] नयति†—श्वात्रास्स्थेति॥ श्वात्रास्स्थ आशुत्राः स्थ आशु त्रायकाः स्थ, आशु वा अभिमतसम्पादने वर्तमानाः स्थ। यूयं हे होतृचमसीया आपः। आशुपूर्वात्त्रायतेः 'आतोनुपसर्गे कः'। अततेर्वा‡ औणादिकस्त्रप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वम्। वृत्रतुरः वृ-

---

*सं. ६-४-४. †क. घ—सोमे वाचमसे वा अप उपनयति.
‡क—अन्ततेर्वा. ख.—तृणातेर्वा.

स्स्थ वृत्रतुरो राधोगूर्ता अमृतस्य
पत्नीस्ता देवीर्देवत्रेमं यज्ञन्धत्तोपहू-
तास्सोमस्य पिबतोपहूतो युष्माक-

राधः-गूर्ताः । अमृतस्य । पत्नीः । ताः । देवीः । देवत्रेति देव-त्रा । इमम् । यज्ञम् । धत्त । उपहूता इत्युप-हूताः । सोमस्य । पिबत । उपहूत इत्युप-हूतः । युष्माकम् ॥ १ ॥ सोमः । पिबतु ।

त्रमसुरं बाधितवत्यः । राधोगूर्ताः राधोऽन्नम् सोमलक्षणम्, तस्मिन् गूर्तमुद्योगो यासां ता राधोगूर्ताः तत्सम्पादनायोद्युक्ता इत्यर्थः । गुरी उद्यमने, भावे निष्ठा, 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः, 'हलि च' इति दीर्घः, 'नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि' इति नत्वाभावः । अमृतस्य मृतिरहितस्य सोमस्य, अमृतत्वस्य* वा पत्न्यः पालयित्र्यः । 'पत्युर्नो यज्ञसंयोगे' इति नकारः । ताः पत्नीः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । या यूयमीदृश्यः स्थ, ताः हे देवीः देव्यः देवनादिगुणयुक्ताः । पूर्ववद्दीर्घत्वम् । इमं यज्ञं देवत्रा देवेषु धत्त स्थापयत । 'देवमनुष्य' इति त्राप्रत्ययः । किञ्च, उपहूताः उपयामत्वं† चापि क्वचिदपवादत्वेनोपदिष्टास्तैः‡[?] देवैरभ्यनुज्ञाताः यूयं सोमस्य पिबत§ । क्रियाग्रहणेन सम्प्रदानत्वात् 'चतुर्थ्यर्थे बहुलं छन्दसि' इति षष्ठी । सोऽप्युपहूतो युष्माकं पिबतु

*ख—अमृतस्य. †क—उपमायामत्वत्. ‡ग—तैरिति नास्ति. §क, घ—'योऽयं विश्वत इति' इत्यधिकः पाठः.

मृ ॥ १ ॥ सोमः पिबतु यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदु-रावन्तरिक्षे तेनास्मै यजमानायोरु

[9]यत् । ते । सोम । दिवि । ज्योतिः । यत् । पृथि-व्याम् । यत् । उरौ । अन्तरिक्षे । तेन । अस्मै । यजमानाय । उरु । राया । कृधि । अधीति ।

---

युष्मान्पिबतु । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । 'एष वा अपां सोमपीथो य एवं वेद नाप्स्वार्तिमार्छति'* इति ब्राह्मणम् ॥

[9]सोमं प्रयौति—यत्त इति चतुष्पदया सतोबृहत्या दशाक्षरयुता†युक्पादया । सतःपङ्क्त्या वा द्वादशाक्षरयुगयुक्पादया‡ ॥ हे सोम तव यद्दिवि ज्योतिः, यच्च पृथिव्याम्, यच्चोरौ विस्तीर्णे अन्तरिक्षे तेन राया तव धनभूतेन तेजसास्मै यजमानाय उरु कृधि भूरि देहि । यद्वा—इदं कर्म उरु विस्तीर्णं कुरु । यद्वा—इदं कर्म, राया धनेन उरु कुरु कुरुष्वेति भावः । 'ऊडिदम्' इति रैद्युभ्यां विभक्तेरुदात्तत्वम् । 'उदात्तयणः' इति दातृ§पृथिवीभ्याम् । किञ्च, दात्रे इन्द्राय इमं यजमानम्, इदं वा कर्म, आधिक्येन वोचः ब्रूहि सर्वयजमानाना मधि उपरि यजमानानामयं यजमान इति, सर्वयागानामुपर्ययं याग इति वा, इन्द्राय निवेदय । यद्वा—यजमानायोरु कृ-

---

* सं.६—४—४. † क. घ—दशाद्याष्टरयु.
‡ क. घ—द्वादशाष्टाक्षरयुक्पङ्क्त्या. §ख—डरपृ.

राया कृध्यधि दात्रे वोचो धिषणे
वीडू सती वीडयेथामूर्जन्दधाथामू-
र्जम्मे धत्तम्मा वाꣳ हिꣳसिषम्मा

दात्रे । वोचः । [10]धिषणे इति । वीडू इति । सती इति । वीडयेथाम् । ऊर्जम् । दधाथाम् । ऊर्जम् । मे । धत्तम् । मा । वाम् । हिꣳसिषम् । मा ।

धीत्युक्तम्, कस्मात्पुनरेतं क्रि*यत इत्याह—दात्रे चरुपुरोडाशादीनि देवेभ्यो ददते धार्मिकाय† यजमानाय अधिब्रूहि अधिकं ब्रूहि एतत्पक्षपातेन ब्रूहि । यद्वा—स्वामित्वेन वचन-‡मधिवचनं तत् सर्वदा कुर्वस्मै यजमानाय । 'बहुलं छन्दस्यमाङ्योगेपि' इत्यडभावः, 'छन्दसि लुङ्लङ्लिटः' इति लुङ् । यद्वा—द्युप्रभृतिषु स्थितं तेज एकत्र सम्भृत्य तेन§ यजमानस्याभिमतं साधयेति । तत्सर्वथैव मया क्रि¶यत इति यजमानाय ब्रूहि । अध्यागच्छेत्यादिवदधिरनर्थकः । 'एभ्य एवैनं लोकेभ्यस्सम्भरति'** इति ब्राह्मणम् ॥

[10]अधिषवणफलकेभिमृशति—धिषणे इति त्रिपद्या विराजा । हे धिषणे सोमं चर्म†† वा धारयितुं धृष्टे । 'धृषेर्धिष च संज्ञायाम्' इति क्युप्रत्ययः, आमन्त्रिताद्युदात्तत्वम् । ईदृश्यौ अधिषवणफलके युवां वीडू विष्टब्धे दृढे‡‡ अपि सती सत्यौ । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । वीडयेथमात्मानं सं-

*ख—त्री. †ख—राधकाय. ‡ख—स्वत्वेन वचन. ग—स्वाधीनवचन.
§ग—सम्बन्ध्य तेन. ख—सम्भृतवतो. ¶ख—द्रि. **सं. ६-४-४.
††क—कर्म. ‡‡ख—विष्वग्धृढे.

मा हिं॑सिष्टम्प्रागपागुदगधराक्ता-
स्त्वा दिश आ धावन्त्वम्ब निष्वर।

मा । हिं॑सिष्टम् । [11]प्राक् । अपाक् । उदक् ।
अधराक् । ताः । त्वा । दिशः । आ । धावन्तु ।

स्तम्भयतं दृढं कुरुतम्, यथाभिषवकाले अभिघातेन युवयो-र्विश्लेषो न भवति तथा कुरुतम् । वीडुशब्दाद्दृढवाचिनः 'तत्क-रोति' इति *णिच् । किञ्च, ऊर्जं रसं सोमलक्षणं दधाथां धारयतम् । किञ्च, ऊर्जं बलं मे मह्यं धत्तं दत्तम्, यजमानस्य यागं साधयितुमविनष्टं कुरुतमित्यर्थः । किञ्च, मा वां हिंसिषं अभिषवकालेभिघातेन युवयोर्हिंसाम्मा कार्षम् । अत एव मामपि युवां मा हिंसिष्टम् ॥

[11]होतृचमसेंशून्परिप्लावयति—प्रागिति ॥ प्राञ्चतीति प्राक् प्राची दिक् । ऋत्विगादिना क्विन्प्रत्ययः, वस्तुत्वेन विवक्षितत्वान्नपुंस-कत्वम्, 'अनिगन्तोञ्चतावप्रत्यये' इति पूर्वपदप्रकृतिस्वरत्वम् । अपाक् प्रतीची । पूर्ववत्प्रत्ययस्स्वरश्च । उदक् उदीची । पूर्ववत्प्र-त्ययस्स्वरश्च । अधराक् अधोदिक् । पूर्ववत्प्रत्ययः, कृदुत्तरपद-प्रकृतिस्वरत्वम् । प्रदर्शनार्थं चासामुपादानमन्यासामपि । एवं-प्रकारा या दिशस्तास्सर्वास्त्वामाधावन्तु त्वत्समीपं गच्छन्तु । हे सोम ताभिरागताभिस्तत्स्थास्त्वदीया अंशवः सर्व एव समागता भवन्ती*त्यभिप्रायः । 'सोमो वै राजा दिशोभ्यध्यायत् स दिशोनु प्राविशत्' इत्यादि ब्राह्मणम्† ॥ किञ्च, अम्ब हे मातृ-

*ख—भवन्ति, †सं.६-४-८.

यत्ते सोमादाभ्यन्नाम जागृवि त-
स्मै ते सोम सोमाय स्वाहा ॥२॥

अम्ब । नीति । स्वर् । [12]यत् । ते । सोम । अदा-
भ्यम् । नाम । जागृवि । तस्मै । ते । सोम । सो-
माय । स्वाहा ॥ २ ॥

युष्माकँ स्वर् यत्ते नव च ॥ १ ॥

स्थानीय सोम । 'अम्बार्थनद्योर्ह्रस्वः' । लतामन्त्रणं वा । निष्वर अंशुभ्यो रसात्मना निर्गच्छ । सुषामादित्वात्षत्वम् । 'अम्ब निष्वरेत्याह कामुका एनं स्त्रियो भवन्ति य एवं वेद' इति ब्राह्मणम्* ॥

[12]राजन्येव षण्णामंशूनां द्वौद्वावंशू अपिसृजति प्रक्षिपति— यत्ते सोमादाभ्यमिति द्विपदया विराजा ॥ हे सोम यत्ते नामाभिधानम् । कीदृशं ? अदाभ्यमनुपहिंस्यम् । दभिः प्रकृत्यन्तरमस्तीत्याहुः, 'दभेश्चेति वक्तव्यम्' इति ततो ण्यत्, अव्ययपूर्वपदप्रकृतिस्वरत्वम् । जागृवि जागरणशीलं पापनिर्हरणादौ । 'जॄशॄस्तॄजागृभ्यः क्विन्' इति क्विन्प्रत्ययः । 'जाग्रोऽविचिण्णल्ङित्सु' इति प्रतिप्रसूय गुणः प्रतिषिध्यते । यदीदृशं तस्मै ते तवैवासाधारणाय नाम्ने स्वाहा स्वाहुताविमावंशू स्याताम् । किं पुनस्तन्नामेत्याह—सोमाय सोमेत्येवंरूपाय । स्वरूपप्रधानोयं शब्दो विशेषणत्वात् । कथमस्यैतन्नामेति यो ब्रूयात्तं प्रति नामत्वाभिव्यक्तये पुनरपि तेनैव राजा मन्त्र्यते† सोमेति । अयं भावः—'घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति'* इत्यभि-

*सं. ६-४-४.

†क—राजानमभिमन्त्रयते.

वाचस्पतये पवस्व वाजिन्वृषा

[1]वाचः । पतये । पवस्व । वाजिन्न् । [2]वृषा ।

---

पुतं राजानं नामैतज्जह्यात् कपालावस्थायां घटमिव घटशब्दः; ततश्च, 'प्राणा वा अंशवः पशवस्सोमः'* इति सोमे अंशुहीने पशवः प्राणहीनास्स्युः; तस्मात् 'अंशूनपगृह्णाति त्रायत एवैनम्'* इति प्राणभूता अंशवः प्रथमं गृह्यन्ते; तस्यैवा-† भिषूयमाणस्य सङ्घातस्याप्राणत्वप्रसङ्गात्, तन्मा भूदिति द्वौद्वावंशू अपिसृज्येते । एवं च सत्ययं प्राणवान्भवति, सोमशब्दश्चैनं न जहाति, पशवश्च प्राणवन्तो भवन्तीति । प्राणभूताभ्यामंशुभ्यां सहाभिषुतत्वात्, अभिषुतस्यापि सोमशब्दवत्त्वात् अभिषुतमपि सोमशब्दो न जहातीति । सोमाय स्वाहेति, 'नमस्स्वस्तिस्वाहा' इत्यादिना चतुर्थी । यथाग्रचादीनां स्वाहाकारेण स्थितिरेवमस्यापि तादर्थ्ये चतुर्थी वा,‡ सोमाय सोमशब्दस्थित्यर्थं एतौ प्रक्षिप्येते इति । ततश्च विभक्तिसंयोगात्स्वाहेत्यागन्तः(?) । द्वाभ्यामेव च प्राणवत्त्वस्य सिद्धेः द्वौद्वावेवांशू प्रक्षिप्येते । तस्माद्द्वावेव पशूनां चक्षुरादयः प्राणाः । अत्रांशूनामवग्रहणप्रदेशे महाभिषवकालभाविनोपिसर्जनमन्त्रस्य प्रासङ्गिकमाम्नानम्, यथोपधानप्रदेशे 'यानि घर्मे'§ इति कपालविमोकमन्त्रस्य ॥

इति चतुर्थे प्रथमः.

---

[1]उपांशुग्रहं गृह्णाति । 'प्राणो वा एष यदुपांशुः'¶ इत्यादि ब्राह्मणम् । अयं च त्रिर्हस्तेन गृह्यते । 'ब्रह्मवादिनो वदन्ति

---

*सं. ६-४-४. †ख–ग.—तथाचा.
‡ख. यद्वा. अग्रयादीनां तादर्थ्ये चतुर्थी. एवमस्यापि तादर्थ्ये वा चतुर्थी.
§सं. १-१-७[12] ¶सं. ६-४-५.

वृष्णो अꣳशुभ्याङ्गभस्तिपूतो

वृष्णः । अꣳशुभ्यामित्यꣳशु-भ्याम् । गभस्ति-

कस्मात्सत्यात्त्रयः पशूनां हस्तादानाः '* इत्यादि ब्राह्मणम् । तत्र प्रथममष्टकृत्वोभिषुतं प्रथमाभ्यामंशुभ्यामन्तर्धाय उपांशुं गृह्णाति—वाचस्पतय इति ॥ वाचस्पतिः प्राणः, वाचः प्रापकत्वात्† । 'षष्ठ्याः पतिपुत्र' इति विसर्जनीयस्य सत्वम् । वाचस्पतय इति 'सावेकाचः' इति षष्ठ्या उदात्तत्वम् । तदर्थं हे सोम पवस्व आभ्यामंशुभ्यामात्मानं शोधय । हे वाजिन् वेगवन् निस्सरणे । यद्वा—अन्नवन् यागद्वारेण । 'अरुणो ह स्माहौपवेशिः' इत्यारभ्य 'प्रातस्सवनमेव तेनाप्नोति '* इति ब्राह्मणम्, 'ब्रह्मवादिनो वदन्ति पवित्रवन्तोन्ये ग्रहा गृह्यन्ते '* इत्यारभ्य 'वाचैवैनं पवयति '* इत्यन्तं च, 'पद्भिरंशुभिः पवयति '* इत्यादि च ॥

[2]एकादशकृत्वोभिषुतं मध्यमाभ्यामन्तर्धाय द्वितीयं गृह्णाति—वृषा वृष्ण इति ॥ हे सोम वृषा वर्षिता उत्पादकस्त्वमभीष्टानाम् । 'कनिन्युवृषि' इत्यादिना कनिन्प्रत्ययः । स एवं वृष्णस्तवैवांशुभ्यां पवस्वात्मानं गभस्तिपूतः गभस्तिभिरंशुभिः‡ पूर्वमेव पूतश्शोधितस्सन्§ इदानीमंशुभ्यां पवस्वेति । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । 'वृष्णो ह्येतावंशू '* इत्यादि ब्राह्मणम्, 'एकादशकृत्वो द्वितीयम '* इत्यादि च ॥

*सं. ६-४-५.
†क.—पालकत्वात.
‡क—स्तिभीरश्मिभि.
§क—तस्स.

देवो देवानाम्पवित्रमसि येषां भागोसि तेभ्यस्त्वा स्वाङ्कृतोसि मधुमतीर्न इषस्कृधि विश्वेभ्यस्त्वे-

पूत इति गभस्ति–पूतः। [3]देवः। देवानाम्। पवित्रम्। असि। येषाम्। भागः। असि। तेभ्यः। त्वा। [4]स्वाङ्कृतः। असि। [5]मधुमतीरिति मधु–म-

[3]द्वादशकृत्वोभिषुतमुत्तमाभ्यामन्तर्धाय तृतीयं गृह्णाति—देवो देवानामिति ॥ हे सोम देवो देवनादिगुणयुक्तस्त्वं देवानां पवित्रं पावनकारणमसि। 'पुवस्संज्ञायाम्' इतीत्रप्रत्ययः। त्वं हि देव एव सन् देवानां पवित्रमसीति भावः। केषाम्? येषां त्वं देवानां भागोसि तेषां पवित्रमसि। भज्यत इति भागः, कर्मणि घञ्, 'कर्षात्वतः' इत्यन्तोदात्तत्वम्। तस्मात्तेभ्यस्त्वां गृह्णामीति शेषः। त्वं चाभ्यामंशुभ्यां पवस्वात्मानमिति सम्बध्यते। 'देवो ह्येष सन् देवानां पवित्रम्'* इत्यादि ब्राह्मणम्। 'द्वादशकृत्वस्तृतीयं'* इत्यादि च ॥

[4]प्रतिप्रस्थातुर्हस्ताद्ग्रहमादत्ते—स्वां कृतोसीति ॥ स्वीकृतोसीत्यर्थः। अस्वस्स्वो भवतीति स्वाम्, च्विः, ईत्वापवाद आम्भावश्छान्दसः। 'ऊर्यादिच्विडाचश्च' इति गतित्वात् 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम्। 'प्राणमेव स्वमकृत'* इति ब्राह्मणम् ॥

[5]ग्रहमवेक्षते—मधुमतीरिति ॥ मधुमत्यः मधुररसाः इषः

*सं. ६-४-५.

न्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो

तीः । नः । इषः । कृधि । [6]विश्वेभ्यः । त्वा ।

अन्नानि नः अस्माकं कृधि कुरु । मधुमतीः कुर्विति वा । प्राणात्मना ग्रह उच्यते, 'प्राणो वा एष यदुपांशुः'* इति चाभेदं प्रतिपादयति । 'सर्वमेवास्मा इदं स्वदयति'* इति ब्राह्मणम् । करोतेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिभावः । 'कः करत्' इत्यादिना विसर्जनीयस्य सत्वम् ॥

[6]एनमूर्ध्वमुन्मार्ष्टि—विश्वेभ्य इति ॥ विश्वेभ्यः इन्द्रियेभ्य इन्द्रेणेश्वरेण सृष्टेभ्यः । 'इन्द्रियमिन्द्रलिङ्गम्' इत्यादौ निपात्यते । के पुनस्ते? देवा मनुष्याश्च । 'उभयेष्वेव देवमनुष्येषु प्राणान्दधाति'* इति ब्राह्मणम् । तानेवाह—दिव्येभ्यः पार्थिवेभ्य इति । दिवमर्हन्तीति दिव्याः† । 'छन्दसि च' इति यत्प्रत्ययः । पृथिव्यां भवाः पार्थिवाः । 'पृथिव्या ञाञौ' इत्यञ्प्रत्ययः । एतेभ्यस्त्वामुपांशुग्रहं प्राणभूतमुन्माज्मीति शेषः । एतेषां प्राणस्थित्यर्थं, यदाह 'उभयेष्वेव देवमनुष्येषु प्राणान्दधाति'* इति । यद्वा—इन्द्रियशब्देन चक्षुरादीनामाधिपतय आदित्यादय उच्यन्ते । तत्र दिव्यानि ज्ञाने‡न्द्रियाणि, पार्थिवानि कर्मेन्द्रियाणि, तदर्थं त्वामुन्माज्मीति ॥

*सं. ६-४-५. †ख-ग—दिवमर्हतीति दिव्याः. ‡ग—बुद्धी.

मनस्त्वाष्टूर्वन्तरिक्षमन्विहि स्वा-

इन्द्रियेभ्यः । दिव्येभ्यः । पार्थिवेभ्यः । [7]मनः । त्वा । अष्टु । [8]उरु । अन्तरिक्षम् । अन्विति । इहि । [9]स्वाहा । त्वा । सुभव इति सु-भवः ।

---

[7]तमादायोत्तिष्ठति—मनस्त्वाष्ट्विति ॥ मननधर्मा* प्राणो मन इत्युच्यते । सूर्यात्मना हे ग्रह मनस्त्वा त्वामष्टु अश्नुतां व्याप्नोतु । अश्नोतेर्व्यत्ययेन परस्मैपदम्, 'बहुलं छन्दसि' इति शपो लुक्, व्रश्चादिना षत्वम् । 'मनस्त्वाष्ट्वित्याह मन एवाश्नुते,† इत्यादि ब्राह्मणम् ॥

[8]आहवनीयं प्रति गच्छति—उर्विति ॥ व्याख्यातम्‡ । 'अन्तरिक्षदेवत्यो हि प्राणः'† इत्यादिब्राह्मणम् ॥

[9]जुहोति—स्वाहा त्वेति ॥ हे ग्रह उपांशो त्वा त्वां स्वाहा स्वाहुतं करोमीति शेषः । हे सुभवः हे प्राणात्मक, उक्तं हि—'प्राणो वा एष यदुपांशुः'† इति । तत्र स्वस्मादात्मनो जाताः स्वभवसः प्राणाः । 'गतिकारकयोरपि' इति भवतेरसुन् । 'प्राणा वै स्वभवसो देवाः'† इति च ब्राह्मणम् । तत्र स्वभवसो देवान् सुभव इत्याचष्टे परोक्षत्वाय । 'तेष्वेव परोक्षं जुहोति'† इत्यादि ब्राह्मणम् । तत्र पूर्वपदस्य सम्प्रसारणं, उत्तरपदस्य विभक्तिव्यत्ययः कृतः । सूर्याय प्राणानामात्मभूताय त्वां स्वाहुतं करोमीति ॥

---

*ख—मननपर. †सं. ६-४-५. ‡सं. १-१-२

ह्यं त्वा सुभवस्सूर्याय देवेभ्यस्त्वा मरीचिपेभ्य एष ते योनिः प्राणाय त्वा ॥ ३ ॥

सूर्याय । [10]देवेभ्यः । त्वा । मरीचिपेभ्य इति मरीचि-पेभ्यः । [11]एषः । ते । योनिः । [12]प्राणायेति प्र-अनाय । त्वा ॥ ३ ॥

वाचस्सप्तचत्वारिंशत् ॥ २ ॥

[10]ग्रहलेपं पाणिना मध्यमे परिधौ निमार्ष्टि—देवेभ्यस्त्वेति ॥ मरीचिशब्देन मरीचिमान् सूर्य उच्यते, यस्मै ग्रहः पूर्वं हुतः । 'लुगकारेकाररेफाश्च' इति मत्वर्थीयस्य लुक् । साहचर्याद्वोच्यते । मरीचिमत्सूर्यमण्डलं पान्ति रक्षन्तीति मरीचिपाः रश्मयः । 'आदित्यस्य वै रश्मयो देवा मरीचिपाः'* इति ब्राह्मणम् । यद्वा—आदित्यस्य मरीचिनैव विश्वं पान्ति तामेव पिबन्तीति वा मरीचिपाः देवविशेषाः । 'आदित्यस्य वै रश्मयः'* इति च गुणभूतत्वमुच्यते । आदित्यस्य रश्मिस्थानीया इति यावत् । तेभ्यो देवेभ्यस्त्वां ग्रहलेपं निमार्ज्मीति शेषः ॥

[11]आग्रयणस्थाल्याः ग्रहस्य संस्रावमपनयाति—एष ते योनिरिति॥ हे उपांशुसंस्राव एष आग्रयणस्थाल्याख्यस्ते तव योनिः स्थानम्, यत्र निहितस्त्वं यागसिद्ध्यै सम्पत्स्यसे । अतस्तं प्रविशेति शेषः ॥

[12]उपांशुपात्रं दक्षिणत उपांशुसवनेन संस्पृष्टं सादयति—प्राणाय त्वेति ॥ प्राणार्थं त्वां सादयामीति शेषः । थाथादिस्वरेणा-

*सं. ६-४-५.

उपयामगृहीतोस्यन्तर्यच्छ मघव-

[1]उपयामगृहीत इत्युपयाम-गृहीतः । असि ।

न्तोदात्तः प्राणशब्दः । 'प्राणापानौ वा एतौ यदुपांश्वन्तर्यामौ व्यान उपांशुसवनः'* इत्यादि ब्राह्मणम्, 'सर्वमायुरेति'* इत्यन्तम् ॥

इति चतुर्थे द्वितीयः.

[1]उदित आदित्येन्तर्यामं गृह्णाति अतिधारया† पवमानस्य राज्ञः—उपयामगृहीतोसि ॥ उपयम्यन्ते स्वात्मन्येव नियम्यन्ते भूतजातान्यस्मिन् अभिन्नेधिकरणे इत्युपयामः‡ पृथ्वी । 'इयं वा उपयामः'§ इति ब्राह्मणम् । 'हलश्च' इति घञ्, थाथादिस्वरेणान्तोदात्तत्वम् । तेन गृहीतस्त्वमसि ; कोन्यस्त्वां गृहीतुं क्षम इति भावः ; पृथिव्यापो गृहीष्यामीतिवत् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । यद्वा—उपयामार्थं पृथिव्यर्थं गृहीतोसीति; हे सोम । ननु 'स्वाहा त्वा सुभवस्सूर्याय'¶ इति मन्त्रवर्णात् सूर्यदेवत्यः कथं पृथिवीदेवत्यः स्यात्? नैतद्देवताभिधानं ; पृथिवीवासिनां प्रजानां यागद्वारेण स्थित्यर्थं गृहीतोसीति स्तूयते । यद्वा—पृथिव्यपि देवतैवास्य 'उपयामगृहीतोसीत्याहादितिदेवत्यास्तेन'** इति, अदितिः पृथ्वी । 'चतुर्थी' इति योगविभागात्समासः । 'क्ते च' इति पूर्वपदप्रकृतिस्वरत्वम् । 'इयं वा उपयामस्तस्मादिमां प्रजा अनु प्र जायन्ते'§ इति ब्राह्मणम् ॥

*सं. ६-४-६. †क-धारायाः. ‡क-स्मिन्ननेन वा उपयामः.
§सं. ६-५-८. ¶सं. १-४-२९ **सं. ६-४-७

न्पाहि सोमंमुरुष्य रायस्समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी

[2]अन्तः । यच्छ । मघवन्निति मघ-वन् । पाहि । सोमम् । उरुष्य । रायः । समिति । इषः । यज-स्व । अन्तः । ते । दधामि । द्यावापृथिवी इति

[2]सम्प्रति सोमस्य स्वामिनं प्रार्थयते—'अन्तर्यच्छ' इत्यादि-कयाऽष्टचा षट्पदया । 'अन्तरुर्वन्तरिक्षम्' इति चतुर्थः पादः, अन्य एकादशाक्षराः । ननु पुरस्तादुपयामत्वाद्यजुषानेन भवि-तव्यम्, यथा 'पुरस्तादुपयामा यजुषा गृह्यन्ते'* इति । नैवम्; वृत्तिसंयोगादृचैवानया भवितव्यम् । किञ्च, पुरस्तादुपयामाम्नान-मेवास्य ऋक्त्वे लिङ्गम्; तथा हि—'ये यजुषा गृह्यन्ते ते पुर-स्तादुपयामाः कार्याः' इति वचनप्राप्तत्वादेव पुरस्तादुपयामस्य पाठोनर्थकस्स्यात् । ऋक्त्वे तु 'ये ऋचा गृह्यन्ते ते उपरिष्टा-दुपयामाः कार्याः' इति प्राप्ते तदपवादत्वेन पुरस्तादुपयामस्य पाठो युज्यते । एष एव न्यायः 'उपयामगृहीतोसीन्द्राय त्वा बृहद्वते'† इत्यत्रापि । 'आ वायो भूष शुचिपाः'‡ इत्यादय ऋच उपरिष्टादुपयामाः पठ्यन्ते । ऋचामेव हि पुरस्तादुपरिष्टाद्वा उपयामः पठ्यते; यजूंषि पुनः निरुपयामान्येव पठ्यन्ते 'सु-शर्मासि'§ इत्यादीनि । तेषां तु वचनप्राप्तं पुरस्तादुपयामत्वम् । तत्रापि क्वचिदपवादत्वेन उपरिष्टादुपयामत्वमारभ्यते, 'मधुश्च माधवश्च'¶ इत्यादौ । अन्ये तु—तान्यपि पुरस्तादुपयामान्येवेत्याहुः;

*सं. ६-५-१०. †सं.१-४-१२. ‡सं.१-४-४[1]. §सं.१-४-२६. ¶सं.१-४-१४.

# अन्तरुर्वन्तरिक्षꣳ सजोषा देवै- रवरैः परैश्चान्तर्यामे मघवन्मा-

द्यावा-पृथिवी । अन्तः । उरु । अन्तरिक्षम् । स-जोषा इति स-जोषाः । देवैः । अवरैः । परैः । च । अन्तर्याम इत्यन्तः-यामे । मघवन्निति म-

यथा—'उपयामगृहीतोसि' इति 'मधुश्च'* इत्यादि ॥ मन्त्रार्थस्तूच्यते—हे मघवन् धनवन् इन्द्र, सोमेन धनेनान्नेन वा, इमं गृह्यमाणं सोमं, होमकाले सूर्यात्मना स्थित्वा, पाहि पिब, पीत्वा चान्तरुदरस्य मध्ये यच्छ स्थापय । पिबतेर्लोटि 'बहुलं छन्दसि' इति शपो लुक्, वाक्यादित्वान्न निहन्यते । एवमुरुष्य रक्ष रायः धनानि च यजमानस्य स्वभूतानि । छान्दसः कण्ड्वादियगन्तः उरुष्यतिः । किञ्च, इषः अन्नानि संयजस्व सम्यक्सङ्गमय, देहि वा यजमानाय । यद्वा—इषः प्रजा एषणीयत्वात्, तास्सम्यग्याजय यथा यजनशीला भवन्ति तथा कुरु । अन्तर्भावितण्यर्थोत्र यजिः, णिलुग्वा 'बहुलं संज्ञाच्छन्दसोः' इति । किञ्च, ते तव प्रसादादहं द्यावापृथिवी द्यावापृथिव्यौ उरु चान्तरिक्षं अनेन ग्रहेणान्तर्दधामि अन्तर्हितं करोमि भ्रातृव्याणाम्, यथा भ्रातृव्यैरदृश्यमाना एषु लोकेषु यजेम । यद्वा—भ्रातृव्याणामस्माकं च मध्ये इमान् लोकान्दधामि एभ्यो लोकेभ्यस्स्तानपसारयामीत्यर्थः । यद्वा—द्युप्रभृतिभिश्शब्दैस्तत्स्था भ्रातृव्या उच्यन्ते, ताननन्तर्दधामि अन्तरितान्करोमि नाशयामीत्यर्थः । 'एभिरेव लोकैर्यजमानो भ्रातृव्यानन्तर्धत्ते'† इति ब्राह्मणम् । यद्वा—द्युप्रभृतीन् लोकान् मदी-

*सं.१-४-१४, †सं.६-४-६.

दयस्व स्वाङ्कृतोसि मधुमतीर्न

घ-वन्न् । मादयस्व । [3]स्वाङ्कृतः । असि । [4]मधुम-

येन तेजसान्तर्दधामि छादयामि यथा*हमेवेदं सर्वं स्यां, यथान्तर्यामेण सर्वमन्तर्धाय त्वमेव सर्वमभूः । यथा 'ते देवा अमन्यन्तेन्द्रो वा इदमभूद्यद्वयꣳ स्म इति तेब्रुवन्मघवन्ननु न आ भज '† इति; इन्द्र एवेदं सर्वमभूत्, यद्वयमपि भवितुमिच्छामः; तस्मान्मघवन्नस्मानाभज विभक्तान्कुर्विति तेब्रुवन् देवाः; मवत्वांस्तानपि ये चैव देवाः परे उपरिस्थिताः उत्तमाः ये चावरे अधस्स्थिता निकृष्टास्तानुभयानन्वाभजत् विभक्तानकरोदिति । तदिदमाह—अवरैः परैश्च देवैस्सजोषाः सहप्रीयमाणः सेवमानो वा । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । अन्तर्यामे हूयमाने, मघवन् मादयस्व तर्पयस्व यज्ञात्मना‡ स्थितमात्मानं द्विप्रकारांश्च देवान् न केवलमात्मानमेव । 'यज्ञादेव यजमानं नान्तरेति '† इति ब्राह्मणम् । 'देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा उपांशौ यज्ञं सꣳस्थाप्यमपश्यन् '† इत्यादि ब्राह्मणम् । 'यदुभावपवित्रौ गृह्येयाताम् '† इत्यादि च । केचिदाहुः—हे मघवन् सोममिममन्तर्यच्छ तस्याधोदेशे निधाय तिरोहितं कुरु । तथा च कृत्वा पाहि रक्ष यथा न मे भ्रातृव्याः पश्येयुः । 'उरुष्य रायः' इत्यादि पूर्ववत् §॥

[3]स्वां कृतोसीति ग्रहमादत्ते ॥

[4]मधुमतीर्न इतीक्षते ॥

*ख.—तथा. †सं. ६-४-६. ‡क.—स्वयं सूर्यात्मना. §सं. १-४-३[2].

इ॒षस्कृ॑धि॒ विश्वे॑भ्यस्त्वेन्द्रि॒येभ्यो॑ दि॒व्येभ्य॒ः पार्थि॑वेभ्यो॒ मन॑स्त्वाष्टू॒-
र्व॑न्तरि॑क्ष॒मन्वि॑हि॒ स्वाहा॑ त्वा सु॒भ॒-
व॒स्सूर्या॑य दे॒वेभ्य॑स्त्वा मरीचि॒पेभ्य॑
ए॒ष ते॒ योनि॑रपा॒नाय॑ त्वा ॥ ४ ॥

ती॒रिति॒ मधु॑-म॒तीः । न॒ः । इष॑ः । कृ॒धि॒ । [5]विश्वे॑-भ्यः । त्वा॒ । इ॒न्द्रि॒येभ्य॑ः । दि॒व्येभ्य॑ः । पार्थि॑वे-भ्यः । [6]मन॑ः । त्वा॒ । अ॒ष्टु॒ । [7]उ॒रु । अ॒न्तरि॑क्षम् । अन्विति॑ । इ॒हि॒ । [8]स्वाहा॑ । त्वा॒ । सु॒भ॒व॒ इति॑ सु॒-भ॒व॒ः । सूर्या॑य । [9]दे॒वेभ्य॑ः । त्वा॒ । म॒री॒चि॒पेभ्य॒ इति॑ मरीचि-पेभ्य॑ः । [10]ए॒ष॒ः । ते॒ । योनि॑ः । [11]अ॒पा॒नायेत्य॑प-अ॒नाय॑ । त्वा॒ ॥ ४ ॥

दे॒वेभ्य॑स्स॒प्त च॑ ॥ ३ ॥

---

[5]विश्वेभ्य इत्युन्मार्ष्टि ॥
[6]मनस्त्वेत्युत्तिष्ठति ॥
[7]उर्वन्तरिक्षमित्येति ॥
[8]स्वाहेत्याहवनीये जुहोति ॥
[9]देवेभ्य इति परिधौ निमार्ष्टि ॥
[10]एष ते योनिरित्याग्रयणस्थाल्यां संस्रावमपनयति ॥
[11]उत्तरत उपांशुसवनेन संस्पृष्टं सादयति—अपानाय त्वेति ॥
व्याख्याता मन्त्राः* ॥

इति चतुर्थे तृतीयः.

---

*सं. १—४—२.[4-12]

आ वायो भूष शुचिपा उप नस्स-
हस्रन्ते नियुतो विश्ववार । उपो
ते अन्धो मद्यमयामि यस्य देव

[1]एति । वायो इति । भूष । शुचिपा इति शुचि-पाः । उपेति । नः । सहस्रम् । ते । नियुत इति नि-युतः । विश्ववारेति विश्व-वार । उपो इति । ते । अन्धः । मद्यम् । अयामि । यस्य ।

[1]ऐन्द्रवायवपात्रेण वायव्यं गृह्णाति—आवायो इति चतुष्पदया त्रिष्टुभा ॥ हे वायो शुचिपाः शुचेश्शुद्धस्य पातः । उपेत्युपसर्गश्रुतेर्योग्यं क्रियापदमध्याह्रियते । नः अस्मानुपेत्य, इममस्मदीयं सोमं पानेनाभूष आ समन्तादलं*कुरु । यद्वा—अस्मदीयं यज्ञमागमनेनालङ्कुरु । भूष अलङ्कारे, भौवादिकः । कथमनेनागमनेन यज्ञोलङ्क्रियत इत्याह—विश्ववार निजबलेन† विश्वस्यावारक‡, विश्वेषां वा वरणीय, ते तव सहस्रं नियुतः अश्वाः, अतस्तवैवागमनं भूषणाय भवति । हे वायो नियुतमश्वा अस्मानुपयान्तु§ । यद्वा—वायो आभूषय यज्ञं । तदर्थं किं क्रियतामित्याह—तव सहस्रं नियुतः अस्मानुपागच्छन्तु । यद्वा—भूषेत्यामन्त्रितमेव, भूषयतीति भूषः अलङ्कर्ता¶ कस्य? तस्य यत्र

*ख—न्तादच्छिन्नं. †ख—निजवेगेन.
‡ख—विश्वप्यापारन्. ग.—विश्वव्यापारक.
§क—भवति । वायोरश्वा नियुतः. ¶ख—अश्रितालङ्कर्ता.

दधिषे पूर्वपेयम् । उपयामगृहीतोऽसि वायवे त्वेन्द्रवायू इमे सुताः ।

देव । दधिषे । पूर्वपेयमिति पूर्व-पेयम् । उपयामगृहीत इत्युपयाम-गृहीतः । असि । वायवे । त्वा । [2]इन्द्रवायू इतीन्द्र-वायू । इमे । सुताः ।

---

यत्र गच्छतीति । हे एवंगुणक वायो, तव सहस्रं नियुतोऽस्मानुपयन्तु तैस्सहितस्सन्नस्मत्सकाशमागच्छेत्यर्थः । उपसर्गद्वयेन क्रियापदमध्याह्रियते । उपो इत्युपशब्दस्यार्थे वर्तते । उपो अयामि समीपं प्रापयामि । किं ? सोमम् । अहं तुभ्यमागताय सोममुपहरामि । इ गतौ भौवादिकः अन्तर्भावितण्यर्थः, णिलुग्वा । कीदृशमित्याह—अन्धः अदनीयम् । 'अदेर्नुम्धश्च' इत्यसुन् । मद्यं मदकरम् । 'गदमदचर' इत्यादिना यत्, 'यतो नावः' इत्याद्युदात्तत्वम् । पुनश्च सोमो विशेष्यते—हे देव वायो यस्य पूर्वपेयं प्रथमपानं त्वं दधिषे दधासि आचरसि, यं लब्ध्वा प्रथमं पिबसि, अन्यमग्रेपिबन्तं न क्षमसे यागेषु । 'छन्दसि लुङ्लङ्लिटः' इति दधातेर्लिट् । पिबतेर्भावे 'अचो यत्', कृदुत्तरपदप्रकृतिस्वरत्वम्, 'यतो नावः' ॥

एवमिमामनुद्रुत्य गृह्णाति ॥ हे सोम, त्वमपि उपयामगृहीतोऽसि, अतो वायवे त्वां गृह्णामीति शेषः । जुष्टमिति केचिच्छेषमिच्छन्ति, इष्टं सेव्यं वा गृह्णामीत्यर्थः ॥

[2]तस्मिन्नैन्द्रवायवं गृह्णाति—इन्द्रवायू इति गायत्र्या ॥ हे इन्द्रवायू इमे सोमास्सुताः अभिषुताः युष्मदर्थं सम्यक्संस्कृताः,

उप प्रयोभिरा गतमिन्दवो वामुशन्ति हि । उपयामगृहीतोसीन्द्रवायुभ्यान्त्वैष ते योनिस्सजोषाभ्यान्त्वा ॥ ५ ॥

उपेति । प्रयोभिरिति प्रयः—भिः । एति । गतम् । इन्दवः । वाम् । उशन्ति । हि । उपयामगृहीत इत्युपयाम—गृहीतः । असि । इन्द्रवायुभ्यामितीन्द्रवायु—भ्याम् । त्वा । [3]एषः । ते । योनिः । सजोषाभ्यामिति स—जोषाभ्याम् । त्वा ॥ ५ ॥

आ वायो त्रिचत्वारिंशत् ॥ ४ ॥

---

अतः उपागतं उपागच्छतम् । ' बहुलं छन्दसि ' इति शपो लुक् । प्रयोभिरन्नैस्सह यान्यस्मभ्यं दास्यसे* तान्यप्यादायागच्छतामिति । प्रीणातेरसुन्प्रत्ययः । हि यस्मादर्थे, यस्मादेते इन्दवः सोमा वां युवां उशन्ति कामयन्ते युवयोरागमनं प्रतीक्षन्ते, तस्मादुपागच्छतमिति । ' उन्देरिच्चादेः ' इत्युप्रत्ययः, आदेरिः, ' यद्धितुपरं छन्दसि ' इति निघातप्रतिषेधः ॥

इमामनुद्रुत्य उपयामगृहीतोसीन्द्रवायुभ्यां त्वेति गृह्णाति ॥

[3]सादयति ॥ एष ते योनिः स्थानम् । ततस्सजोषाभ्यां समानप्रीतिभ्यां, सहसेवमानाभ्यां वा इन्द्रवायुभ्यां त्वामत्र साद-

---

*ख—प्रयोभिः प्रीयमाणैः सह ये प्रीयन्ते.

अयं वाम्मित्रावरुणा सुतस्सोम ऋतावृधा । ममेदिह श्रुतꣳ हवम् । उपयामगृहीतोसि मित्रावरु-

[1]अयम् । वाम् । मित्रावरुणेति मित्रा—वरुणा । सुतः । सोमः । ऋतावृधेत्यृत—वृधा । मम । इत् । इह । श्रुतम् । हवम् । उपयामगृहीत इत्युपयाम—गृहीतः । असि । मित्रावरुणाभ्यामिति मित्रा—

यामीति शेषः । 'देवताद्वन्द्वे च' इत्यस्य पूर्वोत्तरपदप्रकृतिस्वरत्वस्य 'नोत्तरपदेनुदात्तादौ' इति प्रतिषेधे, समासान्तोदात्तत्वमेवेन्द्रवायुशब्दस्य । 'वाग्वा एषा यदैन्द्रवायवः'* इत्यादि ब्राह्मणम् । 'सोब्रवीद्वरं वृणै मह्यं चैवैषः'* इत्यादि च ॥

इति चतुर्थे चतुर्थः.

---

[1]मैत्रावरुणं गृह्णाति—अयं वामिति गायत्र्या त्रिपदया ॥ हे मित्रावरुणा मित्रावरुणौ, ऋतावृधा ऋतावृधौ, ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितारौ । उभयत्र 'सुपां सुलुक्' इत्याकारः । 'वृधेः क्विप्'† 'अन्येषामपि दृश्यते' इत्युपपदस्य दीर्घः । अयं सोमः वां युवयोः अर्थाय सुतः अभिषुतः । इदिति हेतौ । यस्मादेवं तस्मादिहास्मिन्कर्मणि मम हवमाह्वानं श्रुतं श्रुणुतम् ।

*सं. ६-४-७. †ख,वृधाशब्दे परतः.

णाभ्यां त्वैष ते योनिर् ऋतायुभ्यां त्वा ॥ ६ ॥

वरुणाभ्याम् । त्वा । [2]एषः । ते । योनिः । ऋतायुभ्यामित्यृतायु-भ्याम् । त्वा ॥ ६ ॥

अयं वां विंशतिः ॥ ५ ॥

---

श्रुत्वा चागत्य सोमं पिबतमित्यर्थः । 'भावेनुपसर्गस्य' इति ह्वयतेरप्सम्प्रसारणं च । शृणोतेर्लेटि 'बहुलं छन्दसि' इति शपो लुक् ॥

इमामनुद्रुत्य उपयामगृहीतोसि मित्रावरुणाभ्यां त्वेति गृह्णाति ॥ 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥

[2]एष ते योनिर् ऋतायुभ्यां त्वेतिसादयति ॥ ऋतं सत्यं यज्ञं वा आत्मनो यजमानानां वा इच्छतीति ऋतायुः । 'छन्दसि परेच्छायामपि' इति क्यच्, 'न च्छन्दस्यपुत्रस्य' इतीत्वप्रतिषेधः, 'क्याच्छन्दसि' इत्युप्रत्ययः । 'मित्रं देवा अब्रुवन्'* इत्यादि ब्राह्मणम् । 'सोब्रवीद्वरं वृणै मह्यं चैवैष मित्राय च'* इत्यादि च । 'तावब्रूतां वरं वृणावहा एक एवावत्पूर्वो ग्रहो गृह्यातै'* इत्यादि च ॥

इति चतुर्थे पञ्चमः.

---

*सं. ६-४-८.

या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् । उपयामगृहीतोस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वा ॥ ७ ॥

[1]या । वाम् । कशा । मधुमतीति मधु-मती । अश्विना । सूनृतावतीति सूनृता-वती । तया । यज्ञम् । मिमिक्षतम् । उपयामगृहीत इत्युपयाम-गृहीतः । असि । अश्विभ्यामित्यश्वि-भ्याम् । त्वा । [2]एषः । ते । योनिः । माध्वीभ्याम् । त्वा ॥७॥

या वामष्टादश ॥ ६ ॥

[1]बहिष्पवमाने स्तुते आश्विनं गृह्णाति—या वां कशेति गायत्र्या त्रिपदया ॥ हे अश्विना अश्विनौ । पूर्ववदाकारः । मधुमती मधुकर-रसवती । सूनृतावती, प्रियं सूनृतं वचनं, तद्वती । 'अन्येषा-मपि दृश्यते' इति दीर्घत्वम् । ईदृशी या वां युवयोः, कशा वाक्प्रवृत्तिस्सूक्ति*लक्षणा युष्मद्विषयास्माभिः क्रियमाणा, तया हेतुभूतया तां श्रोतुं यज्ञमिमं मिमिक्षतम् आगत्योत्पादयितुमिच्छ-तम् । मिहेस्सनि ढत्वे 'षढोः कस्सि' इति कत्वम् । तया वा करणभूतया यज्ञं निर्वर्तयतम् ॥

इत्यनुद्रुत्य उपयामगृहीतोस्यश्विभ्यां त्वेति गृह्णाति ॥

[2]एष ते योनिर्माध्वीभ्यां त्वेतिसादयति ॥ मध्वस्यास्तीति मध्वम् मधुभाजनं, दृतिरूपम् । 'यो हि वां मधुनो दृतिः'

*ख—स्सूक्त.

प्रातर्युजौ वि मुच्येथामश्विनावेह ग-
च्छतम् । अस्य सोमस्य पीतये ।

[1]प्रातर्युजाविति प्रातः-युजौ । वीति । मुच्ये-
थाम् । अश्विनौ । एति । इह । गच्छतम् । अस्य ।
सोमस्य । पीतये । उपयामगृहीत इत्युपयाम-
गृहीतः । असि । अश्विभ्यामित्यश्वि-भ्याम् ।

---

इत्यादौ प्रसिद्धम् । तदन्तान्मत्वर्थीय इकारः । 'ऋत्व्यवा-स्त्व्यवास्त्व' इत्यादौ 'माध्वी' इति निपात्यते । यद्वा—मध्वेव माध्वी, आग्नीध्रादिवत्स्वार्थेऽञ्, माध्वीभ्यामिति मधुमद्भ्या-मित्यर्थः । 'यज्ञस्य शिरोच्छिद्यत ते देवा अश्विनावब्रुवन्'* इत्यादि ब्राह्मणम् । 'ते देवा अब्रुवन्नपूतौ वा इमौ' इत्यादि च* 'तस्माद्बहिष्पवमाने स्तुत आश्विनो गृह्यते' इत्यन्तम्* । 'वाग्वा ऐन्द्रवायवः'* इत्यादि च ॥

इति चतुर्थे षष्ठोनुवाकः.

---

[1]पुनरप्याश्विनग्रहणमन्त्रः—प्रातर्युजाविति गायत्री त्रिपदा । पूर्वेण सहास्य विकल्पः ॥ हे अश्विनौ यौ युवां प्रातर्युजौ प्रातर्योक्तारौ तौ विमुच्येथाम् यजमानान्तरैर्विमुक्तौ भवतं अन्य-यजमानान्विहाय इहास्मिन्कर्मण्यागच्छतम् । किमर्थम्? अस्य सोमस्य पीतये पानाय । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्, पानविशेषस्य संज्ञात्वात् ॥

---

*सं, ६-४-९.

उपयामगृहीतोस्यश्विभ्यां त्वैष ते योनिरश्विभ्यां त्वा ॥ ८ ॥

अयं वेनश्चोदयत्पृश्निगर्भा ज्योति-

त्वा । [2]एषः । ते । योनिः । अश्विभ्यामित्यश्वि-भ्याम् । त्वा ॥ ८ ॥

प्रातर्युजावेकान्नविꣳशतिः ॥ ७ ॥

[1]अयम् । वेनः । चोदयत् । पृश्निगर्भा इति पृश्नि-गर्भाः । ज्योतिर्जरायुरिति ज्योतिः-जरा-

---

इत्यनुद्रुत्योपयामगृहीतोस्यश्विभ्यां त्वेति गृह्णाति ॥

[2]एष ते योनिरश्विभ्यां त्वेति सादयति ॥

इति चतुर्थे सप्तमोनुवाकः.

---

[1]शुक्रं गृह्णाति—अयं वेन इति त्रिष्टुभा चतुष्पदया ॥ वेनतेः कान्तिकर्मणो वेनः कान्तः वर्षाद्यभीष्टप्रद उच्यते । ज्योतिर्जरायुः ज्योतिर्जरायुस्थानीयमाच्छादकं, यस्य जरायुणा गर्भ इव तेजसा वेष्टितस्तेजोराशिरित्यर्थः । ईदृशोयं वेनशब्दवाच्य इन्द्रः, पृश्निरादित्यः तस्मिन्गर्भाः पृश्निगर्भाः गर्भ्यमाणाः । पचाद्यच् । गर्भवद्धर्यमाना आपः, भूमिगतान्हि रसान्सूर्यरश्मयो वायुना सह सूर्यमण्डले स्थापयन्ति, ते च तस्मिन्वर्धन्ते, आगामिसंवत्सरवृष्ट्य-

जरायू रजसो विमाने । इममपा॑ संगमे सूर्यस्य शिशुन्न विप्रा मति-

युः । रजसः । विमान इति वि-माने । इमम् । अपाम् । सङ्गम इति सं-गमे । सूर्यस्य । शिशुम् । न । विप्राः । मतिभिरिति मति-भिः ।

र्थम् । यथोक्तं—'समानमेतदुदकम्'* इत्यादि । सप्तमीपूर्वपदप्रकृतिस्वरत्वम् । ताश्च स्वकाले सूर्येण समर्पिताश्चोदयत् चोदयति । लेट् । भुवं प्रतिप्रेरयत्ययमादित्यो वेनः । तथा चोक्तम्—'यदा खलु वा असावादित्यो न्यङ्रश्मिभिः'† इत्यादि। कुत्र स्थितोयमेवं करोतीत्यत आह—रजस उदकस्य विमाने निर्माणस्थानेन्तरिक्षे । कृदुत्तरपदप्रकृतिस्वरत्वम् । य एवं प्रजानामुपकरोतीमं वेनं खलु विप्रा मेधाविनो मतिभिर्बुद्धिभिः रिहन्ति लिहन्ति । रलयोरेकत्वं स्मरन्ति । स्तुवन्ति पूजयन्ति बुद्धिपूर्वकमेव ते स्तवादि कुर्वन्तीति भावः । हविःप्रदानादिना संवर्धयन्तो न त्यजन्तीत्यर्थः । 'मन्त्रे वृष' इति क्तिन उदात्तत्वम् । शिशुं न शिशुमिव यथा शिशुं क्षीरादिदानेन संवर्धयन्ति । किमर्थं? सूर्यस्यापां च सङ्गमे सङ्गमनाय सूर्यस्याद्भिस्सङ्गमो यथा स्यात् वृद्ध्यर्थं‡ तदर्थमित्यर्थः । 'ग्रहवृद्दनिश्चिगमश्च' इत्यप्, थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् । यद्वा—अयं वेनः कमनीयरूपः, ज्योतिर्जरायुः ज्योतिषा जरायुस्थानीयेन वेष्टितः रजसो विमाने स्थितः । रजोनाम गर्भधारणहेतुर्योनिस्थ उदकविशेषः ; तन्निर्माणस्थाने प्रजननस्थानीये स्थितः । पृश्निगर्भाः प्रेरयति काले प्रसूत्य-

*तै.आ. १-९. †सं. २-४-१०. ‡क—वृष्ट्याद्यर्थम्.

भीं रिहन्ति । उपयामगृहीतोसि श-
ण्डाय त्वैष ते योनिर्वीरतां पाहि ॥ १ ॥

रिहन्ति । उपयामगृहीत इत्युपयाम-गृहीतः । असि । शण्डाय । [2]त्वा । एषः । ते । योनिः । वीरताम् । पाहि ॥

अयं वेनः पञ्चविंशतिः ॥ ८ ॥

र्थं मातर*मिव त्वरयति । गर्भं करोतीति गर्भयिता गर्भः । पचाद्यच् । पृश्निर्गर्भो यासां ताः अपः प्रेरयति काले वृष्ट्यर्थम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । ततस्स पुत्रस्थानीयः प्रसूतः पर्जन्यात्मा वर्षति । एनमिमं वेनाख्यं सूर्यस्यापां सङ्गमे संयोगे प्रसूतं शिशुमिव विप्रा मतिभिः पूजयन्तीति । सूर्यो हि भार्यास्थानीया अपस्सङ्गच्छति†, वत्सरान्ते चायं‡ जायते, जातश्च वर्षति, । वृष्टं चोदकं रश्मय आदाय सूर्याय समर्पयन्ति, । स च ता अपस्सङ्गच्छतीति । यत एवं तस्मादहमपि तत्पूजार्थं शुक्रं गृह्णामीति शेषः । ननु शण्डाय गृह्यते ? सत्यं, इन्द्रायैव तु हूयते, 'इन्द्राय सुतमा जुहोमि '¶ इति होममन्त्रलिङ्गात् । 'तौ देवा अपनुद्यात्मन इन्द्रायाजुहवुः '§ इति च ब्राह्मणम् ॥

इमामनुद्रुत्योपयामगृहीतोसि शण्डाय त्वेति गृह्णाति ॥ शण्डो नामासुरपुरोहितः॥

[2]एष ते योनिर्वीरतां पाहीति सादयति ॥ वीरता शूरता यागलक्षणत्यागं प्रति । 'बृहस्पतिर्देवानां पुरोहित आसीत् '§ इत्या-

*ख—घातक. †ख-ग—च्छन् तत्र वर्तते गर्भस्थानीयः.
‡ख-ग—रान्तरे. §सं. ६-४-१०. ¶तै. ब्रा.१-१-१.

[1]तं प्रत्नथा पूर्वथा विश्वथेमथा. ज्ये-
ष्ठतातिं बर्हिषदꣳ सुवर्विदं प्रती-

[1]तम् । प्रत्नथा । पूर्वथा । विश्वथा । इमथा । ज्येष्ठतातिमिति ज्येष्ठ–तातिम् । बर्हिषदमिति बर्हि–सदम् । सुवर्विदमिति सुवः–विदम् ।

दि ब्राह्मणम् । 'असौ वा आदित्यश्शुक्रश्चन्द्रमा मन्थी '* इत्यादि, 'चक्षुषी वा एते यज्ञस्य यच्छुक्रामन्थिनौ '* इत्यादि च ॥

इति चतुर्थेष्टमः.

---

[1]मन्थिनं गृह्णाति—तं प्रत्नथेति चतुष्पदया जगत्या ॥ अत्रापि स एवेन्द्रः प्रत्यक्षेण स्तूयते । प्रत्नशब्दः पुराणवचनः । 'प्रगस्य गलोपः ' इति व्युत्पादितः । थेत्युपमायाम् । 'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ' इति थाल्, लिति प्रत्ययात्पूर्वस्योदात्तत्वम् । तमित्यत्र त्वां स्तुम इति शेषः । अयमर्थः—यथा शक्त्यादयः† पुराणास्त्वामस्तुवन् तथा वयमपि त्वां स्तुमः । यथा च ततोपि पूर्वे भृगुप्रभृतयो मदीयाः पित्रादयो वा त्वामस्तुवन् तथा वयं स्तुमः । यथा विश्वेपि त्वां स्तुवन्ति‡ तथा च स्तुमः । यथा वा इमे वर्तमानास्त्वां स्तुवन्ति तथा स्तुमः । कीदृशम्? ज्येष्ठतातिं प्रशस्यतमम् । 'वृकज्येष्ठाभ्याम् ' इति स्वार्थिकस्तातिल्प्रत्ययः । बर्हिषि यागे सीदतीति बर्हिषदं, पृषोदरादित्वात्सकार-

*सं. ६-४-१० †ख—यथा प्रत्नाः. ‡ख—यथा विश्वे च त्वामस्तुवन्.

चीनं वृजनं दोहसे गिराशुं जय-
न्तमनु यासु वर्धसे । उपयामगृही-

प्रतीचीनम् । वृजनम् । दोहसे । गिरा । आशुम् । जयन्तम् । अन्विति । यासु । वर्धसे । उपयाम-गृहीत इत्युपयाम-गृहीतः । असि । मकाय ।

लोपः, 'सत्सूद्विष' इत्यादिना क्विप् । सुवः स्वर्गमादित्यं वा वेत्तीति सुवर्विदम् । अधुनार्धर्चा*न्तरेण स्तुतिहेतुमाह—त्वां खलु प्रतीचीनं प्रतीचीनगतिं पराङ्मुखमपि सामर्थ्यान्मेघम् । 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खः । वृजनं बलवन्तम् । उभयत्र मत्वर्थीयोकारः† । प्रतीचीना गतिरस्यास्तीति प्रतीचीनम् । मत्वर्थीयोकारो लुप्यते । गिरा गर्जितलक्षणया शब्देन जयन्तं लोकानभिभवन्तम् । आशुं शीघ्रं, व्यापकं वा दिगन्तानां । 'कृपावाजि' इत्युण्प्रत्ययः । ईदृशं मेघं दोहसे क्षारयसि । विकरणव्यत्ययेन शप्, स्वरितेत् । य इति वाध्याह्रियते, यस्त्वं धोक्षि तं स्तुमः । क्व पुनस्तुमः? इति चेत्, आह—यासु क्रियासु यागलक्षणासु त्वमनुवर्धसे अनुक्रमेण वृद्धिं गच्छसि, स्तुत्यनन्तरं वा वृद्धिं गच्छसि, तासु स्तुमः । यद्वा—यासु स्तुतिषु त्वमनुवर्धसे स्तुतो वृद्धिं गच्छसि तास्स्तुतीः कुर्म इति शेषः । स्तुत्या हि स्तोतव्यो वर्धते, यथा 'वर्धन्तु त्वा सुष्टुतयः'‡ इति । यद्वा—ईदृशं मेघं दोहसे । कम्? वृजनं बलकरमुदकं गिरा गर्जितेनोपलक्षितः ॥

*ख—प्रकारा. †क—र्थीयः प्रागिवीयः कः. ‡सं. २-२-१२.

तोसि मर्काय त्वैष ते योनिः प्र-
जाः पाहि ॥ १० ॥
ये देवा दिव्येकादश स्थ पृथिव्या-

त्वा । [2]एषः । ते । योनिः । प्रजा इति प्र—जाः । पाहि ॥ १० ॥

तꣳ षड्विꣳशतिः ॥ १ ॥

[1]ये । देवाः । दिवि । एकादश । स्थ । पृथिव्याम् । अधीति । एकादश । स्थ । अप्सुषद्

इमामनुद्रुत्योपयामगृहीतोसि मर्काय त्वेति गृह्णाति ॥

[2]एष ते योनिः प्रजाः पाहीति सादयति ॥ प्रजाः यजमानस्य स्वभूतास्सर्वा वा ॥

इति चतुर्थे नवमः.

---

[1]आग्रयणं गृह्णाति—ये देवा इति चतुष्पदया पङ्क्त्या ॥ हे देवा ये यूयं दिवि द्युलोके एकादश स्थ एकश्च दश चेत्येकादश । 'सङ्ख्या' इति पूर्वपदप्रकृतिस्वरत्वम् । ये पृथिव्यामधि उपरि एकादश स्थ ये चाप्सुषदोन्तरिक्षसद एकादश स्थ । अप्सु सीदन्तीत्यप्सुषदः । 'तत्पुरुषे कृति' इत्यलुक्, सुषामादित्वात्षत्वम् । महिना महत्त्वेन । 'बहुलमन्यत्रापि' इति महेरिनच्प्रत्ययः, 'सुपां सुलुक्' इति तृतीयैकवचनस्य डादेशः ।

मध्येकादश स्थाप्सुषदो महिनैका-
दश स्थ ते देवा यज्ञमिमं जुषध्व-
मुपयामगृहीतो स्याग्रयणोसि स्वा-
ग्रयणो जिन्व यज्ञं जिन्व यज्ञप-
तिमभि सवना पाहि विष्णुस्त्वां

इत्यप्सु-सदः । महिना । एकादश । स्थ । ते । देवाः । यज्ञम् । इमम् । जुषध्वम् । उपयामगृहीत इत्युपयाम-गृहीतः । असि । आग्रयणः । असि । स्वाग्रयण इति सु-आग्रयणः । जिन्व । यज्ञम् । जिन्व । यज्ञपतिमिति यज्ञ-पतिम् । अभीति । सवना । पाहि । विष्णुः । त्वाम् ।

---

माहात्म्येन ह्यन्तरिक्षे सीदन्तीति । एवं त्रयस्त्रिंशदपि यूयं हे देवा इममाग्रयणसाध्यं यज्ञं जुषध्वम् सेवध्वम् । नन्वस्य ग्रहस्य देवस्सविता पत्नीवानग्निः हरिवानिन्द्रः इति देवताः, न तु विश्वे देवाः । सत्यम्; सवितर्यग्नाविन्द्रे च द्युपृथिव्यन्तरिक्षस्था दश दशान्ये देवा अन्तर्भूता इति तेपि जुषध्वमित्युच्यते । पत्नीवदभिप्रायं वा ॥

इमामनुद्रुत्य 'उपयामगृहीतोसि विश्वेभ्यस्त्वा देवेभ्यः' इति गृह्णाति ॥ अस्य ग्रहणमन्त्रस्य साकाङ्क्षत्वात्सादनमन्त्रे श्रुतं विश्वेभ्यस्त्वेति सम्बध्यते ॥

पा॒तु वि॒शं॑ त्वं पा॑ही॒न्द्रि॒येणै॒ष ते॒ योनि॒र्विश्वे॑भ्यस्त्वा दे॒वेभ्य॑ः ॥११॥

पा॒तु । वि॒शम् । त्वम् । पा॒हि॒ । इ॒न्द्रि॒येण॑ । [2]ए॒षः । ते॒ । योनि॑ः । विश्वे॑भ्यः । त्वा॒ । दे॒वेभ्य॑ः ॥ ११ ॥

ये दे॒वास्त्रिच॑त्वारिꣳशत् ॥ १० ॥

---

[2]अधिवदते ॥ आग्रयणोसि आग्रयणाख्यो ग्रहस्त्वमसि । अग्रे ईयते गृह्यत इत्यग्रयणः ग्रहाणामग्रेसरोसि । 'ते देवा आग्रयणाग्रान्ग्रहानपश्यन्'* इति ब्राह्मणम् । शकन्ध्वादित्वात्पररूपत्वम् । अग्रयण एवाग्रयणः । 'सान्नाय्यानुजावर' इत्यादिना स्वार्थिकोण्निपातितः । यद्वा—वाचा अग्रे प्रथममीयत इत्याग्रयणः । 'वाग्वै देवेभ्यः' इत्यादि ब्राह्मणं 'तदाग्रयणस्याग्रयणत्वम्'* इत्यन्तम् । स्वाग्रयणः, अग्रचं श्रैष्ठ्यं यन्ति प्राप्नुवन्त्यनेनेत्याग्रयणः, शोभन आग्रयणस्स्वाग्रयणः । त्वां गृहीत्वा देवा अग्रं पर्यायन् । तथा यजमानोपि त्वां गृहीत्वा समानानामग्रं पर्यैत्विति भावः । 'अग्रमेव समानानां पर्यैति' इति* ब्राह्मणम् । यस्मादीदृशस्त्वमसि तस्माज्जिन्व प्रीणय यज्ञं, यज्ञपतिं च जिन्व । उभयत्रापि वाक्यादित्वान्न निहन्यते । जिवि प्रीणने । सवना सवनानि, अभि पाहि आभिमुख्येन पालय तवाक्षीणतया । त्वयि हि क्षीणे प्रायश्चित्तप्रसङ्गादरक्षितानि सवनानि स्युः; तस्मान्मा क्षेष्ठा इत्यर्थः । तदर्थं भगवान्विष्णुस्त्वां पातु यस्सर्वं पाति । त्वमपि विशं प्रजां यजमा-

---

*सं. ६-४-११.

त्रि॒ꣳ॒शत्त्रय॑श्च ग॒णिनो॑ रु॒जन्तो॒
दिव॑ꣳ रु॒द्राः पृ॑थि॒वीं च॑ सचन्ते ।
ए॒का॒द॒शासो॑ अप्सु॒षद॑स्सु॒तꣳ सोम॑-
ञ्जुषन्ता॒ꣳ॒ सव॑नाय॒ विश्वे॑ । उ॒प॒या॒-
मगृ॑हीतोस्याग्रय॒णो॑ऽसि॒ स्वाग्र॑यणो॒

[1]त्रि॒ꣳ॒शत् । त्रयः॑ । च॒ । ग॒णिनः॑ । रु॒जन्तः॑ । दिव॑म् । रु॒द्राः । पृ॒थि॒वीम् । च॒ । स॒च॒न्ते॒ । ए॒का॒-द॒शासः॑ । अ॒प्सु॒षद॒ इत्य॑प्सु-सदः॑ । सु॒तम् । सोम॑म् । जु॒ष॒न्ता॒म् । सव॑नाय । विश्वे॑ । उ॒प॒या॒मगृ॒-ही॒त॒ इत्यु॑पया॒म-गृ॒ही॒तः॒ । अ॒सि॒ । [2]आ॒ग्र॒य॒णः ।

---

नस्य स्वभूतां पाहि सर्वां वा, इन्द्रियेणेत्थंभूतां प्रजामविकलेन्द्रि-यां कुर्वित्यर्थः ॥

[3]एवमनुद्रुत्य 'एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः' इति सादयति । 'वैश्वदेवो ह्येष देवतया'* इति ब्राह्मणम् । 'आत्मा वा एष यज्ञस्य यदाग्रयणः'* इत्यादि च ॥

इति चतुर्थे दशमोनुवाकः.

---

[1]आग्रयणमेव भ्रातृव्यवतो गृह्णाति—त्रिंशदिति चतुष्पदया त्रिष्टुभा ॥ 'रुग्णवत्यर्चा भ्रातृव्यवतः'* इति ब्राह्मणम् । त्रिंश-

*सं. ६-४-११.

जिन्वं यज्ञञ्जिन्वं यज्ञपतिमभि स-
वना पाहि विष्णुस्त्वाम्पातु विशं-

असि । स्वाग्रयण इति सु–आग्रयणः । जिन्वं । यज्ञम् । जिन्वं । यज्ञपतिमिति यज्ञ–पतिम् । अभीति । सवना । पाहि । विष्णुः । त्वाम् । पातु ।

---

त्त्रयश्च गणिनः गणवन्तः एकादशात्मकैस्त्रिभिर्गणैश्च तद्वन्तः रुजन्तस्सामर्थ्याद्भ्रातृव्यान् । रुजो भङ्गे तौदादिकः । रुद्राः रोदयितारः शत्रूणां नारीणाम् । 'रोदेर्णिलुक' इति रक्प्रत्ययः । एवंविधा एकादशास एकादशानां पूरणाः । पूरणप्रत्ययान्तात् 'आज्जसेरसुक्' । एतदुक्तं भवति—ये त्रिंशद्देवा दशवर्गत्रयात्मकाः ये च त्रयो गणिनः तत्तद्दशात्मकगणवन्त एकादशास्त्वयामिति इत्थं त्रयस्त्रिंशत्सम्पद्यन्ते । क पुनस्ते वर्तन्ते? इत्याह—ये दिवं सचन्ते सेवन्ते, ये च पृथिवीं, ये चाप्सुषदः अन्तरिक्षेणावतीर्णाः; पूरणप्रत्ययान्ता वा ये त्रयो गणिनः, त्रयश्च गणा वर्तन्त इति; ते च विश्वे देवाः इमं सुतं सोमं आग्रयणाख्यं जुषन्तां सेवन्तां सवनाय सवनार्थं तृतीयसवनार्थं; तत्र हि तस्य सावित्रपात्नीवतहारियोजनेषु विनियोगः । यद्वा—तृतीयसवने जुषन्तामिति सप्तम्यर्थे चतुर्थी । 'रुग्णवत्यर्चा भ्रातृव्यवतो गृह्णीयात्'* इति ब्राह्मणम् ॥

इत्यनुद्रुत्य उपयामगृहीतोसीति यजुरादिकया गृह्णाति ॥

---

*सं. ६-४-११.

न्त्वम्पाहीन्द्रियेणैष ते योनिर्विश्वे-
भ्यस्त्वा देवेभ्यः ॥ १२ ॥

उपयामगृहीतोसीन्द्राय त्वा बृहद्वते
वयस्वत उक्थायुवे यत्त इन्द्र बृह-

विशम् । त्वम् । पाहि । इन्द्रियेण । [3]एषः । ते । योनिः । विश्वेभ्यः । त्वा । देवेभ्यः ॥ १२ ॥

त्रिꣳशद्विचत्वारिꣳशत् ॥ ११ ॥

[1]उपयामगृहीत इत्युपयाम-गृहीतः । असि । इन्द्राय । त्वा । बृहद्वत इति बृहत्-वते । वयस्वते । उक्थायुव इत्युक्थ-युवे । यत् । ते । इन्द्र ।

---

[2]अधिवदते—आग्रयणोसीत्यादि ॥
[3]एष ते योनिरित्यादिना सादयति ॥

इति चतुर्थे एकादशः.

---

[1]स्थाल्योक्थ्यं गृह्णाति—उपयामगृहीतोसीति यजुरादिकया 'इन्द्राय त्वा बृहद्वते" इति चतुष्पदयानुष्टुभा । ऋक्त्वादुपरिष्टादुपयामत्वे प्राप्ते अपवादत्वेन पुरस्तादुपयामत्वमाम्नायते ॥ हे सोम उपयामगृहीतोसि, तस्मात्त्वामिन्द्राय वक्ष्यमाणगुणाय गृह्णामीति शेषः । बृहद्वते बृहता साम्ना पृष्ठाख्येन तद्वते । वयस्वते

द्वयस्तस्मै त्वा विष्णवे त्वैष ते
योनिरिन्द्राय त्वोक्थायुवे ॥ १३ ॥

बृहत् । वयः । तस्मै । त्वा । विष्णवे । त्वा । [2]एषः । ते । योनिः । इन्द्राय । त्वा । उक्थायुव इत्युक्थ–युवे ॥ १३ ॥

उपयामगृहीतो द्वाविꣳशतिः ॥ १२ ॥

---

अन्नवते । उक्थायुवे उक्थं शस्त्रं कामयमानाय । 'क्याच्छन्दसि' इत्युप्रत्ययः, 'न च्छन्दस्यपुत्रस्य' इतीत्वाभावः । 'जसादिषु वा वचनम्' इति 'घेर्ङिति' इति गुणाभावः । हे इन्द्र तव बृहत् प्रभूतं यद्वयः अन्नं सोमलक्षणं गृह्यमाणं तस्मै तदर्थं तत्पानार्थं त्वां प्रार्थयामह इति शेषः । विष्णवे व्यापकाय तस्मै वयसे त्वां प्रार्थयामह इति । यद्वा—हे सोम विष्णवे भगवते च त्वां गृह्णामीत्येव शेषः । अत्र विष्णुर्ग्रहणकाल एव देवता । यागकाले तु मित्रावरुणाविन्द्राग्नी च । विष्णुर्हि वृत्रवधे साहाय्यकमिन्द्रस्याचरत् । 'यदेव विष्णुरन्वतिष्ठत जहीति तस्माद्विष्णुमन्वाभजति'* इति ब्राह्मणम् । इन्द्रस्य सखा विष्णुः तस्मै तदर्थं तत्प्रीत्यर्थं इन्द्राय त्वां गृह्णामीति ॥

[2]'एष ते योनिरिन्द्राय त्वोक्थायुवे' इति सादयति । 'इन्द्रो वृत्राय वज्रमुदयच्छत्'* इत्यादि ब्राह्मणम् । 'चक्षुर्वा एतद्यज्ञस्य यदुक्थ्यः'* इत्यादि च ॥

इति चतुर्थे द्वादशः.

---

*सं. ६-५-१.

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम् । कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः । उपयामगृहीतो-

[1]मूर्धानम् । दिवः । अरतिम् । पृथिव्याः । वैश्वानरम् । ऋताय । जातम् । अग्निम् । कविम् । सम्राजमिति सं–राजम् । अतिथिम् । जनानाम् । आसन् । एति । पात्रम् । जनयन्त । देवाः ।

[1]स्थाल्या ध्रुवं गृह्णाति—मूर्धानमिति चतुष्पदया त्रिष्टुभा ॥ मूर्धानं शिरोभूतम् । कस्य? दिवः द्युलोकस्य । अरतिं गन्तारम् । 'वहादिभ्यश्चित्'* इत्यर्तेरतिप्रत्ययः । पृथिव्याश्च गन्तारं प्रजानां रक्षणार्थं पृथिव्यामपि वर्तमानम् । 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । वैश्वानरं विश्वेषां नराणां सम्बन्धिनम् । 'नरे संज्ञायाम्' इति पूर्वपदस्य दीर्घः । ऋताय सत्याय यज्ञाय वा जातम् । कविं मेधाविनम् । सम्राजं सम्यग्राजन्तम् । 'मो राजि समः क्वौ', कृदुत्तरपदप्रकृतिस्वरत्वम् । जनानां यजमानलक्षणानां अतिथिं यजमानगृहान् सातत्येन गच्छन्तम् । 'ऋतन्यञ्चि' इत्यादिना अततेरिथिन्प्रत्ययः । यजमानगृहेष्ववतन्तमित्यर्थः । ईदृशमग्निं देवाः पात्रमाजनयन्त आभिमुख्येन जनितवन्तः । पिबत्यनेनेति पात्रम् । 'ष्ट्रन् सर्वधातुभ्यः' इति ष्ट्रन्प्रत्ययः† । सोमं पातुं तत्पात्रतयाग्निं कृतवन्त इत्य-

*उणादौ तु 'वहित्रस्यर्तिभ्यश्चित्' इत्येव दृश्यते.

†ख—आभिमुख्येन जनयन्तः जनयति पिबत्यनेनेति आङ्पूर्वाज्जनेः 'सर्वधातुभ्यो ष्ट्रन्' इति ष्ट्रन्प्रत्ययः.

स्यग्नये त्वा वैश्वानराय ध्रुवोसि ध्रुवक्षितिर्ध्रुवाणान्ध्रुवतमोच्युताना-

उपयामगृहीत इत्युपयाम-गृहीतः । असि । अग्नये । त्वा । वैश्वानराय । ध्रुवः । असि । ध्रुव-क्षितिरिति ध्रुव-क्षितिः । ध्रुवाणाम् । ध्रुवतम इति ध्रुव-तमः । अच्युतानाम् । अच्युतक्षित्तम-

र्थः । कीदृशं तत्पात्रमित्यत आह—आसन् आस्ये । द्वितीयार्थे सप्तमी, तस्याश्च लुक् । अग्निमास्यं कृतवन्त इति यावत् । 'पद्दन्' इत्यादिना आस्यशब्दस्यासन्नादेशः । यद्वा—निमित्तसप्तम्येषा, आस्यानिमित्तं आस्यत्वाय अग्निरस्माकमास्यमिव भूयादिति । अग्निना ह्यास्येन देवा आहुतीः पिबन्ति, अग्निमुखत्वात्तेषाम् ॥

इमामनुद्रुत्य उपयामगृहीतोस्यग्नये त्वा वैश्वानरायेति गृह्णाति ॥

[2]अधिवदते—ध्रुवोसीति ॥ ध्रुवस्त्वमसि, यो यज्ञस्यायुष्टात् ग्रहाणामुत्तमस्स त्वमसि । 'आयुर्वा एतद्यज्ञस्य यद्ध्रुवः'* इत्यादि ब्राह्मणम् । यद्वा—पृथिव्या धृतिहेतुत्वादस्य ध्रुवत्वं, ध्रुवं करोतीति ध्रुवः । 'असुरा वा उत्तरतः पृथिवीं पर्याचिकीर्षन्'* इत्यादि ब्राह्मणम् । ध्रुवक्षितिर्ध्रुवनिवासः निश्चलावस्थानः यावद्वैश्वदेव्या ऋचश्शंसनं तावदवस्थानात्; यथोक्तं—'वैश्वदेव्यामृचि शस्यमानायामवनयति'* इति । ध्रुवाणामादि-

*सं. ६-५-२.

मच्युतक्षित्तम एष ते योनिरग्नये
त्वा वैश्वानराय ॥ १४ ॥

मधुश्च माधवश्च शुक्रश्च शुचिश्च

इत्यच्युतक्षित्-तमः । एषः । ते । योनिः । अग्नये ।
त्वा । वैश्वानराय ॥ १४ ॥

मूर्धानम्पञ्चत्रिंशत् ॥ १३ ॥

[1]मधुः । च । [2]माधवः । च । [3]शुक्रः । च ।

---

त्यस्थाल्यादीनां मध्ये ध्रुवतमस्त्वमसि । अच्युतानामच्युतस्थानानां मध्ये अच्युतक्षित्तमस्त्वमसि । अच्युतं स्थानं क्षियति निवसतीति क्विप् । यद्वा—अच्युतानां स्थानानां मध्ये यदच्युतमतिशयेनाच्युततमं निषेवते इति अच्युततमाक्षिदिति यावत् ब्रूयात्तावदच्युतक्षित्तम इति । तत्र सामर्थ्याद्गुपसर्जनातिशायने तमप्प्रत्ययः, छान्दसो वा । ईदृशस्त्वमसीत्यधिवादः ॥

[3]एष ते योनिरग्नये त्वा वैश्वानरायेति सादयति ॥

इति चतुर्थे त्रयोदशः.

---

[1]अथ ऋतुग्रहास्त्रयोदश । तेषां ग्रहणमन्त्रास्त्रयोदशैव*यजूंषि । तत्र तेषामन्त्यस्य पुरस्तादुपयामत्वमाम्नायते 'उपयामगृहीतोसि

---

*ख—दश ये च.

संसर्पोस्यंहस्पत्याय त्वा ' इति । पूर्वेपि 'पुरस्तादुपयामा यजुषा गृह्यन्ते ' इति पुरस्तादुपयामाः कर्तव्याः । तदर्थमन्त्यमन्त्रादौ समाम्नातं तैरप्यनुषज्यते, तेषां साकाङ्क्षत्वाच्च; उपयामगृहीतोसि मधुश्चेत्यादि । हे सोम उपयाम गृहीतोसि । ततस्त्वां मधुश्च प्रतिपद्यतां सम्प्रदानत्वेन तव वर्तताम् । मधुर्नाम वासन्तिको मासः, 'मधुश्च माधवश्च वासन्तिकावृतू '* इति । ऋत्ववयवौ मासावित्यर्थः; यथा 'तस्माद्द्वौद्वावृतू '† इति । स च मधुप्रायत्वान्मधुरुच्यते । भूम्नि मत्वर्थीयः, 'मत्वर्थे मासतन्वोः ' इति । तस्य 'लुगकारेकाररेफाश्च ' इति लुक् । मधुमानित्यर्थः । सोमश्चार्थः । मासाश्च चान्द्राः; त्रयोदशस्य चान्द्रत्वात्, पौर्णमासीनिमित्तस्य चैत्रादिव्यपदेशस्य चान्द्राणामेव सम्भवात् । अत एव मासानुविधायी मधुशब्दः । 'यज्ञेन वै देवास्सुवर्गं लोकमायन् '† इत्यादि ब्राह्मणं समस्तोनुवाकः ॥

[2]द्वितीयं गृह्णाति—उपयामगृहीतोसि माधवश्चेति ॥ माधवश्च त्वां प्रतिपद्यतामिति शेषः । एवं सर्वत्र । माधव इति तस्यैव द्वितीयो मासः । 'मधोर्ञ च ' इति मत्वर्थे ञप्रत्ययः । मधुमानित्येवार्थः ॥

[3]तृतीयं गृह्णाति—शुक्रश्चेति ॥ शुग्दीप्तिरस्मिन्नस्तीति भूम्नि तेनैव मत्वर्थीयो रप्रत्ययः । ग्रैष्मो मास उच्यते ॥

[4]चतुर्थं गृह्णाति—शुचिश्चेति ॥ शोचयिता शोषयिता सलिलानां शुचिः; स हि बहूष्णत्वात्सर्वं सलिलं शोषयति । 'इन् सर्वधातुभ्यः ' इति शुचेरिन्प्रत्ययः ॥

---

*सं. ४-४-११. †सं. ६-५-३.

नभंश्च नभस्यंश्चेषश्चोर्जश्च सहंश्च

[4]शुचिः । च । [5]नभः । च । [6]नभस्यः । च । [7]इषः । च । [8]ऊर्जः । च । [9]सहः । च । [10]सहस्यः ।

---

[5]पञ्चमं गृह्णाति—नभश्चेति ॥ नह्यति बध्नाति जन्तूनिति नभः । 'नहेर्दिवि भश्च' इत्यसुन्प्रत्ययः । वार्षिको मास उच्यते। स हि वर्षाभिभवेन जन्तून्प्रवृत्तिशून्यान् करोतीति बध्नाति । यद्वा—न भातीति नभः, स हि मेघाच्छादितत्वात् न भाति । भातिरसुनि नञ्समासे नलोपाभावो बहुलवचनत्वात् ॥

[6]षष्ठं गृह्णाति—नभस्यश्चेति ॥ नभातीति नभः, भातेरसुन् । समानमन्यत् । अप्रकाशो नभोस्यास्तीति नभस्यः, 'मत्वर्थे मासतन्वोः' इति यत् ॥

[7]सप्तमं गृह्णाति—इषश्चेति ॥ इडन्नम् । भूम्नि मत्वर्थीयोकारप्रत्ययः । इष इति शारदो मास उच्यते, शरदि हि प्रायेणौषधयस्सम्पद्यन्ते* ॥

[8]अष्टमं गृह्णाति—ऊर्जश्चेति ॥ ऊर्ग् रसः, स एव मत्वर्थीयोकारः । तत्र हि गावो बहुक्षीरा भवन्ति । प्रसन्नाश्च सरित्तटाकादयो रसवन्तो भवन्ति ॥

[9]नवमं गृह्णाति—सहश्चेति ॥ हैमन्तिको मास उच्यते । सहते अभिभवतीति सहः । स हि शीतेन प्रजा अभिभवति । कर्तर्यसुन् ॥

---

*ख. ग—सम्बध्यन्ते.

सहस्यंश्च तपंश्च तपस्यंश्चोपयामगृं-
च । [11]तपंः । च । [12]तपस्यंः । च । [13]उपयामगृं-
हीत इत्युंपयाम–गृहीतः । असि । सꣳसर्प इतिं

[10]दशमं गृह्णाति—सहस्यश्चेति ॥ प्रजानामभिभावकेन शीतेन तद्वान् । तेनैव यत्प्रत्ययः । शीतवानिति यावत् ॥

[11]एकादशं गृह्णाति—तपश्चेति ॥ शैशिर उच्यते । तपति दहति हिमेनेति तपः । कर्तर्येवासुन् ॥

[12]द्वादशं गृह्णाति—तपस्यश्चेति । तपता हिमेन तद्वान् तपस्यः । स एव यत् । एवं नभस्सहस्तपश्शब्दाः स्वरानुरोधेनासुन्प्रत्ययान्ता व्याख्याताः । तथैव चाहुर्लौकिकाः—

'नभोनभस्यौ कथिताविषोर्जौ सहस्सहस्यौ च तपस्तपस्यौ'

इति । आचार्याभिप्रायेण त्वेते अकारान्ता लक्ष्यन्ते; यथोक्तं—'नभाय त्वा जुष्टं गृह्णामि' इत्यादि । तदा ते इमे मत्वर्थीयाकारान्ता द्रष्टव्याः । क्विबन्तेभ्यो वाऽसुन् कार्यः । पचाद्यजन्तेभ्यो वा मत्वर्थीयो लुप्यते । सर्वथा त्वेते वृषादयो द्रष्टव्याः ॥

[13]त्रयोदशं गृह्णाति—उपयामगृहीतोसि संसर्पोस्यंहस्पत्याय त्वा जुष्टं गृह्णामि इति ॥ हे सोम उपयामगृहीतोसि, ततस्त्वामंहस्पत्याय त्वां जुष्टं गृह्णामीति वक्ष्यमाणेन सम्बध्यते । संसर्प इति त्रयोदशो मास उच्यते । स हि द्वादशेन मासेन संसर्पति सङ्गच्छते । यद्वा—यस्मादयं मासिमास्यंशेनांशेन निष्पद्यते तस्मात्संसृष्ट एव मासान्तरैस्सर्पति । त्रिंशता च मासैर्मासत्वेन

ह्रीतोसि सꣳसर्पोस्यꣳहस्पत्याय त्वा ॥ १५ ॥

सं–सर्पः । असि । अꣳहस्पत्यायेत्यꣳहः–पत्या-
यं । त्वा ॥ १५ ॥

मधुस्त्रिꣳशत् ॥ १४ ॥

सम्पद्यते । ईदृशस्त्वमसि न कर्मणां त्रयोदशमासार्होसीति* । ‘परादिश्छन्दसि बहुलम्’ इत्युत्तरपदाद्युदात्तत्वम् । अधुना सोम उच्यते—अंहस्पत्याय त्वा जुष्टं गृह्णामीति शेषः । अंहस्पत्यस्त्रयोदशो मासः । अंहांसि पापानि पातयति । ‘अमेर्हुक्च’ इत्यसुन् । पातयिता नाशयिता अंहस्पत्यः । पततेर्ण्यन्तात् ‘कृत्यल्युटो बहुळम्’ इति कर्तरि यत्प्रत्ययः, ‘बहुलं संज्ञाछन्दसोः’ इति णिलुक्, ‘कस्कादिषु च’ इति सत्वम् । यद्वा—अंहतेर्गतिकर्मणोऽसुन्, अंहसां गतीनां पतिः पाता प्रवर्तक आदित्यः, तदधीनत्वात्सर्वचेष्टानाम् । ‘पातेर्डतिः’ । यद्वा—कृतानुस्वारोपजनमहरेवांह इत्युच्यते; यथोक्तं—‘वर्णागमो वर्णविपर्ययश्च’ इति । तस्य पतिर्दिनपतिरादित्य एव । तत आगतस्तस्यापत्यं वा अंहस्पत्यः, पत्युत्तरपदलक्षणो ण्यः, छान्दसः आदिवृद्ध्यभावः, ‘संज्ञापूर्वको विधिरनित्यः’ इति वा । आदित्यवशेन हि त्रयोदशो मासो जायते । यथोक्तम्—

‘अधिमासका युगे ते रविमासेभ्योधिकास्तु ये चान्द्राः’

इति । तस्मात्तत आगत इति वा तदपत्यमिति वा शक्यते वक्तुम् ।

*ख,ग—ईदृशस्तेन कर्मणा त्रयोदशमासार्होसि हे त्रयोदश.

इन्द्रा॑ग्नी आग॑त॒ꣳ सु॒तं गी॒र्भिर्नभो॒ वरे॑ण्यम् । अ॒स्य पा॑तं धि॒येषि॒ता ।

[1]इन्द्रा॑ग्नी इतीन्द्र॑–अ॒ग्नी । एति॑ । ग॒त॒म् । सु॒त॒म् । गी॒र्भिः । नभः॑ । वरे॑ण्यम् । अ॒स्य । पा॒त॒म् । धि॒या । इ॒षि॒ता । उ॒प॒या॒मगृ॑हीत॒ इत्यु॑पया॒म–गृ॒ही॒तः । अ॒सि॒ । इ॒न्द्रा॒ग्निभ्या॒मिती॑न्द्रा॒ग्नि–भ्या॒म् ।

'अस्ति त्रयोदशो मास इत्याहुः '* इति च ब्राह्मणम् । यद्वा—संसर्पार्थिस्सोम एव संसर्प इत्युच्यते । यद्वा—उपयामगृहीतोसि संसर्पार्थश्चासि, तस्मादंहस्पत्याय त्वां गृह्णामीति । चतुर्थ्यर्थे वा द्वितीया, अंहस्पत्याय तुभ्यमिमं सोमं गृह्णामीति शेषः ॥

इति चतुर्थे चतुर्दशोनुवाकः.

---

[1]ऋतुपात्रेणैन्द्राग्नं गृह्णाति ॥ 'यदैन्द्राग्नमृतुपात्रेण गृह्णाति '† इति ब्राह्मणम्, 'ओजोभृतौ वा एतौ देवानाम् '† इत्यादि च । इन्द्राग्नी आगतमिति त्रिपदा गायत्री । हे इन्द्राग्नी आगतं आगच्छतम् । 'बहुलं छन्दसि ' इति शपो लुक् । सुतं अभिषुतं सोमं प्रति गीर्भिः स्तुतिभिः वरेण्यं वरणीयं प्रार्थनीयं स्तुत्यं सोमं नभः नहनं बन्धकं रसवत्तया मनसाम्‡ । 'नहेर्दिवि भश्च ' इत्यसुन् दिवोन्यत्रापि बहुलवचनात् । यद्वा—

*सं. ६-५-३. †सं. ६-५-४.

‡ख—नभस्संबन्धउच्यते धिया मनसा. ग—नभस्संबन्धकं रसवत्तया मनसा.

उपयामगृहीतोसीन्द्राग्निभ्यान्त्वैषते
योनिरिन्द्राग्निभ्यान्त्वा ॥ १६ ॥
ओमासश्चर्षणीधृतो विश्वे देवास
आ गत । दाश्वाꣳसो दाशुषस्सु-

त्वा । [2]एषः । ते । योनिः । इन्द्राग्निभ्यामितीन्द्राग्नि-भ्याम् । त्वा ॥ १६ ॥

[1]ओमासः । चर्षणीधृत इति चर्षणि-धृतः । विश्वे । देवासः । एति । गत । दाश्वाꣳ-

गीर्भिर्नेहनीयं बन्धनीयं स्तुत्यामिति यावत् । यद्वा—नभ इव नभः आदित्यः स इव गीर्भिर्वरणीयः । 'वृञ एण्यः', वृषादिर्द्रष्टव्यः । आगत्य चास्य सोमस्य पातं पिबतम् कर्मणस्सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । पूर्ववच्छपो लुक् । धिया बुद्ध्यास्मदीयया इषिता इषितौ अद्वेषितौ प्रार्थितौ युवां पिबतम् । 'सावेकाचः' इति धियो विभक्तिरुदात्ता । 'तीषसहलुभ' इतीडागमः । यद्वा—इषगतौ, धिया इषितौ प्राप्तौ ॥

इमामनुद्रुत्योपयामगृहीतोसीन्द्राग्निभ्यां त्वेति गृह्णाति ॥

[2]एष ते योनिरिन्द्राग्निभ्यां त्वेति सादयति ॥

इति चतुर्थे पञ्चदशोनुवाकः.

---

[1]शुक्रपात्रेण वैश्वदेवं कलशाद्गृह्णाति—ओमास इति त्रिपदया गायत्र्या ॥ हे ओमासः अवितारः प्रजानां रक्षितारः । अव-

तम् । उपयामगृहीतोसि विश्वेभ्य-

सः । दाशुषः । सुतम् । उपयामगृहीत इत्युपयाम-

तेर्मन्प्रत्ययान्तात् 'ज्वरत्वर' इत्यादिना ऊठादेशे गुणः, आज्ज-सेरसुक् । चर्षणीधृतः, चर्षणयो मनुष्याः, तेषां प्रतिष्ठाद्यनु*प्र-दानेन धारयितारः । 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः, 'विभाषितं विशेषवचने बहुवचनम्' इति पूर्वस्याविद्यमा-नत्वनिषेधान्निहन्यते । विश्वे इति पादादित्वान्न निहन्यते । देवास इति पूर्ववन्निहन्यते, पूर्ववदसुक् । हे ईदृशा विश्वे देवाः आगत आगच्छत । पूर्ववच्छपो लुक् । आमन्त्रितानामविद्यमान त्वेपि आङः परत्वान्न निहन्यते । दाश्वांसो यूयम् । दाशृ दाने, लिटः क्वसुः 'दाश्वान्साश्वान्' इति निपातितः । यजमानेभ्यो धनानि दत्तवन्तः दाशुषोस्य यजमानस्य सुतं सोमं प्रत्यागच्छत । अयं हि यजमानो युष्मभ्यं हवींषि दत्तवान् ददाति दास्यति । तेन युष्मदुपकारिणोस्य सुतं प्रति दानशीला यूयं प्रत्यागच्छत । यद्वा—चतुर्थ्यर्थे षष्ठी, यो नाम कश्चिद्युष्मभ्यं हवींषि ददाति तस्मै दाशुषे दाश्वांसो यूयं धनानि दत्तवन्तो यूयम् । यद्वा—'छन्दसि लुङ्लङ्लिटः' इत्युभयत्र वर्तमाने लिट् । युष्मभ्यं हवीं-षि ददतोस्य सुतं प्रति यूयमपि धनानि ददत एवागच्छत इति ॥

इमामनुद्रुत्योपयामगृहीतोसि विश्वेभ्यस्त्वा देवेभ्यः इति गृह्णाति ॥

*क.—ष्ठादर्शन.

स्त्वा देवेभ्य एष ते योनिर्विश्वे-
भ्यस्त्वा देवेभ्यः ॥ १७ ॥

मरुत्वन्तं वृषभं वावृधानमकवारि-
न्दिव्यꣳ शासमिन्द्रम् । विश्वासाह-

गृहीतः । असि । विश्वेभ्यः । त्वा । देवेभ्यः । [2]एषः । ते । योनिः । विश्वेभ्यः । त्वा । देवेभ्यः ॥ १७ ॥

इन्द्राग्नी ओमासो विꣳशतिर्विꣳ-
शतिः ॥ १५–१६ ॥

[1]मरुत्वन्तम् । वृषभम् । वावृधानम् । अकवा-

---

[2]एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति ॥ 'वैश्वदेव्यो वै प्रजा असावादित्यश्शुक्रः '* इत्यादि ब्राह्मणम् ॥

इति चतुर्थे षोडशोनुवाकः.

---

[1]त्रयो मरुत्वतीया माध्यंदिने सवने गृह्यन्ते । 'इन्द्रो मरुद्भिस्सांविद्येन '† इत्यादि ब्राह्मणम् । ते चर्तुपात्रेण गृह्यन्ते । 'तस्य वृत्रं जघ्नुष ऋतवोमुह्यन् '† इत्यादि ब्राह्मणम् । 'वज्रं वा एतं यजमानो भ्रातृव्याय प्रहरति यन्मरुत्वतीयाः '† इत्यादि च । तत्र प्रथमं गृह्णाति—मरुत्वन्तमिति त्रिष्टुभा चतुष्पद-

---

*सं.६-५-४. †सं. ६-५-५.

मर्वसे नूर्तनायोग्रꣳ सह्रोदामिह तꣳ हुवेम । उपयामगृहीतोसीन्द्राय त्वा

रिमित्यकव–अरिम् । दिव्यम् । शासम् । इन्द्रम् । विश्वासाहमिति विश्व–साहम् । अवसे । नूर्तनाय । उग्रम् । सह्रोदामिति सहः–दाम् । इह । तम् । हुवेम । उपयामगृहीत इत्युपयाम–गृही-

या ॥ मरुतो देवविशेषास्तैस्तद्वन्तम् । 'तसौ मत्वर्थे' इति भत्वम् । 'झयः' इति मतुपो वत्वम् । वृषभं वर्षितारं कामानां अपां वा । 'ऋषिवृषिभ्यां कित्' इति वृषेरभच्प्रत्ययः । वावृधानं ऐश्वर्येण । वृधेस्ताच्छीलिकश्चानश्, 'बहुलं छन्दसि' इति शपश्श्लुः, तुजादित्वाद्दीर्घः, लसार्वधातुकानुदात्तत्वाभावात् 'चितः' इत्यन्तोदात्तत्वम् । अकवारिं अकुत्सितारिम् । कुत्सिता अरयो यस्य स कवारिः । कुशब्दस्याकारोपसर्जनो गुणश्छान्दसः, ततो नञ्समासः, अव्ययपूर्वपदप्रकृतिस्वरत्वम् । योल्पान् शत्रुत्वेन विषयीकरोति सोकवारिः । यद्वा—कविः प्रज्ञातः अरिर्यस्य स कवारिः । कविशब्दस्यावङादेशश्छान्दसः । ततोन्योकवारिः अप्रज्ञात*शत्रुरित्यर्थः । दिवमर्हतीति दिव्यः । 'छन्दसि च' इति यत्प्रत्ययः । शासं शासकं शत्रूणाम् । पचाद्यच् । विश्वासाहं विश्वेषां शत्रूणामभिभवितारम् । 'छन्दसि सहः' इति ण्विप्रत्ययः, 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम् । उग्रं उद्गूर्ण†मायुधैः । सहोदां सहसो बलस्य दातारम् । 'आतो

*क—अजात. †ख—उद्गीर्ण.

मरुत्वंत एष ते योनिरिन्द्राय त्वा मरुत्वंते ॥ १८ ॥

इन्द्र मरुत्व इह पाहि सोमं यथा

तः । असि । इन्द्राय । त्वा । मरुत्वंते । एषः । ते । योनिः । इन्द्राय । त्वा । मरुत्वंते ॥ १८ ॥

मरुत्वन्तं षड्विंशतिः ॥ १७ ॥

[1]इन्द्र । मरुत्वः । इह । पाहि । सोमम् । यथा ।

---

मनिन्क्वनिब्वनिपश्च ' इति विच्प्रत्ययः । ईदृशं मरुत्वन्तं इन्द्रं हुवेम आह्वयाम । इहास्मिन्कर्मणि । ह्वयतेराशिषि लिङ्, 'लिङ्याशिष्यङ्' यासुडादि, 'छन्दस्युभयथा' इति सार्वधातुकत्वात्सलोपः । 'किदाशिषि' इति किस्त्वाद्वचिस्वप्यादिना संप्रसारणम् । किमर्थमाह्वयामः? अवसे रक्षणाय । अवतेरसुन् । नूतनायाभिनवाय अद्यप्रभृति विशिष्टं रक्षणं कर्तुम् । 'नवस्य नूआदेशः त्नप्तनप्खाश्च प्रत्ययाः' इति तनप्प्रत्ययः ॥

इमामनुद्रुत्य उपयामगृहीतोसीन्द्राय त्वा मरुत्वत इति गृह्णाति ॥

[2]एष ते योनिरिन्द्राय त्वा मरुत्वत इति सादयति ॥

इति चतुर्थे सप्तदशोनुवाकः.

---

[1]द्वितीयं मरुत्वतीयं गृह्णाति—इन्द्र मरुत्व इति चतुष्पदया त्रिष्टुभा । हे इन्द्र मरुत्वः । 'मतुवसोः' इति रुत्वम् । 'नाम-

शार्याते अपिबस्सुतस्य । तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयस्सुयज्ञाः । उपयामगृहीतोसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ११ ॥

शार्याते । अपिबः । सुतस्य । तव । प्रणीतीति प्र-नीती । तव । शूर । शर्मन् । एति । विवासन्ति । कवयः । सुयज्ञा इति सु-यज्ञाः । उपयामगृहीत इत्युपयाम-गृहीतः । असि । इन्द्राय । त्वा । मरुत्वते । [2]एषः । ते । योनिः । इन्द्राय । त्वा । मरुत्वते ॥ ११ ॥

न्त्रिते समानाधिकरणे' इति पूर्वपदस्याविद्यमानवत्त्वनिषेधान्निहन्यते । इहास्मिन्कर्मणि सोमं पाहि पिब । पूर्ववच्छपो लुक् । शर्यातिर्नाम राजा, तस्येदं शार्यातम् । यथा शर्यातेर्यागे सुतस्य सोमस्यापिबः । पूर्ववत्सम्प्रदानत्वं षष्ठ्याः षष्ठी च । कस्मात्पुनरेवमभ्यर्थ्यत इत्याह—हे शूर इन्द्र तव प्रणीती प्रणीत्या । 'सुपां सुलुक्' इति तृतीयायाः पूर्वसवर्णदीर्घत्वम् । तद्विषयेन प्रणयनेन* तवैव शर्मन् शर्मणि शरणभावे । निमित्तसप्तमी, भावे सुखे वा निमित्ते सप्तमी । त्वमेव शरणं मे यथा भवसि, तदर्थं सुयज्ञाः शोभनयज्ञाः कवयो मेधाविनस्त्वामेवाविवासन्ति परिचरन्ति । तस्मात्त्वामेव प्रार्थयामहे ॥

पूर्ववद्ग्रहणं [2]सादनं च ॥

इति चतुर्थेष्टादशोनुवाकः.

*क. घ–प्रणयेन.

**मरुत्वाꣳ इन्द्र वृषभो रणाय पिबा सोममनुष्वधम्मदाय । आ सिञ्चस्व जठरे मध्व ऊर्मिन्त्वꣳ राजासि**

**[1]मरुत्वान् । इन्द्र । वृषभः । रणाय । पिब । सोमम् । अनुष्वधमित्यनु—स्वधम् । मदाय ।**

---

[1]तृतीयं मरुत्वतीयं गृह्णाति—मरुत्वानिन्द्रेति चतुष्पदया त्रिष्टुभा ॥ हे इन्द्र यस्त्वं मरुत्वान् वृषभश्च स त्वं रणाय सङ्ग्रामाय पिब सोमम् । 'द्व्यचोतस्तिङः' इति दीर्घः । अनुष्वधं स्वधामन्नं अनुस्वदनीयं पुरोडाशात्मकमन्नं सोमम् । सुषामादित्वात् षत्वम्, 'अनोरप्रधानकनीयसी' इत्युत्तरपदान्तोदात्तत्वम् । मदाय, माद्यत्यनेनेति मदः । 'मदोऽनुपसर्गे' इत्यप् । ईदृशाय रणाय जयकरायेत्यर्थः । 'वार्त्रघ्ना एव ते यजमानस्य गृह्यन्ते '* 'यन्मरुत्वतीयाः '* 'आयुधं वा एतद्यजमानस्संस्कुरुते यन्मरुत्वतीयाः '* इत्यादि च ब्राह्मणम् । किं बिन्दुमात्रमपि पीतं मदाय भवतीत्याशङ्क्य नेति प्रतिपाद्यते—आसिञ्चस्व आभिमुख्येन क्षारय जठरे उदरे यथा ते मदो भवति तथा प्रभूतं पिबेत्यर्थः । मध्वः मधुसदृशस्यास्य सोमस्य ऊर्मिं सङ्घातम् । 'जसादिषु वा वचनं छन्दसि' इति गुणाभावः । राजा विशेष्यते—प्रदिवः पुराणः नेदानीमेव । मदस्योत्पाद्यत्वे हेतुमाह—त्वं राजा सुतानां सोमानां, तव मदाय सोमा अभिषूयन्तै इति भावः, अतिक्रान्तेष्वप्यहस्सु त्वमेव सोमानां राजेति । यद्वा—त्वमेव ह्यतिक्रान्तेष्वहस्सु सुतानां राजाऽभूः, तस्मादिदा-

---

*सं. ६-५-५.

प्रदिवस्सुतानाम् । उपयामगृहीतोसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ २० ॥

महाꣳ इन्द्रो य ओजसा पर्जन्यो

एति । सिञ्चस्व । जठरे । मध्वः । ऊर्मिम् । त्वम् । राजा । असि । प्रदिव इति प्र-दिवः । सुतानाम् । उपयामगृहीत इत्युपयाम-गृहीतः । असि । इन्द्राय । त्वा । मरुत्वते । [2]एषः । ते । योनिः । इन्द्राय । त्वा । मरुत्वते ॥ २० ॥

इन्द्र मरुत्वो मरुत्वानेकान्न त्रिꣳशदेकान्न त्रिꣳशत् ॥ १८—१९ ॥

[1]महान् । इन्द्रः । यः । ओजसा । पर्जन्यः ।

---

नीमपि पिबेति प्रार्थ्यसे । प्रगता दिवसा अस्येति प्रदिवः । छान्दसोकारस्समासान्तः, 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । मरुत्वानित्यत्र पूर्ववत्सांहितायां रुत्वादि ॥

पूर्ववदेव ग्रहण[2]सादने ॥

इति चतुर्थे एकोनविंशोनुवाकः.

---

[1]शुक्रपात्रेण माहेन्द्रं गृह्णाति—महानिति गायत्र्या त्रिपदया ॥ य ओजसा बलेन महान् इन्द्रः । पूर्ववद्रुत्वादि संहितायाम् ।

वृष्टिमा॑ँ इ॒व । स्तोमै॑र्व॒त्सस्य॑ वावृ॒धे । उ॒प॒या॒मगृ॑हीतोसि म॒हे-न्द्राय॑ त्वै॒ष ते॒ योनि॑र्म॒हेन्द्राय॑ त्वा ॥ २१ ॥

वृष्टि॑मा॒निति॑ वृष्टि–मान् । इ॒व । स्तोमैः॑ । व॒त्स-स्य॑ । वा॒वृ॒धे । उ॒प॒या॒मगृ॑हीत॒ इत्यु॑पया॒म–गृ॒हीतः॒ । अ॒सि॒ । म॒हेन्द्राये॒ति॑ म॒हा–इ॒न्द्राय॑ । त्वा॒ । [2]ए॒षः । ते॒ । योनिः॑ । म॒हेन्द्राये॒ति॑ म॒हा–इ॒न्द्राय॑ । त्वा॒ ॥ २१ ॥

स इन्द्रः, वत्सस्य वत्सस्थानीयस्य यजमानस्य ऋषेर्वा वत्सनाम्नः, स्वभूतैस्स्तोमैस्स्तोत्रैः वावृधे वर्धताम् । 'छन्दसि लुङ्लङ्लिटः' इति लिट् । 'तुजादीनां' इत्यभ्यासस्य दीर्घः । क इव ? पर्जन्यो वृष्टिमानिव यथा वृष्टिमान् पर्जन्योभिवर्धते लोकाभिवृद्ध्या तथेत्यर्थः । वृष्टिमानित्यस्य 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । पूर्ववद्रुत्वादि संहितायाम् ॥

इमामनुद्रुत्योपयामगृहीतोसि महेन्द्राय त्वेति गृह्णाति ॥

[2]एष ते योनिर्महेन्द्राय त्वेति सादयति ॥ 'इन्द्रो वृत्रमहन् तं देवा अब्रुवन्महान्वा अयमभूत्'* इत्यादि ब्राह्मणम् ॥

इति चतुर्थे विंशोनुवाकः.

*सं. ६-५-५.

महाँ॒ इन्द्रो॒ नृ॒वदा च॑र्षणि॒प्रा उ॒त
द्वि॒बर्हा॑ अमि॒नस्सहो॑भिः । अ॒स्म-

[1]म॒हान् । इन्द्रः॑ । नृ॒वदिति॑ नृ-वत् । एति॑ । च॒र्ष॒णि॒प्रा इति॑ च॒र्ष॒णि-प्राः । उ॒त । द्वि॒ब॒र्हा इति॑ द्वि-ब॒र्हाः । अ॒मि॒नः । सहो॑भि॒रिति॒ सहः॑-भिः । अ॒स्म॒द्रि॒य॒गित्य॑स्म-द्रिय॑क् । वा॒वृ॒धे ।

---

[1]बृहत्पृष्ठपक्षे माहेन्द्रं गृह्णाति—महाँ॒ इन्द्रो नृवदिति चतुष्पदया त्रिष्टुभा ॥ महानयमिन्द्रः यश्चर्षणिप्राः, चर्षणयो मनुष्यास्तेषां पूरयिता कामैः । प्रा पूरणे, 'आतो मनिन्क्वनिब्वनिपश्च' इति विच्प्रत्ययः । नृवत् मनुष्यवत्, यथा मनुष्या आराधयितॄन् कामैः पूरयन्ति तद्वत् । यद्वा—चर्षणीनां चर्षणवतामाचारवतां कामैः पूरयिता । समन्तादित्यर्थे आकारः, सर्वत्र पूरयिता, तस्मान्महान् । यद्वा—नृवत् एकस्मिन्निव नरे समन्तात् सर्वेष्वपि लोकेषु चरणशीलानां पूरयिता, ततोयं महानिति । चरेरनिप्रत्ययो बहुलवचनात्सुडागमः । यद्वा—'कृषेरादेश्च चः' इति कृषेरेतद्रूपम् । आङापि कृष्यर्थो विशेष्यते । उदात्तश्रुतेश्चायमसमस्त एव कृष्यर्थं विशिनष्टि । हविःप्रदानादिना आकर्षवतां वशीकुर्वतां कामैः पूरयितेति । उत अपिच द्विबर्हाः द्वयोर्लोकयोर्बृंहितः प्रवृद्धस्तेजसास्मिन्नमुष्मिंश्च । बृहेरनिदितोसुन्प्रत्ययः, 'परादिश्छन्दसि बहुलम्' । पुनश्च विशेष्यते—सहोभिर्बलैः अमिनः अपरिच्छेदः । मानं मिनम् । मातेर्निष्ठा,

द्रियग्वावृधे वीर्यायोरुः पृथुस्सुकृ-
तः कर्तृभिर्भूत् । उपयामगृहीतो-

वीर्याय । उरुः । पृथुः । सुकृत इति सु-कृतः । कर्तृभिरिति कर्तृ-भिः । भूत् । उपयामगृहीत इत्युपयाम-गृहीतः । असि । महेन्द्रायेति महा-

छान्दसं निष्ठानत्वम् । तदस्य नास्तीत्यमिनः, न ह्यस्यैतादृग्बलमस्तीति निश्चेतुं शक्यते । यद्वा—सहोभिरमिनः सङ्गतः । अम गत्यादिषु, 'बहुलमन्यत्रापि' इतीनच्प्रत्ययः । ईदृश इन्द्रो वीर्याय वीर्यार्थम् । यद्वा—कर्म वृत्रवधादि तदर्थम् । अस्मद्र्यक् वावृधे वर्धताम् । 'छन्दसि लुङ्लङ्लिटः' इति लिट्, तुजादित्वाद्दीर्घः । अस्मास्व*ञ्चतीत्यस्मद्र्यक् । 'विष्वग्देवयोश्च' इत्यद्र्यादेशः, क्रियाविशेषणत्वान्नपुंसकत्वम् । अस्माभिर्यजमानैर्दत्तानि हवींषि गृहीत्वा वर्धतामिति यावत् । किञ्च—कर्तृभिः परिचरद्भिः अस्माभिर्यजमानैरिन्द्रः उरुर्विस्तीर्णो बलेन, पृथुः प्रथितस्सर्वत्र यशसा, सुकृतः सुष्ठुकृतः वशीकृतश्च, भूत् भवतु । भवतेर्लुङि पूर्ववच्छपो लुक्, 'भूसुवोस्तिङि' इति गुणाभावः । यद्वा—कर्तृभिरस्माभिः सुकृतस्सम्यक्कृतोयमुरुः पृथुश्च भवतु । 'सुः पूजायाम्' इति कर्मप्रवचनीयत्वम् । 'स्वती पूजायाम्' इति प्रादिसमासः, तेन गतित्वाभावात् 'सूपमानात्क्तः' इत्युत्तरपदान्तोदात्तत्वाभावे अव्ययपूर्वपदप्रकृतिस्वरत्वमेव भवति ॥

*क. ख. ग—अस्मान.

सि महेन्द्राय त्वैष ते योनिर्महे-
न्द्राय त्वा ॥ २२ ॥
कदा चन स्तरीरसि नेन्द्र सश्चसि
दाशुषे । उपोपेन्नु मघवन्भूय इन्नु

इन्द्राय । त्वा । [2]एषः । ते । योनिः । महेन्द्रायेति
महा-इन्द्राय । त्वा ॥ २२ ॥

महानृवत्षड्विंशतिः ॥ २१ ॥

[1]कदा । चन । स्तरीः । असि । न । इन्द्र ।
सश्चसि । दाशुषे । उपोपेत्युप-उप । इत् । नु ।

---

ग्रहण[2]सादने पूर्ववदेव ॥

इति चतुर्थे एकविंशः.

---

[1]तृतीयसवने आदित्यं गृह्णाति—कदा चन स्तरीरसीति पथ्यया पञ्चपदया । यथोक्तं—'पथ्या पञ्चभिरष्टाक्षरैः' इति । इयं तु शङ्कुमतीनामपथ्या, यथोक्तं—'एकस्मिन् पञ्चके छन्दश्शङ्कुमती'* इति । पथ्या बृहती वा जागततृतीयपादत्वात् । हे इन्द्र न कदाचिदपि त्वं स्तरीरसि धनानां छादकोसि । 'अवितृस्तृतन्त्रिभ्य ईः' इतीप्रत्ययः । किमनाच्छादनमात्रमेव? नेत्याह—सश्चसि दा-

---

*पिं. ३-५५.

ते दानन्देवस्य पृच्यते। उपयामगृहीत-

मघवन्निति मघ-वन्न्। भूयः । इत् । नु । ते ।
दानम् । देवस्य । पृच्यते । उपयामगृहीत इत्युप-
याम-गृहीतः । असि । आदित्येभ्यः । त्वा ।

---

शुषे, सश्चतिर्गतिकर्मा, दाशुषे हवींषि दत्तवते सश्चसि दित्सया। 'क्रियाग्रहणं कर्तव्यम्' इति संप्रदानत्वम् । दातुमिति वा पदाध्याहारः । दाशुषे दातुं सश्चसि धनानि दातुं दाशुषस्सकाशं त्वमेव सश्चसि । किमुच्यते सकृद्ददासीति—हे मघवन् तव देवस्य देवनादिगुणयुक्तस्य दानं भूयोप्युपपृच्यते उपगृह्यते पुनः पुनरपि समुपपाद्यते । न सकृद्दत्तमिति स्मर्यते, किन्तु पुनः पुनर्दीयत एवेति । पृची सम्पर्के । अत्र भूय इन्नुत इति चतुर्थः पादः। 'प्रसमुपोदः पादपूरणे' इत्युपशब्दस्य द्विर्वचनम् । 'अनुदात्तं च' इति द्वितीयो निहन्यते । इच्छब्दोवधारणार्थः उपपृच्यत एव । नुशब्दः प्रसिद्धौ; नन्वेवं खलु सर्वदा क्रियते । नु इति पुराणवचनो वा, पुराणोयं तव स्वभावः । द्वितीय इच्छब्दो-प्यर्थः, भूयोपि । द्वितीयो नुशब्दो हेतौ, यस्मादेवं तस्मान्न कदा चन स्तरीरसीति । तस्मादेवंप्रभावस्त्वमस्मानप्यनुगृहाणेत्याशिषा समाप्यते ॥

इमामनुद्रुत्योपयामगृहीतोस्यादित्येभ्यस्त्वेति गृह्णाति । 'अदितिः पुत्रकामा'* इत्यादि ब्राह्मणम् ॥

---

*सं. ६-५-६.

तोस्यादित्येभ्यस्त्वा । कदा चन प्र
युच्छस्युभे नि पासि जन्मनी ।
तुरीयादित्य सवनन्त इन्द्रियमा

[2]कदा । चन । प्रेति । युच्छसि । उभे इति । नीति ।
पासि । जन्मनी इति । तुरीय । आदित्य ।
सवनम् । ते । इन्द्रियम् । एति । तस्थौ । अमृतम् ।

---

[2]गृतातंक्येन श्रीणाति—कदा चन प्र युच्छसीति पथ्ययैव पूर्वोक्तया । अत्र तु तृतीयपादः पञ्चाक्षरः । आदित्यग्रह एवात्रामन्त्र्यते । हे ग्रह कदाचिदपि प्रयुच्छसि न युच्छसि । युच्छप्रमादे । कस्यां चिदप्यवस्थायां स्वकार्यं प्रति प्रमादं न करोषीत्यर्थः । यागसाधनमेव स्वकार्यमस्य । अत्र धात्वर्थस्य निवृत्तिं प्रशब्द आचष्टे, यथा प्रस्मरणं प्रस्थानं प्रपूरणमिति । यद्वा—किंशब्दोत्र गम्यमानार्थो न प्रयुज्यते । किं कदाचित्त्वं प्रयुच्छसि प्रमाद्यसि, न खल्वेतत्सम्भाव्यते, सर्वदावहितत्वादित्यर्थः । तदेवावधानं दर्शयितुमाह—उभे खलु जन्मनी वर्तमानभविष्यल्लक्षणे निपासि नियमेन रक्षसि, ऐहिकादामुष्मिकाच्चानर्थाद्यजमानं रक्षसीत्यर्थः । अधुनादित्यग्रहमेव चतुर्थसवनत्वेन रूपयन्नामन्त्रयते—हे आदित्य । ‘ दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ’ । आदित्यग्रह तुरीय चतुर्थ चतुर्थसवनात्मन् । आदित्यग्रहमेव चतुर्थं सवनं रूपयित्वा स्तौति । तृतीयसवनात्प्रागेवेदं चतुर्थं सवनं सम्पद्यते, यदिदं तव ग्रहणमिति । अस्य च सवनस्य सवनान्तरेभ्यो विशिष्टतामाह—ते तव खल्विदं सवनमिन्द्रियं इन्द्रजुष्टम् ।

तस्थावमृतन्दिवि । यज्ञो देवाना-
म्प्रत्यैति सुम्नमादित्यासो भवता

दिवि । यज्ञः । देवानाम् । प्रतीति । एति । सुम्नम् ।
आदित्यासः । भवत । मृडयन्तः । एति । वः ।

---

'इन्द्रियमिन्द्रलिङ्गम्' इत्यादिना निपात्यते । इन्द्रप्रीतिकर मित्यर्थः । पुनश्च सवनं विशिनष्टि—दिवि आदित्ये द्युलोके वा अमृतत्वेनातस्थौ आस्थितम् । नास्मिन् मृतं मरणमस्य वा नास्तीत्यमृतम्, अमरणहेतुरित्यर्थः । 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । यद्वा—दिवि हविर्धाने आतस्थौ, इदं सवनं हविर्धान एव समाप्यत इत्यर्थः । 'द्यौर्हविर्धानम्'* इति च मन्त्रवर्णः । 'ऊडिदम्' इत्यादिना दिवो विभक्तिरुदात्ता । यद्वा—'तस्यै चत्वार आदित्या अजायन्त'† इति तुरीयादित्योस्त्येव, स एवात्रामन्त्र्यते ॥

इमामनुद्रुत्योपयामगृहीतोस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीति श्रीणाति । उपयामगृहीतोसीत्यस्य पूर्वत्राम्नातस्य उत्तरयानया ऋचा सम्बन्धः । 'पशवो वा एते यदादित्य ऊर्द्दधि'† इत्यादि ब्राह्मणम् ॥

[3]पुनरपि तस्मिन्नेव सोमं गृह्णाति—यज्ञो देवानामिति चतुष्पदया त्रिष्टुभा । 'तिसृभिर् ऋग्भिर्गृह्णाति'† इति ब्राह्मणम् ॥ अयं यज्ञोस्मदीयं धनं देवानां सुम्नं सुखं प्रति एति एतु प्राप्नोतु सुखं सम्पादयतु । यद्वा—अयं देवानां यज्ञः अस्माकं सुखं प्रत्येतु

*आ. २-१-५. †सं. ६-५-६.

मृडयन्तः । आ वोऽर्वाची सुम-
तिर्ववृत्यादंहोश्चिद्या वरिवोवि-

अर्वाची । सुमतिरिति सु-मतिः । ववृत्यात् ।
अंहोः । चित् । या । वरिवोवित्तरेति वरिवोवि-

प्रत्याययतु । किञ्च—हे आदित्यासः आदित्याः अस्मान्मृडयन्तस्सुखयन्तो भवत । असुन्, आमन्त्रितस्याविद्यमानत्वात्तिङन्तं न निहन्यते । 'छन्दस्युभयथा' इति शतुरार्धधातुकत्वे 'अदुपदेशात्' इति लसार्वधातुकानुदात्तत्वाभावः । किञ्च—वः युष्माकं या सुमतिः शोभनात्मिकानुग्रहपरा मतिः सार्वाची अस्मदभिमुखी आववृत्यात् आवर्तताम् । वृतेर्व्यत्ययेन परस्मैपदम्, लिङि यासुट्, 'बहुलं छन्दसि' इति शपश्लुः । अर्वागञ्चतीत्यर्वाची, ऋत्विगादिना क्विन्, 'अञ्चतेश्चोपसङ्ख्यानम्' इति ङीप्, 'मन्क्तिन्व्याख्यान' इत्यादिना सुमतिशब्दस्योत्तरपदान्तोदात्तत्वम् । पुनरपि सुमतिर्विशेष्यते—या युष्माकं सुमतिः अंहोः हननशीलस्य दुरात्मनः चित् स्ववच्छेत्री । छिदेः कर्तरि क्विप्, आदिवर्णव्यत्ययः । हन्तीत्यंहुः, हन्तेरौणादिक उप्रत्ययः । आद्यो हकारोन्तेवतिष्ठते, नकारस्यानुस्वारः । यद्वा—अहि गतौ, स एव प्रत्ययः । गत्यर्थाश्च बुद्ध्यर्थाः । पुरुषस्य या चित् चेतिः । चेततेः क्विप् । ज्ञाता हि मतिस्सुमतिर्भवतीति भावः । व्युत्पत्तिद्वयेपि चिच्छब्दस्यानुदात्तत्वं मृग्यम् । अथ ब्रूमः—चिदिति निपातः चादित्वादनुदात्तः, अवधारणे वर्तते, इवार्थे वा । अंहोरेव ज्ञातुरिव वा या मतिः सा आवर्ततामिति । वरिवोवित्तरा च या मतिरसत् भवेत् । अस्तेर्लेडन्तस्य अडागमः । सा आवर्त-

नरासत् । विवस्व आदित्यैष
ते सोमपीथस्तेन मन्दस्व तेन तृप्य

तृ-तरा । असत् । विवस्वः । आदित्य । एषः ।
ते । सोमपीथ इति सोम-पीथः । तेन । मन्दस्व ।

---

तामिति । वरिवो धनं, तस्य वेदयित्री लम्भयित्री वरिवोवित्। विन्दतेर्ण्यन्तात्क्विपि, 'बहुलं संज्ञाछन्दसोः' इति णिलुक्, ततोतिशायने तरप्प्रत्ययः । ज्ञातुरेव हि मतिर्वरिवोवित्तरा भवति। तस्माद्या ईदृशी मतिर्भवति सा सुमतिरस्मानावर्तताामिति ॥

इमामनुद्रुत्योपयामगृहीतोस्यादित्येभ्यस्त्वेति गृह्णाति ॥

4एनमुपांशुसवनेन श्रीणाति—विवस्व इति ॥ हे विवस्वः, विव इति धननाम, तद्वान्विवस्वान् 'ततो विवस्वानादित्योजायत'* इति य उच्यते । रश्मिलक्षणैर्धनैस्तद्वान् । 'मतुवसोः' इति रुत्वम् । आदित्य अदितेः पुत्र । 'नामन्त्रिते समानाधिकरणे' इति पूर्वस्याविद्यमानत्वनिषेधाद्द्वितीयं निहन्यते। एष ते तव सोमपीथः सोमपानम् । 'पातृतुदिवचि' इत्यादिना थकप्रत्ययः । तेनानेन मन्दस्व मादयस्व तव भ्रातॄन् । 'तस्यै चत्वार आदित्या अजायन्त'* इति चत्वार आदित्या बभूवुः, तेषां चैको विवस्वान्, य इहामन्त्र्यते । 'योतो जायाता अस्माकं स एकोसत्'* इत्यादिति प्रथमजा आदित्याः प्रार्थयांचक्रिरे। तस्मान्मन्दस्वेति मादयस्वेति व्याख्यायते । मदिस्तुतिमोदमदस्वप्नगतिषु । तेन सोमपीथेन त्वमपि तृप्य तृप्तो भव । ते तव

---

*सं-६-५-६.

तृप्यास्म ते वयं तर्पयितारो या दिव्या वृष्टिस्तया त्वा श्रीणामि ॥ २३ ॥

तेन । तृप्य । तृप्यास्म । ते । वयम् । तर्पयितारः । या । दिव्या । वृष्टिः । तया । त्वा । श्रीणामि ॥ २३ ॥

वस्सप्तविंशतिश्च ॥ २२ ॥

---

तर्पयितारो वयमपि तृप्यास्म तृप्ता भूयास्म । आशिषि लिङ्, तिङः परत्वान्न निहिन्यते । किञ्च—या दिव्या वृष्टिः । दिवमर्हतीति 'छन्दसि च' इति यत्प्रत्ययः । ननु 'मन्त्रे वृष' इति क्तिन उदात्तत्वेन भवितव्यम् । भाव्यं भावे क्तिनः, इह तु करणे क्तिन् । तया हे सोम त्वां श्रीणामि मिश्रयामि । ननूपांशुसवनेन श्रीणातीत्युक्तं, तत्कथं वृष्ट्या श्रीयत इति । नैष दोषः, 'वृष्टिकामस्य श्रीणीयात्'* इति श्रयणस्य वृष्टिहेतुत्वादभेदोपचारः, वृष्टिहेतुनोपांशुसवनेन श्रीणामीति यावत् । 'यदि ताजक्प्रस्कन्देत्'* इत्यादि ब्राह्मणम् ॥

इति चतुर्थे द्वाविंशः.

---

*सं. ६-५-६.

वामम॒द्य स॑वितर्वा॒मम॒ु श्वो दि॒वे-
दि॑वे वा॒मम॒स्मभ्य॑ꣳ सावीः । वा॒म-
स्य॒ हि क्षय॑स्य देव॒ भूरे॑र॒या धि॒या

[1]वा॒मम् । अ॒द्य । स॒वि॒तः॒ । वा॒मम् । उ॒ । श्वः ।
दि॒वेदि॑व॒ इति॑ दि॒वे—दि॒वे॒ । वा॒मम् । अ॒स्मभ्य॒मि-
त्य॒स्म—भ्य॒म् । सा॒वीः॒ । वा॒मस्य॑ । हि । क्षय॑स्य ।
दे॒व॒ । भूरेः॑ । अ॒या । धि॒या । वा॒म॒भाज॒ इति॑

---

[1]अन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति—वाममद्य सवितरिति चतुष्पदया त्रिष्टुभा ॥ वाममुश्व इति प्रथमः पादस्समाप्यते । हे सवितः अद्य अस्मिन्नहनि यद्वामं वननीयं मङ्गळं तदेव सावीरिति वक्ष्यमाणेन सम्बन्धः । वाममुश्वः आगामिन्यप्यहनि वाममेव । उकारस्समुच्चये, श्वोपीति । अवधारणे वा, वाममेवेति । किं बहुना—दिवेदिवे अहन्यहनि अस्मभ्यं वाममेव सावीः सुष्ठु प्रेरय अनुजानीहीत्यर्थः । षूङ् प्रेरणे, 'छन्दसि लुङ्लङ्लिटः' इति लुङि 'बहुलं छन्दस्यमाङ्योगेपि' इत्यडभावः । दिवेदिव इति सप्तम्यर्थे चतुर्थी, 'ऊडिदम्' इति विभक्त्युदात्तत्वम् । तादर्थ्ये वा चतुर्थी, दिवसाय सर्वदिवसार्थं मङ्गळस्य अनुज्ञां कुरु । किञ्च—अया धिया अनया बुद्ध्या वामप्राप्तिमाशासानया, तादृश्या वामभाजस्स्याम तादृश्या वामं भजाम । कीदृशम्? वामस्य सर्वाङ्गीणमङ्गलस्य भूरेरनल्पस्य क्षयस्य निवासस्य । 'क्षयो निवासे' इत्याद्युदात्तत्वम् । ईदृ-

वामभाजस्स्याम । उपयामगृही-
तोसि देवाय त्वा सवित्रे ॥ २४ ॥

वाम-भाजः । स्याम । [2]उपयामगृहीत इत्युप-याम-गृहीतः । असि । देवाय । त्वा । सवित्रे ॥ २४ ॥

वामं चतुर्विंशतिः ॥ २३ ॥

---

शस्य निवासस्य यद्वामं तद्भाजस्स्याम हे देवा धनधान्यपशुपुत्रपौत्रादिसमृद्धिमहाभाग्यवन्तस्स्यामेत्यर्थः । इदमः परस्य तृतीयैकवचनस्य 'सुपां सुलुक्' इति याजादेशः, 'ऊडिदम्' इत्यादिनोदात्तत्वम् । धियेति तु 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । वामं भजन्तीति वामभाजः । भजेर्ण्विप्रत्ययः । क्षयमपेक्षमाणस्यापि गमकत्वात्समासः, यथा देवदत्तस्य गुरुकुलमिति । देवभूरेरिति तृतीयपादावसानम् ॥

[2]इमामनुद्रुत्य उपयामगृहीतोसि देवाय त्वा सवित्र इति गृह्णाति। 'एष वै गायत्रो देवानाम्'* इत्यादि ब्राह्मणम् ; 'विश्वे देवास्तृतीयं सवनं नोदयच्छन्'* इत्यादि च ॥

इति चतुर्थे त्रयोविंशः.

---

*सं. ६-५-७.

अदब्धेभिस्सवितः पायुभिष्ट्वꣳ शि-
वेभिरद्य परि पाहि नो गयम् ।
हिरण्यजिह्वस्सुविताय नव्यसे रक्षा

[1]अदब्धेभिः । सवितः । पायुभिरिति पायु-भिः । त्वम् । शिवेभिः । अद्य । परीति । पाहि । नः । गयम् । हिरण्यजिह्व इति हिरण्य-जिह्वः । सुविताय । नव्यसे । रक्ष । माकिः । नः । अघशꣳस

[1]सावित्रस्यैव ग्रहणविकल्पः पूर्वेण सह विकृत्यर्थः—अदब्धेभिरिति चतुष्पदया त्रिष्टुभा ॥ हे सवितः अद्य अस्मिन्नहनि नः अस्माकं गयं गृहं परिपाहि सर्वतो रक्ष अदब्धेभिः अदब्धैः केनाप्यहिंसितैः, क्वचिदप्यप्रतिहतैर्वा, पायुभिः पालनैः प्रजानां रसानाम् । त्रिभिर्वा*रश्मय उच्यन्ते । शिवेभिश्शिवैश्शान्तकलुषैः पावनैरिति यावत् । ‘ बहुलं छन्दसि ’ इत्यैसभावः । पायुभिरित्यत्र ‘ कृपावाजि ’ इत्यादिनोण्प्रत्ययः, ‘ युष्मत्तत्ततक्षुष्वन्तः पादं ’ इति संहितायां भिसस्सकारस्य षत्वम् । एवमैहिकभोग† स्थानगृहस्य रक्षा प्रार्थिता । आमुष्मिकसुखस्थानमधुना प्रार्थयते—सुविताय सुष्ठु इताय प्राप्ताय स्थानाय, सुकृतेन प्राप्तायेति यावत् । ‘ तन्वादीनां छन्दसि बहुलम् ’ इत्युवङादेशः, ‘ सूपमानात्क्तः ’ इत्युत्तरपदान्तोदात्तत्वम् । नव्यसे नवतराय सर्वदाभिनवाय । ईयसुन ईकारस्य यकारस्य वा छान्दसो लोपः‡ ।

*ख—प्रजानां र[स]स्यानां. †ख—कमुख.
‡ख—ईयस ईकारस्य यकारश्छान्दसः.

माकिर्नो अघशꣳस ईशत । उप-
यामगृहीतोसि देवाय त्वा सवि-
त्रे ॥ २५ ॥

इत्यघ–शꣳसः । ईशत । [2]उपयामगृहीत इत्युप-
याम–गृहीतः । असि । देवाय । त्वा ।
सवित्रे ॥ २५ ॥

अदब्धेभिस्त्रयोविꣳशतिः ॥ २४ ॥

---

ईदृशमस्मदीयं स्वर्गस्थानं रक्षेत्यर्थः । हिरण्यजिह्वस्त्वं, रसाहरण-साधनतया जिह्वास्थानीया रश्मयो जिह्वा उच्यन्ते, हिरण्यस्वभावाः क्रमणशीलाः जिह्वा यस्य तादृशस्त्वं रक्ष । हर्य गतिकान्त्योः, 'हर्यतेः कन्यन् हिर च' इति कन्यन्प्रत्ययः । किञ्च—नः अस्माकं कश्चिदप्यघशंसः अघे शंसनमभिलाषो यस्य तादृशो माकिरीशिता मा ईशिष्ट । माकिरिति छान्दस उपजनः; निपा-तान्तरं वा, यथाह गणकारः—'यत्र माकिर्नेकिर्नभ' इति । ईष्टेर्लेङि विकरणव्यत्ययेन च्लेरङादेशः । 'अनुदात्ते च कुधपरे' इति संहितायां प्रकृतिभावः । 'द्व्यचोतस्तिङः' इति रक्षेत्यस्य दीर्घः । इत्थं प्रार्थयमानानामस्माकं न कश्चिदप्यनिष्टकृत्स्या-दित्यर्थः ॥

[2]उपयामगृहीतोसीत्यादि पूर्ववत् ॥

इति चतुर्थे चतुर्विंशोनुवाकः.

---

हिरण्यपाणिमूतये सवितारमुप ह्वये । स चेत्ता देवता पदम् । उपयामगृहीतोसि देवाय त्वा सवित्रे ॥ २६ ॥

[1]हिरण्यपाणिमिति हिरण्य-पाणिम् । ऊतये । सवितारम् । उपेति । ह्वये । सः । चेत्ता । देवता । पदम् । [2]उपयामगृहीत इत्युपयाम-गृहीतः । असि । देवाय । त्वा । सवित्रे ॥ २६ ॥

हिरण्यपाणिं चतुर्दश ॥ २५ ॥

---

[1]पुनश्च सावित्रं गृह्णाति—हिरण्यपाणिमिति त्रिपदया गायत्र्या ॥ पूर्ववद्विकल्प एव । हिरण्यस्य विकारः कटककेयूराङ्गुलीयादीनि आभरणानि पाण्योः यस्य स हिरण्यपाणिः । समुदायविकारषष्ठ्या बहुव्रीहिर्वाचोत्तरपदलोपश्च । यद्वा—रसहरणशीलाः पाणयो रश्मयो यस्य । हितरमणीयपाणिर्वा । तं हिरण्यपाणिं सवितारमुपह्वये मनसा उपेत्याह्वयामि ऊतये अवनाय तर्पणाय वा । 'ऊतियूति' इति क्तिन उदात्तत्वम् । कः पुनस्तस्य विशेष इत्याह—स हि देवस्सविता अस्माकं पदमास्पदं स्थानमित्यर्थः । कीदृशः? चेत्ता ज्ञाता, रक्षाविधानोपायज्ञः । साधुकारिणि त्रन्, व्यत्ययेनेडभावः । देवता चास्माकम् ॥

[2]उपयामगृहीतोसीत्यादि पूर्ववत् ॥

इति चतुर्थे पञ्चविंशः.

सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नम एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ २७ ॥

[1]सुशर्मेति सु–शर्मा । असि । सुप्रतिष्ठान इति सु–प्रतिष्ठानः । बृहत् । उक्षे । नमः । [2]एषः । ते । योनिः । विश्वेभ्यः । त्वा । देवेभ्यः ॥ २७ ॥

सुशर्मा द्वादश ॥ २६ ॥

---

[1]सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति—सुशर्मेति यजुषा ॥ वैश्वदेवो गण उच्यते । सुशर्मा सुसुखः शोभनग्रहो वा त्वमसि । 'सोर्मनसी' इत्युत्तरपदाद्युदात्तत्वम् । सुप्रतिष्ठानः शोभनं प्रतिष्ठानं प्रतिष्ठा यज्ञाख्या यस्य त्वम् । यद्वा—सुष्ठु प्रतिष्ठन्ति सर्वे यागाभिनिवृत्तिद्वारेणेति सुप्रतिष्ठानः । 'मन्क्तिन्व्याख्यान' इत्यादिना उत्तरपदान्तोदात्तत्वमकारकादावपि भविष्यति । तस्मै तुभ्यं उक्षे सेक्त्रे वृष्टिमुत्पादयित्रे । 'सावेकाचः' इति चतुर्थ्या उदात्तत्वम् । इदं बृहन्नमः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अन्नं सोमाख्यं गृह्यते त्वदर्थं गृह्णीमः । यद्वा—सोम एवोच्यते, हे सोम सुशर्मासीत्यादि समानम् । तादृशस्त्वं बृहन्नमः प्रभूतमन्नं अदनीयमस्मै उक्षे वैश्वदेवाय गणाय गृह्यस इति ॥

[2]एष ते योनिः इत्यादि व्याख्यातमायम् । 'वैश्वदेव्यो वै प्रजा वैश्वदेवः कलशः'* इत्यादि ब्राह्मणम् ॥

इति चतुर्थे षड्विंशः.

---

*सं. ६–५–७.

बृहस्पतिसुतस्य त इन्दो इन्द्रिया-
वतः पत्नीवन्तं ग्रहं गृह्णाम्यग्ना३इ प-

[1]बृहस्पतिसुतस्येति बृहस्पति–सुतस्य । ते । इन्दो इति । इन्द्रियावत इतीन्द्रिय–वतः । पत्नीवन्तमिति पत्नी–वन्तम् । ग्रहम् । गृह्णामि ।

---

[1]उपांशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति—बृहस्पतिसुतस्येति ॥ उत्तरया जुहोति । तत्र प्रथमा त्रिपदा गायत्री, द्वितीया द्विपदा षोडशाक्षरा स्वाहाकारान्ता स्वयं यजुः । तत्राग्ना३इ पत्नीवा३ इत्युभयत्रापि 'दूराद्धूते च' इत्युदात्तप्लुतः, 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्योत्तरस्येदुतौ' इति पूर्वस्य प्लुतविकार इकारः । स च छन्दस्सङ्ख्याने नाद्रियते, उत्तरस्य पत्नीवा इत्यस्य 'मतुवसोः' इति रुत्वम्, द्वयोरपि षाष्ठिकमामन्त्रिताद्युदात्तत्वम्, द्वितीयस्यापि पूर्वस्याविद्यमानत्वात् प्लुतस्योदात्तस्यासिद्धत्वात् वर्ज्यमानस्वरेण निवृत्तिः । तत्र बृहस्पतिसुतस्येति प्रथमा व्याख्यायते । सोम उच्यते । इन्दो सोम ते तव बृहस्पतिसुतस्य बृहस्पतिना ब्रह्मणैव सुतस्य । यद्वा—बृहतो महतो यज्ञाख्यस्य कर्मणः पत्या पालयित्रा यजमानेन सुतस्याभिषुतस्य । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्, पूर्वपदं च वनस्पत्यादि, तस्य च सुड्द्वरावुक्तौ, तत्र वृत्तिविषये बृहच्छब्द आद्युदात्तः । इन्द्रियावतः वीर्यवतः । 'मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ' इति दीर्घः । तवैकदेशेन पत्नीवन्तं ग्रहं गृह्णामि । 'छन्दसीरः' इति मतुपो वत्वम् ॥

त्नीवा३स्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा ॥ २८ ॥
हरिरसि हारियोजनो हर्योस्स्थाता

[2]अग्ना३इ । पत्नीवा३ इति पत्नी–वा३ः । सजूरिति स–जूः । देवेन । त्वष्ट्रा । सोमम् । पिब । स्वाहा ॥ २८ ॥

बृहस्पतिसुतस्य पञ्चदश ॥ २७ ॥

[1]हरिः । असि । हारियोजन इति हारि–

---

[2]अथ द्वितीया—हे अग्ने पत्नीवन् देवेन त्वष्ट्रा सजूः समानप्रीतिः । नास्य पानेन्वयः । 'ससजुषोः' इति रुत्वम् । सोमं पिब । द्वौ प्रत्येकमुच्येते । स्वाहा स्वाहुतमिदं तवास्तु । 'देवा वा इतइतः पत्नीः'* इत्यादि ब्राह्मणम्, 'स सोमो नातिष्ठत स्त्रीभ्यो गृह्यमाणः'* इत्यादि च ॥

इति चतुर्थे सप्तविंशः.

---

[1]हारियोजनं गृह्णाति—हरिरसीति ॥ सोम एवोच्यते । हरिरिन्द्रः स एव त्वमसीतीन्द्रात्मना सोमस्स्तूयते । यद्वा—हरिर्हर्ता अभिमतानां श्रेयसामाहर्ता त्वमसि । हारियोजनः, हरिः अश्वविशेषः योजनो वाहनं यस्य स हरियोजनः इन्द्रः, तस्य स्वभूतः

*सं. ६-५-८.

वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते
देव सोमेष्टयजुषस्स्तुतस्तोमस्य श-
स्तोक्थस्य हरिवन्तं ग्रहं गृह्णामि

योजनः । हर्योः । स्थाता । वज्रस्य । भर्ता ।
पृश्नेः । प्रेता । तस्य । ते । देव । सोम । इष्टयजुष
इतीष्ट–यजुषः । स्तुतस्तोमस्येति स्तुत–स्तोम-
स्य । शस्तोक्थस्येति शस्त–उक्थस्य । हरिवन्त-

---

हारियोजनः, ऐन्द्रोसीत्यर्थः । हर्योः स्थाता, हर्योरश्वयोः स्थाता, इन्द्ररूपत्वात्, हरिभ्यां भक्षितऋजीषरूपत्वाद्वा । वज्रस्य भर्ता धारयिता इन्द्ररूपत्वादेव । पृश्नेः प्रेता, पृश्नेरन्नस्य यागसाधनद्वारेण प्रेता प्रेरयिता प्रापयिता वा । प्रीङ् तर्पणे । हे सोम देव तस्य तादृशस्य ते तव इष्टयजुषः अध्वर्युभिर्यज्ञे इष्टानि विनियुक्तानि सर्वाणि यजूंषि प्रायेण त्वत्संस्कारार्थानीति इष्टयजुष्ट्वम् । स्तुतस्तोमस्य उद्गातृभिश्च स्तुतास्स्तोमाः स्तोत्राणि त्वदर्थमिति स्तुतस्तोमत्वम् । शस्तोक्थस्य होतृभिश्शस्तान्युक्थानि शस्त्राणि त्वदर्थमिति शस्तोक्थत्वम् । यद्वेन्द्ररूपत्वात्सर्वमुपपद्यते । तस्य तव विशेष*-संस्कारसंस्कृतस्य हरिवन्तं हरिमन्तं ग्रहं गृह्णामि, आग्रयण-स्थालीगतस्य सर्वस्य† गृह्यमाणत्वात् । तस्येत्यन्त्यात् [स्येत्यादेः ?] कर्मणि षष्ठ्यन्तत्वात्तादृशं हरिवन्तं इन्द्रवन्तं ग्रहं गृह्णामीति । 'छन्दसीरः' इति मतुपो वत्वम् ॥

---

*ग—होमशेष. †क—सर्वस्य ग्रहस्य.

हरीस्स्थ हर्योर्धानास्सहसोमा इ-
न्द्राय स्वाहा ॥ २९ ॥

मिति हरि–वन्तम् । ग्रहम् । गृह्णामि । [2]हरीः । स्थ । हर्योः । धानाः । [3]सहसोमा इति सह–सोमाः । इन्द्राय । स्वाहा ॥ २९ ॥

हरिष्षड्विंशतिः ॥ २८ ॥

[2]धानाभिश्श्रीणाति—हरीः स्थेति ॥ हरिभ्यां तद्वानिन्द्रो लक्ष्यते । ततस्ताद्दशेन्द्रात्म*तया धानास्स्तूयन्ते । तत इन्द्रप्रियतया इन्द्राभेदेन स्तुतिः । यद्वा—अश्वात्मतया धानास्स्तूयन्ते । इन्द्रार्थं हे धानाः हरीः स्थ । किञ्च—हर्योरश्वयोर्धानास्थ हरिवत इन्द्रस्येति† भावः । 'इन्द्रो वृत्रमहन् तस्य शीर्षकपालमुदौब्जत्'‡ इत्यादि ब्राह्मणम् ॥

[3]जुहोति—सहसोमाः सोमेन सहिताः । 'वोपसर्जनस्य' इति पाक्षिकत्वात्सभावाभावः । हे धाना ईदृश्यो यूयमिन्द्राय स्वाहा स्वाहुतास्थ ॥

इति चतुर्थेऽष्टाविंशोऽनुवाकः.

---

*ग—दृशेन्द्रायत्त. †क—इन्द्रपीतस्येति. ‡सं. ६–५–९.

अग्न आयूꣳषि पवस आ सुवोर्ज-
मिषं च नः । आरे बाधस्व दुच्छुना-
म् । उपयामगृहीतोस्यग्नये त्वा
तेजस्वत एष ते योनिरग्नये त्वा
तेजस्वते ॥ ३० ॥

[1]अग्ने । आयूꣳषि । पवसे । एति । सुव । ऊर्जम् । इषम् । च । नः । आरे । बाधस्व । दुच्छुनाम् । [2]उपयामगृहीत इत्युपयाम–गृहीतः । असि । अग्नये । त्वा । तेजस्वते । [3]एषः । ते । योनिः । अग्नये । त्वा । तेजस्वते ॥ ३० ॥

अग्न आयूꣳषि त्रयोविꣳशतिः ॥ २९ ॥

[1]अथातिग्राह्याणामाग्नेयं गृह्णाति—अग्न आयूंषीति गायत्र्या ॥ व्याख्याता चेयम् 'त्वमग्ने रुद्रः '* इत्यत्र । 'देवा वा इन्द्रियं वीर्यं व्यभजन्त ततो यदत्यशिष्यत '† इत्यादि ब्राह्मणम्, 'अप्यग्निष्टोमे ग्रहीतव्याः '† इत्यादि च । हे अग्ने आयूंषि पवस्व ऊर्जं रसं इषमन्नं च नः अस्मभ्यमासुव आनय दुच्छुनां दौर्गत्यं चास्माकमारे दूरे बाधस्वेति ॥

[2–3]ग्रहणसादनमन्त्रौ गतौ ॥

इति चतुर्थे एकोनत्रिंशोनुवाकः.

*सं. १-३-१४[23]. †स. ६-६-८.

उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे-
अवेपयः । सोममिन्द्र चमू सुतम् ।
उपयामगृहीतोसीन्द्राय त्वौजस्वत
एष ते योनिरिन्द्राय त्वौजस्व-
ते ॥ ३१ ॥

[1]उत्तिष्ठन्नित्युत्-तिष्ठन् । ओजसा । सह । पीत्वा । शिप्रे इति । अवेपयः । सोमम् । इन्द्र । चमू इति । सुतम् । [2]उपयामगृहीत इत्युपयाम-गृहीतः । असि । इन्द्राय । त्वा । ओजस्वते । [3]एषः । ते । योनिः । इन्द्राय । त्वा । ओज-स्वते ॥ ३१ ॥

उत्तिष्ठन्नेकांविंशतिः ॥ ३० ॥

---

[1]अथैन्द्रं गृह्णाति—उत्तिष्ठन्निति गायत्र्या ॥ हे इन्द्र सुतम-भिषुतं सोमं पीत्वा ओजसा बलेन महता सह उत्तिष्ठन् शिप्रे हनू । कीदृग्भूते ? चमू अदनकरणभूते अवेपयः वेपय आचूषणि-कान्तां तृप्तिं जनयन् हनुयुगळं चालय । चमु छमु अदने, औणा-दिक ऊप्रत्ययः ॥

[2—3]ग्रहणसादने व्याख्याते ॥

इति चतुर्थे त्रिंशोनुवाकः.

*तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् ।

तरणिः । विश्वदर्शत इति विश्व-दर्शतः । ज्योतिष्कृदिति ज्योतिः-कृत् । असि । सूर्य । विश्वम् । एति । भासि । रोचनम् ।

[1]अथ सौर्यं गृह्णाति—तरणिरिति गायत्र्या ॥ केचिदाहुरेकात्रिंशोयमनुवाकोस्मिन्प्रदेशेध्येतव्य इति । अन्ये तु यथाम्नातेनैव सौर्योतिग्राह्यो गृह्यते, नावश्यकमत्राध्ययनमित्याहुः ॥ तरणिः क्षिप्रगामी पापानां तारयिता वा । तरतेरनिप्रत्ययः । विश्वदर्शतः विश्वं दर्शयितव्यं यस्य सः विश्वदर्शतः । दृशेरौणादिकोतच्प्रत्ययः, 'बहुव्रीहौ विश्वं संज्ञायाम्' इति विश्वशब्दस्यान्तोदात्तत्वम् । यद्वा—विश्वस्य दर्शयिता विश्वदर्शतः । व्यत्ययेन पूर्वपदान्तोदात्तत्वम् । ज्योतिष्कृत् ज्योतिषः प्रकाशस्य कर्ता उत्पादयिता । यद्वा—ज्योतिषां ग्रहनक्षत्रादीनां कर्ता उद्भावयिता, त्वदधीनप्रकाशत्वात्तेषाम् । यथाहुः—

'सूर्याभिमुखानि दीप्यन्ते' इति । हे सूर्य ईदृशस्त्वमसि सत्वं विश्वं रोचनं प्रकाशकं ग्रहनक्षत्रादिकं सुषुम्नाख्येन रश्मिनानुप्रविश्य आभासि दृश्यसे लोकेन, तानि वा प्रकाशयसि, तस्मादुच्यते 'ज्योतिष्कृदसि' इति ॥

[2—3]ग्रहणसादने गते । न त्वाम्नातमित्युक्तम् ॥

(इति चतुर्थे एकत्रिंशः.)

*आदावेवंचिह्निता अनुवाकाष्षडप्यत्रान।म्नाता इति भट्टभास्करमिश्रैरुच्यते । तथाप्येतेषु प्रथमोनुवाकः प्रदर्शनार्थमेवात्र व्याख्यातः ॥

उपयामगृहीतोसि सूर्याय त्वा भ्राजस्वत एष ते योनिस्सूर्याय त्वा भ्राजस्वते ॥ ३२ ॥

*आ प्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः । भवा नस्सप्रथस्तमः ॥ ३३ ॥

*ईयुष्टे ये पूर्वतरामपश्यन्व्युच्छन्ती-

उपयामगृहीत इत्युपयाम–गृहीतः । असि । सूर्याय । त्वा । भ्राजस्वते । एषः । ते । योनिः । सूर्याय । त्वा । भ्राजस्वते ॥ ३२ ॥

तरणिर्विंश्शतिः (॥ ३१ ॥)

एति । प्यायस्व । मदिन्तम । सोम । विश्वाभिः । ऊतिभिरित्यूति–भिः । भव । नः । सप्रथस्तम इति सप्रथः–तमः ॥ ३३ ॥

आ प्यायस्व नव (॥ ३२ ॥)

ईयुः । ते । ये । पूर्वतरामिति पूर्व–तराम् । अपश्यन् । व्युच्छन्तीमिति वि–उच्छन्तीम् ।

*आदावेवचिह्निता अनुवाकाष्षडप्यत्रानाम्नाता इति भट्टभास्करमिश्रैरुच्यते ।

मुषसं मर्त्यासः । अस्माभिरू नु प्रतिचक्ष्याभूदो ते यन्ति ये अपरीषु पश्यान् ॥ ३४ ॥

*ज्योतिष्मतीं त्वा सादयामि ज्योतिष्कृतं त्वा सादयामि ज्योतिर्विदं त्वा सादयामि भास्वतीं त्वा सादयामि ज्वलन्तीं त्वा सादयामि मल्मला-

उषसम् । मर्त्यासः । अस्माभिः । उ । नु । प्रतिचक्ष्येति प्रति-चक्ष्या । अभूत् । ओ इति । ते । यन्ति । ये । अपरीषु । पश्यान् ॥ ३४ ॥

ईयुरेकान्न विंशतिः (॥ ३३ ॥)

ज्योतिष्मतीम् । त्वा । सादयामि । ज्योतिष्कृतमिति ज्योतिः-कृतम् । त्वा । सादयामि । ज्योतिर्विदमिति ज्योतिः-विदम् । त्वा । सादयामि । भास्वतीम् । त्वा । सादयामि । ज्वलन्तीम् । त्वा । सादयामि । मल्मलाभवन्तीमिति मल्मला-भवन्तीम् । त्वा । सादयामि । दीप्य-

*आदावेवंचिह्निता अनुवाकाष्षडप्यत्रानाम्नाता इति भट्टभास्करमिश्रैरुच्यते ।

भवन्तीं त्वा सादयामि दीप्यमानां त्वा सादयामि रोचमानां त्वा सादयाम्यजस्रां त्वा सादयामि बृहज्ज्योतिषं त्वा सादयामि बोधयन्तीं त्वा सादयामि जाग्रतीं त्वा सादयामि ॥ ३५ ॥

*प्रयासाय स्वाहायासाय स्वाहा वियासाय स्वाहा संयासाय स्वाहो-

मानाम् । त्वा । सादयामि । रोचमानाम् । त्वा । सादयामि । अजस्राम् । त्वा । सादयामि । बृहज्ज्योतिषमिति बृहत्–ज्योतिषम् । त्वा । सादयामि । बोधयन्तीम् । त्वा । सादयामि । जाग्रतीम् । त्वा । सादयामि ॥ ३५ ॥

ज्योतिष्मतीꣳ षट्त्रिꣳशत् (॥ ३४ ॥)

प्रयासायेति प्र–यासाय । स्वाहा । आयासायेत्या–यासाय । स्वाहा । वियासायेति वि–या-

*आदावेवंचिह्निता अनुवाकाष्षडप्यत्रानाम्नाता इति भट्टभास्करमिश्रैरुच्यते ।

द्यासाय स्वाहावयासाय स्वाहा
शुचे स्वाहा शोकाय स्वाहा तप्य-
त्वै स्वाहा तपते स्वाहा ब्रह्महत्यायै
स्वाहा सर्वस्मै स्वाहा ॥ ३६ ॥

*चित्तꣳ सन्तानेन भवं यक्ना रुद्रं त-
निम्ना पशुपतिꣳ स्थूलहृदयेनाग्निꣳ

सायं । स्वाहा । संयासायेति सं—यासायं । स्वाहा । उद्यासायेत्युत्—यासायं । स्वाहा । अवयासायेत्यव—यासायं । स्वाहा । शुचे । स्वाहा । शोकाय । स्वाहा । तप्यत्वै । स्वाहा । तपते । स्वाहा । ब्रह्महत्याया इति ब्रह्म—हत्यायै । स्वाहा । सर्वस्मै । स्वाहा ॥ ३६ ॥

प्रयासाय चतुर्विꣳशतिः (॥ ३५ ॥)

चित्तम् । सन्तानेनेति सं—तानेन । भवम् । यक्ना । रुद्रम् । तनिम्ना । पशुपतिमिति पशु—पतिम् । स्थूलहृदयेनेति स्थूल—हृदयेन । अग्निम् । हृदयेन । रुद्रम् । लोहितेन । शर्वम् । मतस्ना-

*आदावेवंचिह्निता अनुवाकाष्षडप्यत्रानाम्नाता इति भट्टभास्करमिश्रैरुच्यते ।

हृदयेन रुद्रं लोहितेन शर्वं मतस्नाभ्यां महादेवमन्तःपार्श्वेनौषिष्ठहनꣳ शिङ्गीनिकोश्याभ्याम् ॥ ३७ ॥

आ तिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी। अर्वाचीनꣳ सु ते मनो ग्रावा

भ्याम् । महादेवमिति महा—देवम् । अन्तःपार्श्वेनेत्यन्तः—पार्श्वेन । ओषिष्ठहनमित्योषिष्ठ—हनम् । शिङ्गीनिकोश्याभ्यामिति शिङ्गी—निकोश्याभ्याम् ॥ ३७ ॥

चित्तमष्टादश (॥ ३६ ॥)

[1]एति । तिष्ठ । वृत्रहन्निति वृत्र—हन् । रथम् । युक्ता । ते । ब्रह्मणा । हरी इति । अर्वाचीनम् । स्विति । ते । मनः । ग्रावा । कृणोतु । वग्नुना ।

---

[1]षोडशिनं गृह्णाति—आतिष्ठेत्यनुष्टुभा ॥ हे वृत्रहन् रथमातिष्ठ । यस्मात्ते तव स्वभूतौ हरी अश्वौ ब्रह्मणा मन्त्रेण युक्ता युक्तौ । 'सुपां सुलुक्' इत्याकारः । तस्माद्रथमातिष्ठेति । किञ्च—ते तव मनः अर्वाचीनं अस्मद्यज्ञाभिमुखं ग्रावा अभिषवाश्मा सुकृणोतु सुष्ठु करोतु वग्नुना वचनीयेन श्रवणीयेनाभिषवशब्देन ॥

कृणोतु वग्नुना । उपयामगृहीतो-
सीन्द्राय त्वा षोडशिने एष ते
योनिरिन्द्राय त्वा षोडशिने ॥३८॥
इन्द्रमिद्धरी वहतोप्रतिधृष्टशवस-

[2]उपयामगृहीत इत्युपयाम—गृहीतः । असि ।
इन्द्राय । त्वा । षोडशिने । [3]एषः । ते । योनिः ।
इन्द्राय । त्वा । षोडशिने ॥ ३८ ॥

आ तिष्ठ षड्विंशतिः (॥३७॥) ॥३१॥

[1]इन्द्रम् । इत् । हरी इति । वहतः । अप्रतिधृष्ट-

---

[2—3]ग्रहणसादने व्याख्याते । षोडशिनः षोडशेन स्तोत्रेण शस्त्रेण च तद्वानिन्द्रष्षोडशी । ' प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्स रिरिचानोमन्यत स यज्ञानां षोडशधा '* इत्यादि ब्राह्मणम् ॥

इति चतुर्थे एकत्रिंशोनुवाकः.

---

[1]तस्मिन्नेव [1] माध्यंदिनसवने गृह्णाति—इन्द्रमित्यनुष्टुभा ॥ ' सवने सवनेभि गृह्णाति '* इत्यादि ब्राह्मणम् । इन्द्रमित् इन्द्रमेव अप्रति- धृष्टशवसं केनाप्यप्रधर्षितबलम् । हरी अश्वौ यज्ञमुपवहतः यज्ञस्य

---

*सं. ६-६-११.

मृषीणां च स्तुतीरुप यज्ञं च मानुषा-
णाम् । उपयामगृहीतोसीन्द्राय त्वा
षोडशिने एष ते योनिरिन्द्राय त्वा
षोडशिने ॥ ३१ ॥

शवसमित्यप्रतिधृष्ट–शवसम् । ऋषीणाम् । च । स्तुतीः । उपेति । यज्ञम् । च । मानुषाणाम् । [2]उपयामगृहीत इत्युपयाम–गृहीतः । असि । इन्द्राय । त्वा । षोडशिने । [3]एषः । ते । योनिः । इन्द्राय । त्वा । षोडशिने ॥ ३१ ॥

इन्द्रमित्त्रयोविꣳशतिः (॥३८॥) ॥३२॥

---

समीपं प्रापयतः । ऋषीणां मनुष्याणां च स्तुतीः स्तोत्राणि उपवहतः यत्र यत्र ते स्तुवन्ति तत्र सर्वत्र प्रापयतः । यद्वा— इन्द्रं हरी अश्वौ यज्ञं प्रापयतः ऋषीणां च मनुष्याणां च स्तुतय इन्द्रमेव यज्ञसमीपं प्रापयन्ति, यथासौ यज्ञसमीपमागच्छति तथा ते अमुं स्तुवन्तीत्यर्थः । व्यत्ययेन प्रथमास्थाने द्वितीया । 'मनोर्जातौ' इति मनुशब्दादञ् षुगागमश्च ॥

[2–3]ग्रहणसादने गते ॥

इति चतुर्थे द्वात्रिंशोनुवाकः.

---

असावि सोम इन्द्र ते शविष्ठ धृ-
ष्णवा गहि । आ त्वा पृणक्त्विन्द्रि-
यꣳ रजस्सूर्यं न रश्मिभिः । उपया-
मगृहीतोसीन्द्राय त्वा षोडशिन एष
ते योनिरिन्द्राय त्वा षोडशिने ॥ ४० ॥

[1]असावि । सोमः । इन्द्र । ते । शविष्ठ । धृष्णो । एति । गहि । एति । त्वा । पृणक्तु । इन्द्रियम् । रजः । सूर्यम् । न । रश्मिभिरिति रश्मि—भिः । [2]उपयामगृहीत इत्युपयाम—गृहीतः । असि । इन्द्राय । त्वा । षोडशिने । [3]एषः । ते । योनिः । इन्द्राय । त्वा । षोडशिने ॥ ४० ॥

असावि सप्तविꣳशतिः (॥३१॥) ॥३३॥

---

[1]तस्मिन्नेव तृतीयसवने गृह्णाति—असावीत्यनुष्टुभा ॥ हे इन्द्र शविष्ठ बलवत्तम । शवस्वच्छब्दादिष्ठनि 'विन्मतोर्लुक्' इति मतुपो लुक्, 'टेः' इति टिलोपः । हे धृष्णो शत्रूणां धर्षयितः । 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति क्नुप्रत्ययः । आगहि आगच्छ अस्मद्यज्ञम् । गमेश्शपो लुक् । कस्मादेवमुच्यस इति चेत्? त्वदर्थमयं सोमोऽसावि अभिषुतस्तस्मादागच्छेति । किञ्च—इन्द्रियं वीर्यं सोमपानेन च प्रभूततां गतं त्वामापृणक्तु आपूरयतु । सूर्यमिव रज उदकं यथा रश्मिभिर्द्वारभूतैः सूर्यमापूरयति ॥

[2—3]ग्रहणसादने समाने ॥

इति चतुर्थे त्रयस्त्रिंशोनुवाकः.

सर्वस्य प्रतिशीवरी भूमिस्त्वोपस्थ आधित । स्योनास्मै सुषदा भव यच्छास्मै शर्म सप्रथाः । उपया-

[1]सर्वस्य । प्रतिशीवरीति प्रति-शीवरी । भूमिः । त्वा । उपस्थ इत्युप-स्थे । एति । अधित । स्योना । अस्मै । सुषदेति सु-सदा । भव । यच्छ । अस्मै । शर्म । सप्रथा इति स-प्रथाः ।

---

[1]अतः परं षोडशिग्रहणमन्त्राः पूर्वैस्सह विकल्प्यन्ते । तत्र प्रथमा—सर्वस्येत्यनुष्टुप् ॥ सर्वस्य भूतजातस्य प्रतिशीवरी प्रत्येकंसुखेन शयनाधिकरणभूता । शेतेरौणादिके क्वरच्युत्तरपदाद्युदात्तत्वम् । यद्वा—शयानस्य सर्वभूतजातस्य प्रतिशयनं प्रतिमुखं शयनं बालस्य जननीव करोतीति प्रतिशीवरी । 'अन्येभ्योपि दृश्यते' इति क्वनिप्, 'वनोरच' इति ङीब्रेफौ । हे इन्द्र ईदृशी भूमिस्त्वामुपस्थे आधित आदधातु स्थापयतु । हे भूमे या त्वमसि अस्मै इन्द्राय यजमानाय वा स्योना सुखा सुषदा सुखासनभूता च भव । किञ्च—अस्मै शर्म शरणं सुखं वा यच्छ देहि । सप्रथाः सर्वत्र प्रथिता विस्तीर्णा । छान्दसस्सवर्स्य सभावः । प्रथया सहितेति वा । बहुव्रीहौ 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् ॥

मगृहीतोसीन्द्राय त्वा षोडशिने एष
ते योनिरिन्द्राय त्वा षोडशिने॥४१॥
महाꣳ इन्द्रो वज्रबाहुष्षोडशी शर्मं
यच्छतु । स्वस्ति नो मघवा करोतु

[2]उपयामगृहीत इत्युपयाम-गृहीतः । असि । इन्द्राय । त्वा । षोडशिने । [3]एषः । ते । योनिः । इन्द्राय । त्वा । षोडशिने ॥ ४१ ॥

[1]महान् । इन्द्रः । वज्रबाहुरिति वज्र-बाहुः । षोडशी । शर्म । यच्छतु । स्वस्ति । नः । मघवेति मघ-वा । करोतु । हन्तु । पाप्मानम् ।

---

[2-3]ग्रहणसादने उक्ते ॥

इति चतुर्थे चतुस्त्रिंशोनुवाकः.

---

[1]महाꣳ इन्द्र इत्यादि । इयमप्यनुष्टुप् ॥ महत्त्वादिगुणविशिष्ट इन्द्रः अस्मभ्यं शर्म सुखं यच्छतु ददातु । स्वस्ति अविनाशं चास्माकं करोतु । हन्तु चास्माकं पाप्मानं पापम् । योस्मान्द्वेष्टि तं च हन्तु । यद्वा—योस्मान्द्वेष्टि तं पाप्मानं हन्तु ॥.

हन्तु पाप्मानं योऽस्मान्द्वेष्टि । उप-
यामगृहीतोसीन्द्राय त्वा षोडशिने
एष ते योनिरिन्द्राय त्वा षोड-
शिने ॥ ४२ ॥
सजोषा इन्द्र सगणो मरुद्भिस्सोमं-

यः । अस्मान् । द्वेष्टि । [2]उपयामगृहीत इत्युपयाम-गृहीतः । असि । इन्द्राय । त्वा । षोडशिने । [3]एषः । ते । योनिः । इन्द्राय । त्वा । षोडशिने ॥ ४२ ॥

सर्वस्य महान्थषड्विꣳशतिष्षड्विꣳ
शतिः (॥४०॥४१॥) ॥३४॥३५॥

[1]सजोषा इति स—जोषाः । इन्द्र । सगण

---

[2-3]ग्रहणसादने स्पष्टे ॥

इति चतुर्थे पञ्चत्रिंशोनुवाकः.

---

[1]सजोषा इत्यादि त्रिष्टुप् ॥ हे इन्द्र सगणः सर्वैर्गणैस्सहितः मरुद्भिस्सजोषाः समानप्रीतिः । पूर्ववदुत्तरपदाद्युदात्तत्वम् । हे इन्द्र वृत्रहन् वृत्रहन्तः शूर महाबल विद्वान् स्वमधिकारं जानन्,

पिब वृत्रहञ्छूर विद्वान् । जहि शत्रूꣳ रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः । उपयामगृहीतोसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ४३ ॥

इति स—गणः । मरुद्भिरिति मरुत्—भिः । सोमम् । पिब । वृत्रहन्निति वृत्र—हन् । शूर । विद्वान् । जहि । शत्रून् । अपेति । मृधः । नुदस्व । अथ । अभयम् । कृणुहि । विश्वतः । नः । [2]उपयामगृहीत इत्युपयाम—गृहीतः । असि । इन्द्राय । त्वा । षोडशिने । [3]एषः । ते । योनिः । इन्द्राय । त्वा । षोडशिने ॥ ४३ ॥

सजोषास्त्रिꣳशत् (॥४२॥) ॥३६॥

---

सर्वविशेषज्ञानदक्षो वा । ईदृशस्त्वं सोमं पिब । पीत्वा चास्मदीयान् शत्रून् जहि नाशय । मृधश्च सङ्ग्रामान् कर्तुकामानपनुदस्व । अथानन्तरमस्मभ्यं विश्वतस्सर्वतोप्यभयं कृणुहि कुरु । 'उतश्च प्रत्ययाच्छन्दो वा वचनम्' इति हिलोपाभावः । शत्रूनित्यस्य संहितायां 'दीर्घादटि समानपादे' इति रुत्वम्, पूर्ववदनुनासिकत्वम् ॥

[2—3]ग्रहणसादने प्रसिद्धे ॥

इति चतुर्थे षड्त्रिंशोनुवाकः.

उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम् । चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरु-

[1]उदिति । उ । त्यम् । जातवेदसमिति जात-वेदसम् । देवम् । वहन्ति । केतवः । दृशे । विश्वाय । सूर्यम् । [2]चित्रम् । देवानाम् । उदिति । अगात् । अनीकम् । चक्षुः । मित्रस्य । वरुणस्य ।

[1]अथ दाक्षिणं काण्डं सौम्यमेव । तत्र सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोति—उदुत्यमिति प्रथमा गायत्री, द्वितीया त्रिष्टुप् ॥ तत्र प्रथमा—'उदायुषा'* इत्यत्र व्याख्याता । त्यं तं इमं देवं जातवेदसं जातप्रज्ञं जातानां वेदितारं केतवो रश्मय उद्वहन्ति ऊर्ध्वं वहन्ति दृशे द्रष्टुं विश्वाय विश्वार्थं, विश्वो लोको यथैनं पश्येदिति । 'सुवर्गाय वा एतानि लोकाय हूयन्ते यद्दाक्षिणानि'† इत्यादि ब्राह्मणम् ॥

[2]अथ द्वितीया—चित्रं चायनीयं देवानामनीकं सङ्घातरूपम्मण्डलम् । यद्वा—देवानां रश्मीनां अनीकं मुखं समुदायस्थानं‡ वा । मित्रादीनां देवानामपि चक्षुस्स्थानं‡, तेपि हि तेन प्रकाशितं पश्यन्ति । यद्वा—मित्रत्वादिपदप्राप्तिहेतुत्वाच्चक्षुरित्युपचर्यते । उपलक्षणं चैतत्, सर्वदेवतापदलाभहेतुत्वात्; भवति मण्डलोपासन§ मिति । ईदृशमण्डलमुदगात उदेति । छान्द-

*सं. १-२-८७ †सं. ६-६-१.
‡क.—स्थानीयं. §म.—मण्डलोपधान.

णस्याग्नेः । आ प्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्यं आत्मा जगतस्त- स्थुषंश्च । अग्ने नयं सुपथा राये अस्मान् विश्वानि देव वयुनानि

अग्नेः । एति । अप्राः । द्यावापृथिवी इति द्यावा-पृथिवी । अन्तरिक्षम् । सूर्यः । आत्मा । जगतः । तस्थुषः । च । [3]अग्ने । नयं । सुपथेति सु-पथा । राये । अस्मान् । विश्वानि । देव । वयुनानि । विद्वान् । युयोधि । अस्मत् । जुहुराणम् । एनः ।

सो लुङ्, 'गातिस्था' इति सिचो लुक् । यदा ईदृशम्म ण्डलमुदेति तदा तन्मण्डलान्तर्गतो भगवान् सूर्यः जगतो जङ्ग-मस्य तस्थुषः स्थावरस्य च विश्वस्यात्मा द्यावापृथिवी द्यावा-पृथिव्यौ अन्तरिक्षं च रश्मिभिराप्राः आपूरयति । प्रा पूरणे पुरुषव्यत्ययः, अदादित्वाच्छपो लुक् । द्यौश्च पृथिवी च द्यावा-पृथिव्यौ । 'दिवो द्यावा' इति द्यावादेशः, 'वा छन्दसि' इति पूर्वसवर्णदीर्घः, 'देवताद्वन्द्वे च' इति पूर्वोत्तरयोर्युग-पत्प्रकृतिस्वरत्वम्, पृथिवीशब्दो ङीषन्तोन्तोदात्तः । ईदृशो भगवाननेन हविषेनास्माकमभिमतं साधयत्विति ॥

[3]आग्नीध्रीये जुहोति—अग्ने नयेति त्रिष्टुभा ॥ व्याख्याता चेयं 'उभावाम्'*इत्यत्र । हे अग्ने शोभनेन मार्गेण अस्मान्न-

*सं. –१–१–१४[9]

विद्वान् । युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठां ते नमउक्तिं विधेम । दिवं
गच्छ सुवः पत रूपेण ॥ ४४ ॥
वो रूपमभ्यैमि वयसा वयः ।

भूयिष्ठाम् । ते । नमउक्तिमिति नमः–उक्तिम् । विधेम । [4]दिवम् । गच्छ । सुवः । पत । [5]रूपेण ॥ ४४ ॥ वः । रूपम् । अभि । एमि ।

य धनार्थम् । हे देव विश्वानि वयुनानि ज्ञानोपायभूतानि विद्वान् । किञ्च—जुहुराणं कुटिलस्वभावं चैनः पापमस्मत्तो युयोधि पृथक्कुरु । वयं च ते भूयिष्ठां नमउक्तिं विधेमेति ॥

[4]हिरण्यं हुत्वोद्गृह्णाति—दिवमित्येकपदया गायत्र्या ॥ हे हिरण्य दिवं गच्छ, दीप्तिं वा प्राप्नुहि । ततस्सुवरादित्यं पत गच्छ ॥

[5]दक्षिणा अभ्येति—रूपेणेति प्रथमया चतुर्दशाक्षरया ॥ 'अभ्यैमि वयसा वयः' इति द्वितीयः पादः । हे दक्षिणाः वः युष्माकं रूपं मदीयेन रूपेण अभ्यैमि आभिमुख्येन मर्यादया च ऐमि प्राप्नोमि । किञ्च—मदीयेन वयसा युष्मदीयं वय अभ्यैमीत्येव । गमनं वा वयः । मदीयेन गमनेन युष्मदीयं गमनमभ्यैमि, युष्माभिस्तुल्यरूपस्तुल्यगतिश्च भूयासमिति ॥

तुथो वो विश्ववेदा वि भजतु वर्षिष्ठे
अधि नाके । एतत्ते अग्ने राध ऐति

एमि । वयसा । वयः । [6]तुथः । वः । विश्ववेदा
इति विश्व-वेदाः । वीति । भजतु । वर्षिष्ठे ।
अधीति । नाके । [7]एतत् । ते । अग्ने । राधः ।
एति । एति । सोमच्युतमिति सोम-च्युतम् ।

---

[6]दक्षिणा विभजति—तुथो व इति यजुषा ॥ तुथो नामाग्निः, विश्ववेदाः विश्वस्य विभागादेर्वेदिता । पूर्ववदसुन्, पूर्वपदप्रकृति स्वरत्वं च । स एव वः युष्मान्विभजतु । वर्षिष्ठे वृद्धतमे नाके सुखैकरूपे स्थाने यथा भवत्यर्थस्तथा वो विभजतु । यद्वा—वर्षिष्ठे नाकात्मन्यत्र स्थाने स एवागत्य वो विभजत्विति ॥

[7]सदोऽभ्येति—एतत्ते अग्ने इति मध्येज्योतिषा जगत्या । 'तन्मित्रस्य पथा नय' इति द्वितीयः पादः ॥ धिष्णियैरग्निभिरग्निमत् सदोग्निशब्देनोच्यते । मत्वर्थीयो लुप्यते । ते इति कर्मणस्सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । हे अग्ने सदः एतद्दक्षिणालक्षणं राधः धनं त्वामिति त्वत्समीपं प्राप्नोति ऋत्विग्भ्यो दातुम् । सोमच्युतं सोमेन च्यावितं सोमेन राज्ञा स्वयमानीतम् । 'तृतिया कर्माणि' इति पूर्वपदप्रकृतिस्वरत्वम् । यद्वा—सोमयागार्थं च्युतं च्यवनं अङ्गत्वेनानुप्रवेशो यस्य, सोमयागद्रव्यमध्याद्वा दक्षिणार्थं च्युतिर्यस्य तत्सोमच्युतम् । तद्राधः मित्रस्यादित्यस्य पथा मार्गेण नय येन मार्गेण पदार्थं मित्रो नयति तेन नय प्रकाशयेत्यर्थः ।

सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्तीर्ब्राह्मणमद्य राध्या-

तत् । मित्रस्य । पथा । नय । ऋतस्य । पथा । प्र । इत । चन्द्रदक्षिणा इति चन्द्र—दक्षिणाः । यज्ञस्य । पथा । सुविता । नयन्तीः । [8]ब्राह्मणम् ।

कश्चिदाह—सोमयागेन ह्यस्य प्रच्युतं भूधनम्*, तदिदानीं दक्षिणार्थं सदस्यान्न नेतव्यम्† । तदुच्यते—हे सदः सोमयागार्थं च्युतं च्यावनं अङ्गत्वेनानुप्रवेशो यस्य तत् सोमच्युतं त्वमेव मित्रस्य पथा नयेति। उदात्तनिवृत्तिस्वरेण पथस्तृतीयाया उदात्तत्वम् । अधुना दक्षिणा आह—ऋतस्य पथा प्रेत गच्छत । यज्ञस्याङ्गभावं प्रतिपद्यमानास्सदः प्रति गच्छत । चन्द्रदक्षिणा, चन्द्रं हिरण्यं तद्दक्षिणं प्रधानं श्रेष्ठं यासां तादृश्यो गच्छत, हिरण्यसहिता इत्यर्थः । किञ्च—यज्ञस्य पथा 'द्वाभ्यां गार्हपत्ये जुहोति' ‡इत्यादिप्रसिद्धेन मार्गेण सुविता सुवितेन स्वितेन सुगमेन । 'सुपां सुलुक्' इति तृतीयाया आकारः, 'सूपमानात्क्तः' इत्युत्तरपदान्तोदात्तत्वम्, तन्वादित्वात्सोरुवङादेशः, विकृतत्वादनवग्रहः । ईदृशेन मार्गेण नयन्तीः नयन्त्यः नीयमानाः प्रवर्तमाना वा । 'वा छन्दसि' इति पूर्वसवर्णदीर्घः ॥

[8]आत्रेयमभ्यर्थयति§—ब्राह्मणमिति ॥ अद्य अस्मिन्नहनि

*तं.—प्रच्युतमभूद्धनम्. †क.—सदस्यानितव्यम्.
‡सं. ६-६-१. §क. तं. म.—आत्रेयस्येति.

समृषिमार्षेयं पितृमन्तं पैतृमत्यꣳ सुधातुदक्षिणं वि सुवः पश्य व्यन्त-

अद्य । राध्यासम् । ऋषिम् । आर्षेयम् । पितृमन्तमिति पितृ—मन्तम् । पैतृमत्यमिति पैतृ—मत्यम् । सुधातुदक्षिणमिति सुधातु—दक्षिणम् । [9]वीति । सुवः । पश्य । वीति । अन्तरिक्षम् । [10]यतस्व ।

---

ब्राह्मणं राध्यासं साधयेयं लभेयेत्यर्थः । ऋषिं द्रष्टारं वेदार्थज्ञम् । आर्षेयम् ऋषेर्वेदार्थज्ञस्यापत्यम् । ‘ इतश्चानिञः ’ इति ढक् । पितृमन्तं पित्रा सम्यगनुशिष्टम् । स हि पितृमानुच्यते सदा यस्मै जागर्ति पिता । ‘ ह्रस्वनुड्भ्यां मतुप् ’ इति मतुप उदात्तत्वम् । पैतृमत्यं पितृमतः पितुरपत्यम् । ‘ वाग्मतिपितृमतां छन्दसि ण्यः ’ । सुधातुदक्षिणं शोभनो धातुस्सुधातुः, धातूनामुत्तमं हिरण्यमुच्यते । तद्दक्षिणा यस्मै स सुधातुदक्षिणः । पूर्वपदप्रकृतिस्वरत्वम् । तत्र च ‘ आद्युदात्तं द्व्यच्छन्दसि ’ इत्युत्तरपदाद्युदात्तत्वम् ॥

[9]यजमानमादित्यमीक्षयति—वि सुवरिति ॥ सुवः स्वर्गमादित्यं वा विपश्य विशेषेण पश्य । अन्तरिक्षं च विपश्येत्येव ॥

[10]तं सदस्युपवेशयति—यतस्वेति ॥ यतस्व व्याप्रियस्व सदस्यैस्सह, इदमुपस्थितं कर्म कुर्वित्यर्थः । सदसि स्थिता ऋत्विगादयस्सर्वेपि सदस्याः ॥

रिक्षं यतस्व सदस्यैरस्मद्दात्रा
देवत्रा गच्छत मधुमतीः प्रदातारमा
विशतानवहायास्मान्देवयानेन प-

सदस्यैः। [11]अस्मद्दात्रा इत्यस्मत्–दात्राः। देवत्रेति देव–त्रा। गच्छत। मधुमतीरिति मधु–मतीः। प्रदातारमिति प्र–दातारम्। एति। विशत। अनवहायेत्यनव–हाय। अस्मान्। देवयानेनेति देव–यानेन। पथा। इत। सुकृतामिति सु–

[11]यजमानो दक्षिणास्समनुदिशति—अस्मद्दात्रा इति ॥ वयं दातारो यासां तादृश्यो यूयम्। छान्दसोच्समासान्तः। यद्वा—'ऋतश्छन्दसि' इति कपि प्रतिषिद्धे छान्दसोकारोपजनः। देवत्रा देवान् गच्छत। 'देवमनुष्य' इति द्वितीयान्तात्त्राप्रत्ययः। किञ्च—मधुमतीः मधुमत्यः मधुरगुणाः स्पृहणीयाः। यद्वा—मधुर्वसन्तः, मधुमत्यः बहुवसन्ता बहुवयस्का इत्यर्थः। पूर्वसवर्णदीर्घत्वम्। ईदृश्यो भूत्वा प्रदातारं मां यजमानमाविशत फलरूपेण। 'वयमिह'* इत्यादि ब्राह्मणम्। किञ्च—अनवहाय। क्त्वो ल्यप्। अपरित्यज्यास्मानस्माभिस्सहैव वर्तमानाः अस्मच्छरीरपातोत्तरकालमस्माभिस्सहैव देवयानेन पथेत। देवा येन प्राप्यन्ते तादृशेन मार्गेणेत गच्छत। गत्वा च सुकृतां लोके सीदत अस्माभिस्सह निषीदत। तत् स्थानं नः अस्माकं संस्कृतं सम्यगुपभोगयोग्यतया कृतं निष्पन्नं विश्वकर्मणा

*सं. ६-६-१.

थेतं सुकृतां लोके सींदत तन्नस्सꣳ-
स्कृतम् ॥ ४५ ॥
धाता रातिस्संवितेदं जुंषन्तां प्रजा-
पंतिर्निधिपतिंर्नो अग्निः । त्वष्टा

कृताम् । लोके । सीदत । तत् । नः । सꣳ-
स्कृतम् ॥ ४५ ॥
रूपेणं सदस्यैरष्टादंश च (॥४३॥) ॥३७॥
[1]धता । रातिः । सविता । इदम् । जुषन्ताम् । प्रजापंतिरिति प्रजा–पतिः । निधिपतिरिति

ईश्वरेण । 'सम्पर्युपेभ्यः' इति सुट्, 'सम्पुंकानाम्' इति संत्वम्, पूर्ववदनवग्रहः । यद्वा—तत्त्र नः अस्माकं संस्कृतं समवायः । 'समवाये च' इति सुट् ॥

इति चतुर्थे सप्तत्रिंशोनुवाकः.

---

[1]समिष्टयजूंषि जुहोति । षड्गृम्मियाणि जुहोति, त्रीणि यजूंषि । 'यद्वै यज्ञस्य क्रूरम्'* इत्यादि ब्राह्मणम् । तत्र प्रथमा— धाता रातिरिति त्रिष्टुप् ॥ धाता स्रष्टा, रातिर्दाता सर्वश्रेयसाम् । 'मन्त्रे वृष' इति क्तिन उदात्तत्वम् । सविता

*सं. ६-६-२.

विष्णुः प्रजया सꣳरराणो यजमानाय द्रविणं दधातु । समिन्द्रणो मनसा नेषि गोभिस्सꣳ सूरिभिर्म-

निधि-पतिः । नः । अग्निः । त्वष्टा । विष्णुः । प्रजयेति प्र-जया । सꣳरराण इति सं-रराणः । यजमानाय । द्रविणम् । दधातु । [2]सम्िति । इन्द्र । नः । मनसा । नेषि । गोभिः । सम्िति ।

सर्वस्य प्रेरयिता अभ्यनुज्ञाता वा प्रजापतिः परमेष्ठी । स एव विशेष्यते—निधिपतिः निधीयन्ते वेदाः पुरुषार्था वाऽस्मिन्निति तेषां पाता रक्षिता निधिपतिः । 'परादिश्छन्दसि बहुळम्' इत्युत्तरपदाद्युदात्तत्वम्, इतरत्र तु 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । अग्निस्त्वष्टा विष्णुश्चैते धात्रादयस्सर्वे इदं हविर्जुषन्तां सेवन्ताम् । एते च धात्रादयो यज्ञतनुविशेषा देवता द्रष्टव्याः, यथा 'धाता दीक्षायाम्'* इत्यादि । अधुना एत एवैकैकश उच्यन्ते । एष धात्रादिर्देवः प्रजया संरराणः सम्यग्रममाणः प्रजया उत्पन्त्या हेतुना यजमानाय द्रविणं वरिष्ठं प्रजादिं दधातु । रातिस्ताच्छीलिके चानशि शपश्श्लुः, रमतेर्वाऽन्त्यलोपः ॥

[2]अथ द्वितीया—समिन्द्रण इति त्रिष्टुप् ॥ हे इन्द्र नः अस्मान् । छान्दसं सांहितिकं णत्वम् । मनसा प्राणेन† समीचीनेन गोभिश्च शब्दैस्स्तुतिलक्षणैश्च सन्नेषि सन्नय संयोजय ।

*सं. ४-४-९. †ग—मनसा वाचा.

घवन्थ्सꣳ स्वस्त्या । सं ब्रह्मणा
देवकृतं यदस्ति सं देवानाꣳ सुमत्या
यज्ञियानाम् । सं वर्चसा पयसा

सूरिभिरिति सूरि-भिः । मघवन्निति मघ-वन् । समिति । स्वस्त्या । समिति । ब्रह्मणा । देवकृतमिति देव-कृतम् । यत् । अस्ति । समिति । देवानाम् । सुमत्येति सु-मत्या । यज्ञियानाम् ।
3समिति । वर्चसा । पयसा । समिति । तनूभिः ।

---

मनस्विनो वाग्मिनश्च कुरु त्वां स्तोतुमित्यर्थः । नयतेर्लेटि शपो लुक् । किञ्च—सूरिभिर्विद्वद्भिः होतृप्रभृतिभिस्स्तोत्रकुशलैश्च अस्मान्संन्नेषि हे मघवन् महाधन स्वस्त्या अविनाशेन वा अस्मान्सन्नेषि । किञ्च—ब्रह्मणा वेदेन, वेदार्थ* ज्ञानेन वा, तदर्थानुष्ठानेन वा अस्मान्सन्नेषि । किञ्च—यच्चान्यद्देवकृतं देवार्थं कृतमस्ति कर्म अग्निहोत्रादिकं तेनापि सन्नषि । 'क्ते च' इति पूर्वपदप्रकृतिस्वरत्वम् । किञ्च—देवानां यज्ञियानां यज्ञार्हाणां यज्ञसम्पादितानामग्न्यादीनां सुमत्या कल्याणमत्या अनुग्रहबुद्ध्या चास्मान् संयोजय । 'यज्ञर्त्विग्भ्यां घखञौ' इति घः, 'मन्त्रे वृष' इति उदात्तः क्तिन्, 'मन्क्तिन्व्याख्यान' इत्यादिनोत्तरपदान्तोदात्तत्वम्, 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् ॥

3अथ तृतीया—सं वर्चसेति त्रिष्टुप् ॥ वर्चसा बलेन पयसा

---

*ग, घ, तं.—वेदान्त.

सं तनूभिरगन्महि मनसा सꣳ शिवेन । त्वष्टा नो अत्र वरिवः कृणोतु ॥ ४६ ॥ अनु मार्ष्टु तनुवो यद्विलिष्टम् । यदद्य त्वा प्रयति

अगन्महि । मनसा । समिति । शिवेन । त्वष्टा । नः । अत्र । वरिवः । कृणोतु ॥ ४६ ॥ अन्विति । मार्ष्टु । तनुवः । यत् । विलिष्टमिति वि-लिष्टम् ।
4यत् । अद्य । त्वा । प्रयतीति प्र-यति । यज्ञे ।

---

पालकेन, क्षीरादिना वा, वयं समगन्महि सङ्गता भूयास्म । छान्दसो लुङ् । 'मन्त्रे घस' इति च्लेर्लुक्, 'समो गमृच्छि' इत्यात्मनेपदम् । लङि वा 'बहुलं छन्दसि' इति शपो लुक् । तनूभिश्शरीरैश्च शोभनैस्समगन्महि । शिवेन च कल्याणेन च मनसा समगन्महि । त्वष्टा च देवो नः अस्माकं अत्र अस्मिन्कर्मणि अस्मिन्नेव वा जन्मनि वरिवः वरणीयं धनं कृणोतु करोतु । किञ्च—अनुमार्ष्टु शोधयतु च अस्माकं तनुवः शरीरात् यद्विलिष्टं विलग्नं विगुणीकृतकर्मनिमित्तं पापं तत्सर्वं विशोधयतु । लिशेर्विशेर्वा [लिशेर्विपूर्वात् ?] निष्ठायां 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥

4अथ चतुर्थी—यदद्येति त्रिष्टुप् ॥ अद्यास्मिन्नहनि प्रयति वर्तमाने अविच्छेदेन वितायमानेस्मिन्यज्ञे । 'शतुरनुमः' इति सप्तम्या उदात्तत्वम् । हे अग्ने यत् यदर्थं त्वां होतारं अवृ-

यज्ञे अस्मिन्नग्ने होतारमवृणीमही-
ह । ऋधगयाडृधगुताशमिष्ठाः प्रजा-
नन् यज्ञमुप याहि विद्वान् । स्व-
गा वो देवास्सदनमकर्म य आजग्म

अस्मिन् । अग्ने । होतारम् । अवृणीमहि । इह । ऋधक् । अयाट् । ऋधक् । उत । अशमिष्ठाः । प्रजानन्निति प्र-जानन् । यज्ञम् । उपेति । याहि । विद्वान् । 5 स्वगेति स्व-गा । वः । देवाः । सदन-

णीमहि वृतवन्तो वयमिहास्मिन्प्रयोजने एतदनुरूपमेव त्वया कृतमिति प्रदर्शयति—कथं? ऋधक् समृद्धं वैगुण्यं यथा न भवति तथा अयाट् अयाक्षीः । यजेर्लुङि सिचिवृद्धौ 'बहुलं छन्दसि' इतीडभावः* । यत एवमतस्त्वमेव प्रजानन् आत्मीयमभि-कारं जानन् अनुसन्दधानः इत्थमित्थं कृतवानसि, तस्मात् भूयोपि अस्मदीयं यज्ञं पुनःपुनरुपयाहि आगच्छ विद्वान् सर्वार्थसाध-नोपायज्ञस्त्वम् ॥

5अथ पञ्चमी—स्वगा व इति त्रिष्टुप् ॥ हे देवाः वः युष्माकं सदनं स्थानं स्वगा अकर्म स्वगाकृतवन्तो वयम् । स्वगेति निपातः यथास्वकरणं द्योतयति, यथायथमसङ्कीर्णस्थानं कृतवन्तो वयमि-

* 'ऋधगुताशमिष्ठाः' इत्यस्य व्याख्या क्वचिदपि भट्टभास्करीयकोशे न दृश्यते । ['उत अपि च त्वं ऋधक् समृद्धं अशमिष्ठाः अस्मद्विघ्नशान्तिमकार्षीः । शमेर्लुङि सिचि इड्भावः' इति भाष्येण भवितव्यम्.]

सर्वनेदं जुषाणाः । जक्षिवाꣳसः
पपिवाꣳसश्च विश्वेस्मे धत्त वसवो
वसूनि । यानावह उशतो देव

म् । अकर्म । ये । आजग्मेत्या–जग्म । सवना । इदम् । जुषाणाः । जक्षिवाꣳसः । पपिवाꣳसः । च । विश्वे । अस्मे इति । धत्त । वसवः । वसूनि ।
6 यान् । एति । अवहः । उशतः । देव । देवान् ।

त्यर्थः । करोतेर्लुङि 'मन्त्रे घस' इति च्लेर्लुक्, 'छन्दस्युभयथा' इति तिङ आर्धधातुकत्वात् ङित्त्वाभावः । देवा विशेष्यन्ते—ये यूयमिदमिदानीं सवना सवनानि आजग्म आगताः जुषाणाः प्रीयमाणास्सेवमाना वा, तेषां सदनमकर्मेति । 'सुपां सुलुक्' इतीदमो विभक्तेर्लुक् । सवनशब्दात् 'शेश्छन्दसि' इति शेर्लोपः । जुषतेस्ताच्छीलिके चानशि शपो लुक् । ते विश्वे सर्वेपि यूयं जक्षिवांसः सवनीयपुरोडाशादि भक्षितवन्तः पपिवांसश्च सोमं पीतवन्तः हे वसवः लोकानां वासयितारः अस्मे अस्मासु धत्त स्थापयत वसूनि धनानि । 'लिट्यन्यतरस्याम्' इत्यदेर्घस्लादेशः । अस्मच्छब्दात्परस्यास्सप्तम्याः 'सुपां सुलुक्' इति शे आदेशः ॥

6अथ षष्ठी—यानावह इति त्रिष्टुप् ॥ हे अग्ने देव दीप्यमान यान् देवान् उशतः हवींषि कामयमानान् । 'शातुरनुमः' इति विभक्तेरुदात्तत्वम् । आवहः आहूतवानसि तान् देवान्प्रेरय

देवान्तान् ॥ ४७ ॥ प्रेरय स्वे अ-
ग्ने सधस्थे । वहमाना भरमाणा
हवीꣳषि वसुं घर्मं दिवमा तिष्ठतानु ।
यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां

तान् ॥ ४७ ॥ प्रेति । ईरय । स्वे । अग्ने । सधस्थ इति सध-स्थे । वहमानाः । भरमाणाः । हवीꣳषि । वसुम् । घर्मम् । दिवम् । एति । तिष्ठत । अनु । [7]यज्ञ । यज्ञम् । गच्छ । यज्ञप-

---

स्वे आत्मीये सधस्थे सहस्थाने, यत्र ते सह तिष्ठन्ति तत्र प्रस्थापय । 'सुपि स्थः' इति तिष्ठतेः कः, 'सधमाधस्थयोः' इति सहस्य सधादेशः । अधुना देवान्प्रत्याह—हे देवा यूयमपि हवींषि वहमानाः रथादिभिर्वाहनैः वाहयन्तः भरमाणा हस्तादिभिर्धारयन्तः । यद्वा—भुक्तशेषाण्यपत्याद्यर्थं परिपालयन्तः वसुं सर्वस्य लोकस्य वासयितारं घर्ममादित्यमातिष्ठत प्राप्नुत । अनु अनन्तरं च दिवं द्युलोकमातिष्ठत ॥

[7]यज्ञ यज्ञमित्यादीनि त्रीणि यजूंषि ॥ हे यज्ञ यज्ञं परमात्मानं विष्णुं गच्छ येन त्वं प्रतिष्ठितस्स्याः । अनन्तरं यज्ञपतिं यज्ञपालयितारं यजमानं गच्छ फलप्रदानेन । अनन्तरं च स्वामात्मीयां योनिं गच्छ, योनिः कारणं सर्वपरिस्पन्दहेतुर्वाताख्या परमेश्वरस्य क्रियाशक्तिः । यथा—'वाताद्वा अध्व-

योनिं गच्छ स्वाहैष ते यज्ञो यज्ञ-
पते सहसूक्तवाकस्सुवीरस्स्वाहा दे-
वा गातुविदो गातुं वित्वा गातु-

तिमिति यज्ञ–पतिम् । गच्छ । स्वाम् । योनिम् ।
गच्छ । स्वहा । [8]एषः । ते । यज्ञः । यज्ञपत
इति यज्ञ–पते । सहसूक्तवाक इति सहसूक्त–
वाकः । सुवीर इति सु–वीरः । स्वाहा । [9]देवाः ।
गातुविद इति गातु–विदः । गातुम् । वित्वा ।

---

युर्यज्ञं प्रयुङ्क्ते '* इति । तां गच्छ । स्वाहा स्वाहुतमिदमा-
ज्यमग्नयेस्त्विति ॥

[8]अथ द्वितीयम्—हे यज्ञपते यजमान एष यज्ञस्सहसूक्त-
वाकः सूक्तवाकसहितः विविधस्तोत्रकः सुवीरः शोभनैर्वीरैः
पुत्रपौत्रादिभिर्युक्तः तद्धेतुतां प्रतिपाद्यमानः ते तव स्वाहुतमिदमा-
ज्यमग्नयेस्तु, इत्थमिदं तव भूयादिति ॥

[9]अथ तृतीयम्—देवा गातुविद इति ॥ व्याख्यातं† 'वाजस्य
मा प्रसवेन' इत्यत्र । देवा गातुविदः गतिज्ञाः गातुं मार्गं विस्त्वा
लब्ध्वा आगमनकाले यत्र स्थितास्ते यूयं गातुमित तमेव मार्गं
समाप्ते कर्मणि गमनाय भजत । किञ्च—हे मनसस्पते सर्वभूताना-
मन्तरात्मतया मनसोपि पते देव इममस्माकं यज्ञं देवेष्वग्न्यादि-

---

*ब्रा. ३-३-९. †सं. १-१-१३[19].

मित मनसस्पत इमं नो देव देवेषु
यज्ञꣳ स्वाहा वाचि स्वाहा वाते
धाः ॥ ४८ ॥
उरुꣳ हि राजा वरुणश्चकार सूर्याय

गातुम् । इत । मनसः । पते । इमम् । नः ।
देव । देवेषु । यज्ञम् । स्वाहा । वाचि । स्वाहा ।
वाते । धाः ॥ ४८ ॥

कृणोतु तानष्टाचत्वारिꣳशच्च (॥४४॥)॥३८॥
[1]उरुम् । हि । राजा । वरुणः । चकार ।

---

षु धाः धेहि स्थापय । एवं हि सरस्वत्याह । तदनन्तरं वाचि वाग्देवतायां शाब्दे ब्रह्मणि धाः स्थापय । ततः पश्चादिमं यज्ञं वाते सर्वक्रियाधारे धाः स्थापय, यस्मादयं यज्ञः प्रयुक्तः तत्रैव वाते स्थापय । 'वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते'* इत्यादि ब्राह्मणम्, 'वासिष्ठो ह सात्यहव्यः'† इत्यादि च ॥

इति चतुर्थे अष्टत्रिंशोनुवाकः.

---

[1]अवभृथार्थमन्तरेण चात्वालोत्करावुपनिष्क्रामति—उरुं हि राजेति त्रिष्टुभा ॥ वरुणो हि राजा सूर्यायान्वेतवै सूर्यमन्वेतुमनुक्रमेण

---

*ब्रा, ३-३-९, †सं. ६-६-२.

पन्थामन्वेतवा उ । अपदे पादा प्र-
सूर्याय । पन्थाम् । अन्वेतवा इत्यनु-एतवे ।
उ । अपदे । पादा । प्रतिधातव इति प्रति-धात-

गन्तुं उरुं विस्तीर्णं पन्थां पन्थानं मार्गं चकार करोति, साधुनि कर्मणि पुरुषं प्रवर्तयन् अभ्युदयेन योजयतीत्यर्थः । उ इत्यवधारणे, वरुण एव हि राजा इत्थं करोति । किञ्च— स एव अपदे अपदनीयस्थाने असाधुनि कर्मणि पादा पादान् प्रतिधातवे प्रतिधातुं अकः करोति पुरुषं प्रवर्तयतीत्यर्थः । कथमित्याह—उतापवक्ता अप्यवदिता यः परोक्षे परिवदति पिशुनो यश्च* हृदयाविधः प्रत्यक्षमेवाप्रियाणि वदन् हृदयादि विध्यति, वरुणेनैव हि प्रेरितस्तथातथा परुषो भवति, सोस्मान् साधुनि कर्मणि पदं कारयत्विति शेषः । अन्य आह—अपदे अनालम्बेन्तारिक्षे अन्वेतवै अनुक्रमेण गन्तुं सूर्यस्य पन्थां पन्थानमुरुं वरुणो राजा यस्माच्चकार, तस्मात्सोस्माकमपि पादान् प्रतिधातुं विस्तीर्णं पन्थानं अकः करोतु अवभृथार्थमपि; यो नामापवक्ता पुरुषो हृदयाविधश्च सोस्माकमवभृथार्थं मार्गं करोतु गमनप्रतिबन्धं मा कार्षीदित्यर्थः । चकारेत्यस्य 'हि च' इति निघातप्रतिषेधः । सूर्यशब्दात्कर्मणस्सम्प्रदानत्वाच्चतुर्थी । पथ आत्वं व्यत्ययेन द्वितीयायामपि भवति । अनुपूर्वादेतेः 'तुमर्थे सेसेन्' इति तवैप्रत्ययः, 'तवै चान्तश्च युगपत्' इत्येतेस्तवैप्रत्ययान्तस्य युगपत्प्रकृतिस्वरत्वम् । 'सुपां सुलुक्' इति पादशब्दाद्वितीयाया आकारः । प्रतिपूर्वाद्दधातेस्तेनैव सूत्रेण तवेन्प्रत्ययः । 'तादौ च' इति गतेः

*तं—अपिच.

तिधातवेकरुतापवक्ता हृदयाविधं-
श्चित् । शतं ते राजन्भिषजंस्सहस्रं-
मुर्वी गम्भीरा सुमतिष्टे अस्तु ।

वे । अकः । उत । अपवक्त इत्यप–वक्ता ।
हृदयाविध इति हृदय–विधः । चित् । [2]शतम् ।
ते । राजन् । भिषजः । सहस्रम् । उर्वी ।
गम्भीरा । सुमतिरिति सु–मतिः । ते । अस्तु ।
बाधस्व । द्वेषः । निर्ऋतिमिति निः–ऋतिम् ।

प्रकृतिस्वरत्वम् । करोतेश्छान्दसे लुङि 'मन्त्रे घस' इति च्लेर्लुक् । हृदयं विध्यतीति हृदयाविधः । क्विबन्तादकारोपजनश्छान्दसः, 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' इति पूर्वपदस्य दीर्घः । बहुवचनान्तमेव वा । चिदिति चार्थे उपमार्थे वा ॥

[2]अपो दृष्ट्वा यजमानं वाचयति—शतं ते राजन्निति त्रिष्टुभम् ॥ हे राजन् वरुण अपामधिष्ठातः शतं बहवस्सहस्रं बहुतमाश्च ते तव भिषजः पापस्य शमनहेतवस्सन्ति, तस्मात्त्वत्प्रसादात् अस्मत्पापमपि ते शमयन्त्विति शेषः । किञ्च—उर्वी महती गम्भीरा दुरवगाहा च ते सुमतिः कल्याणी मतिरस्तु अस्मदनुग्रहपरैव सर्वदा भूयात् । 'युष्मत्तत्ततक्षुषु' इति संहितायां षत्वम् । किञ्च—बाधस्व विनाशय द्वेषः द्वेष्टॄन् । विजन्ताच्छस् । जातौ वा एकवचनम् । द्वेषांसि रक्षःप्रभृतीनीत्यर्थः । निरृतिं च बाधस्व पराचैः पराङ्मुखीभूताम् । उच्चैरादिवदव्ययं द्रष्टव्यम् । निरृतिमिति

बाधस्व द्वेषो निरृतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् । अभिष्ठितो वरुणस्य पाशोऽग्नेरनीकमप आ विवेश । अपां नपात्प्रतिरक्षन्न-

पराचैः । कृतम् । चित् । एनः । प्रेति । मुमुग्धि । अस्मत् । [3]अभिष्ठित इत्यभि–स्थितः । वरुणस्य । पाशः । [4]अग्नेः । अनीकम् । अपः । एति । विवेश । अपाम् । नपात् । प्रतिरक्षन्निति प्रति–

प्रादिसमासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् । गतिसमासे 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । किञ्च—चेदर्थे चिच्छब्दः । कृतं चिदेनः पापं अस्मत्तः प्रमुमुग्धि प्रकर्षेण मोचय । व्यत्ययेन शपश्श्लुः ॥

[3]अधितिष्ठति—अभिष्ठित इति विराजैकपदया ॥ अभिष्ठितः अभिभूय क्रान्तोऽस्माभिर्वरुणस्य पाशः ॥

[4]अप्सु बर्हिः प्रास्यति—अग्नेरनीकमिति त्रिपदया विराजा ॥ हे अपान्नपात् अपान्नप्तः चतुर्थः । 'सुबामन्त्रिते' इति पराङ्गवद्भावे षष्ठ्यामन्त्रितसमुदायस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । अग्नेस्तवानीकं मुखं अपः अब्रूपं आविवेश । तस्मादसुर्यं असुरस्य स्वं असुरैः क्रियमाणं यज्ञविधातं प्रतिरक्षन् प्रतिनिवारयन् तत्प्रतिनोदेनास्मान्रक्षन् दमेदमे यज्ञगृहेयज्ञगृहे यागेयाग इत्यर्थः । समिधं समित्स्थानीयं तव समिन्धनं इदं बर्हिः हे अग्ने यक्षि

सुयं दमेदमे ॥४१॥ समिधं यक्ष्यग्ने ।
प्रति ते जिह्वा घृतमुच्चरण्येत्स-
मुद्रे ते हृदयमप्स्वन्तः । सं त्वा

रक्षन्न् । असुर्यम् । दमेदम इति दमे—दमे ॥४१॥
समिधमिति सं—इधम् । यक्षि । अग्ने । [5]प्रतीति ।
ते । जिह्वा । घृतम् । उदिति । चरण्येत् ।
[6]समुद्रे । ते । हृदयम् । अप्स्वित्यप्—सु । अन्तः ।
[7]समिति । त्वा । विशन्तु । ओषधीः । उत ।

---

स्वीकुरु तेन सङ्गतो भव । सङ्गतिकरणे यजिः, लेटि 'बहुलं च्छन्दसि' इति शपो लुक् ॥

[5]तत्स्रुवाहुत्याभिजुहोति—प्रति त इति त्रिष्टुभैकपदया ॥ हे अग्ने तव जिह्वा घृतं प्रतीत्य उच्चरण्येत् उत्क्षिप्य भक्षयतु । चरण गतौ कण्ड्वादिः ॥

[6]अप्सु स्रुचं प्रतिष्ठापयति—समुद्र इति त्रिष्टुभैकपदया ॥ हे अग्ने तव हृदयं जुहूलक्षणं समुद्रे समुन्दनशीलास्वप्सु अन्तरपां मध्ये प्रतिष्ठापयामीति शेषः । 'ऊडिदम्' इत्यद्भ्यस्सम्युदात्ता, 'उदात्तस्वरितयोः' इति ततः परस्यानुदात्तस्य संहितायां स्वरितत्वम् ॥

[7]तामद्भिः पूरयति—सन्त्वेति त्रिष्टुभैकपदया ॥ हे जुहु त्वामोषधीः ओषधयस्संविशन्तु समागच्छन्तु त्वदीयेन कर्मणा सिद्धा भवन्तु । उत अपिच आपश्च साक्षादिदानीं त्वां संविशन्तु प्राप्नुवन्तु । ओषधीरिति पूर्ववत्पूर्वसवर्णदीर्घः ॥

विशन्त्वोषधीरुतापो यज्ञस्य त्वा यज्ञपते हविर्भिः । सूक्तवाके नमोवाके विधेमावभृथ निचङ्कुण निचे-

आपः । [8]यज्ञस्य । त्वा । यज्ञपत इति यज्ञ-पते । हविर्भिरिति हविः-भिः । सूक्तवाक इति सूक्त-वाके । नमोवाक इति नमः-वाके । विधेम । [9]अवभृथेत्यव-भृथ । निचङ्कुणेति नि-चङ्कुण । निचेरुरिति नि-चेरुः । असि । निच-

---

[8]ता अप्सु जुहोति—यज्ञस्येति द्विपदया त्रिष्टुभा ॥ हे यज्ञपते यजमान यज्ञस्य सूक्तवाके सूक्तवाकप्रतिष्ठे फले नमोवाके नमोवाकप्रतिष्ठे फले त्वां विधेम स्थापयामः । स्थापनकर्मात्र विदधातिः । हविर्भिराभिरद्भिः अप्सु हूयमानाभिः विधेमेति ॥

[9]अप्सु अवभृथद्रव्याण्यवकिरति—अवभृथेति । अतः पराणि यजूंषि ॥ अवभ्रियन्ते उत्सृज्यन्ते कानि चिद्द्रव्याण्यस्मिन्नित्यवभृथः कर्मविशेषः । 'अवे भृञः, इति क्थन्प्रत्ययः । हे अवभृथ । कर्मण इदमामन्त्रणम्, तदभिमानिन्या देवताया वा वरुणस्य । हे निचङ्कुण* नीचैः क्वणति शब्दं करोति अवकीर्णद्रव्यद्वारेणेति निचङ्कुणः । कुणतेर्यङ्लुगन्तात्पचाद्यचि छान्दसं सम्प्रसारणम्, कुण शब्दोपकरणयोः, इत्यस्माद्वा, 'न धातुलोप आर्धधातुके' इति गुणाभावः । 'घञर्थे कविधानम्'

---

*गं.—देवताया वा आमन्त्रणं । हे वरुण.

रुरसि निचङ्कुणाव देवैर्देवकृतमेनो-
याडव मर्त्यैर्मर्त्यकृतमुरोरा नो देव

ङ्कुणेति नि-चङ्कुण । अवेति । देवैः । देवकृतमिति देव-कृतम् । एनः । अयाट् । अवेति । मर्त्यैः । मर्त्यकृतमिति मर्त्य-कृतम् । उरोः । एति ।

---

इति वाधिकरणे कः, निभृतशब्दकरद्रव्याधिकरणत्वात् । निचेरुरसि निभृतं चरसीति निभृतं वा चरत्यस्मिन्नित्यौणादिके उप्रत्यये छान्दसमेत्वम् । अत्वरं* क्रियमाणोसीत्यर्थः, निगूढचरद्रव्याभिप्रायं वा । किञ्च—हे निचङ्कुण । व्याख्यातम् । तिरोहितद्रव्याभिप्रायम्† । यद्वा—कण निमीलने, छान्दसमुत्वम् । कण गतौ वा । यन्नाम किञ्चिद्देवकृतं देवेषु कृतमस्माभिरेनः पापं सम्यगनुष्ठानाभावनिमित्तम् । सप्तमीपूर्वपदप्रकृतिस्वरत्वम् । तत्सर्वं देवैस्सह अवायाट् अवाक्षीः अवयज विनाशयेत्यर्थः । अवयजिर्विनाशे वर्तते । यच्च मर्त्यकृतं मर्त्येषु कृतं पापम् । पूर्ववत्स्वरः । तच्च मर्त्यैस्सहावयज । यजेश्छान्दसे लुङि सिचिवृद्धौ 'बहुळं छन्दसि' इति तदभावः । किञ्च—हे देव उरोर्विस्तीर्णात् रिषः हिंसितुः हिंसायां वा । रिषेः क्विबन्तात् 'सावेकाचः' इति पञ्चम्या उदात्तत्वम्, 'पातौ च बहुळम्' इति तस्यास्संहितायां सत्वम् । ततो नः अस्मानापाहि परिपाहि ॥

---

*तं. म.—अत्यर्थं. †म.—द्रव्याभिप्रायं वा.

रिषस्पाहि सुमित्रा न आप ओषधयः ॥५०॥ सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मो देवीराप एष वो गर्भस्तं वस्सुप्रीं-

नः । देव । रिषः । पाहि । [10]सुमित्रा इति सु—मित्राः । नः । आपः । ओषधयः ॥५०॥ सन्तु । दुर्मित्रा इति दुः—मित्राः । तस्मै । भूयासुः । [11]यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । [12]देवीः । आपः । एषः । वः । गर्भः । तम् । वः । सुप्रीतमिति सु—प्रीतम् । सुभृतमिति

[10]अञ्जलिनाऽप उपवहति—सुमित्रा इति ॥ आप ओषधयश्च नः अस्मभ्यं सुमित्रास्सन्तु शोभनं मित्रं* यासाम् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ॥

[11]द्वेष्टारं द्वेष्यं च प्रतिरुक्षति—योस्मान्द्वेष्टि यं च वयं द्विष्मस्तस्मै आप ओषधयश्च दुर्मित्रा भूयासुः दुष्टं मित्रं मित्रवद्वर्तमानं यासाम् । छान्दसमन्तोदात्तत्वम् ॥

[12]ऋजीषमप्सु प्लावयति—देवीराप इति ॥ हे देवीः देव्यः आपः । पूर्ववद्दीर्घः, 'विभाषितं विशेषवचने बहुवचनम्' इति प्रथमस्याविद्यमानवत्त्वनिषेधाद्द्वितीयं निहन्यते । एष ऋजीषाख्यो वो युष्माकं गर्भः युष्मत्प्रभवः । अतस्तं वः युष्मदर्थं सुप्रीतं युष्माकं सर्वलोकस्य अतिशयेन प्रीतिकरं सुभृतं सुष्ठु गुप्तं च

*क. तं. म—मित्रं वा.

तꣳ सुभृतमकर्म देवेषु नस्सुकृतो ब्रूतात्प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश एधोस्येधिषीमहि समिदसि तेजोसि तेजो

सु-भृतम् । अकर्म । देवेषु । नः । सुकृत इति सु-कृतः । ब्रूतात् । [13]प्रतियुत इति प्रति-युतः । वरुणस्य । पाशः । प्रत्यस्त इति प्रति-अस्तः । वरुणस्य । पाशः । [14]एधः । असि । एधिषीमहि । [15]समिदिति सं-इत् । असि । तेजः । असि । तेजः । मयि ।

---

अकर्म कृतवन्तो वयम् । 'मन्त्रे घस' इति च्लेर्लुक्, 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । अतोस्मानपि यूयं देवेषु सुकृतस्सुष्ठुकर्म कृतवन्तो ब्रूतात् ब्रूत । 'तस्य तात्' इति तादादेशः ॥

[13]अपामन्तं प्रतियौति—प्रतियुत इति ॥ प्रतियुतः प्रत्येकं पृथक्कृतः वरुणस्य पाशः । पृथक्कृत्य च प्रत्यस्तः प्रतिक्षिप्तः विनाशित इत्यर्थः । पूर्ववद्गतेः प्रकृतिस्वरत्वम् ॥

[14]अपपथे समिधः कुर्वते—एधोसीति ॥ हे समित् एधोसि एधनी वर्धनी त्वमस्यग्नेः । अतस्तादृश्या त्वया वयमपि एधिषीमहि वृद्धिं प्राप्नुयामः । यद्वा—तादृश्या त्वया अग्निं वर्धयेम ॥

[15]आहवनीये समिधमभ्यादधाति—समिदिति ॥ सामित्समिन्धनी सन्दीपनी त्वमग्नेरसि । तस्मात्तेजोसि तेजस्साधनमग्नेरासि । तादृशी सा त्वम्मय्यपि तेजो धेहि स्थापय ॥

मयि धेह्यपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमं तं मा सꣳ सृज वर्चसा ॥५१॥

धेहि । [16]अपः । अन्विति । अचारिषम् । रसेन । समिति । असृक्ष्महि । पयस्वान् । अग्ने । एति । अगमम् । तम् । मा । समिति । सृज । वर्चसा ॥ ५१ ॥

दमेदम ओषधय आ पङ्क्ते (॥४५॥) ॥३९॥

---

[16]आहवनीयमुपतिष्ठते—अप इत्यनुष्टुभा ॥ हे अग्ने अपः कर्म । व्यत्ययेनान्तोदात्तत्वम् । अप्शब्द एव वा कर्मणि वर्तते । 'ऊडिदम्' इति शस उदात्तत्वम् । अपोवभृथाख्यं कर्मान्वचारिषमानुपूर्व्येण कृतवानस्मि । अतो वयं सर्वेपि रसेन फलेन समसृक्ष्माहि सङ्गतास्स्मः । वचनव्यत्ययो वा, समसृक्ष्माहि। सङ्गतोस्मि । 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्वम् । हे अग्ने पयस्वानन्नवान् हविर्भिस्तद्वान् त्वामागममागतोस्मि । 'आतोटि नित्यम्' इति संहितायां रुत्वम् । तस्मात्त्वां प्राप्तं मा संसृज संयोजय वर्चसा बलेन* ॥

इति चतुर्थे एकोनचत्वारिंशोनुवाकः.

---

*क—वर्चसा दीप्त्या वा बलेन । म—वर्चसा दीप्त्या वह बन्धने ।

यस्त्वा हृदा कीरिणा मन्यमानो-
ऽमर्त्यं मर्त्यो जोहवीमि । जातवेदो
यशो अस्मासु धेहि प्रजाभिरग्ने

[1]यः । त्वा । हृदा । कीरिणा । मन्यमानः । अमर्त्यम् । मर्त्यः । जोहवीमि । जातवेद इति जात-वेदः । यशः । अस्मासु । धेहि । प्रजाभिरिति प्र-जाभिः । अग्ने । अमृतत्व मित्यमृत-

एवमाध्वरिका मन्त्रा अवभृथान्तास्समाप्ताः । अतः परमन्त्योनुवाको याज्या, वैश्वदेवं काण्डम् ॥

[1]तत्र 'अग्नये पुत्रवते पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामः '* इत्यस्याग्नेयस्य पुरोनुवाक्या—यस्त्वेति त्रिष्टुप् । इयादेशाद्वयेन तृतीयपादः पूर्यः ॥ हे अग्ने जातवेदः जातानां वेदितः जातधन वा, योहं मर्त्यः मरणधर्मा मनुष्यः त्वाममर्त्यममरणधर्माणं हृदा मनसा कीरिणा कीर्तयता गुणकीर्तनशीलेन । कीर्तयतेर्ण्यन्तात् 'अच इः' इतीप्रत्यये धातोरन्त्यलोपश्छान्दसः । ईदृशेन हृदयेन त्वां मन्यमानः जानन् जोहवीमि भृशमाह्वयामि । ह्वयतेः 'अभ्यस्तस्य च' इति सम्प्रसारणम् । यद्वा—त्वदर्थमिदं हविर्जुहोमि । उभयत्रापि यङ्लुगन्ताल्लट्, 'अनुदात्ते च' इत्याद्युदात्तत्वम् । येषां सम्बन्धी तवाह्वाताहं, तेष्वस्मासु पुत्रपौत्रेषु यशो धेहि स्थापय यशस्विन

*सं. २-२-४.

अमृतत्वमश्याम् । यस्मै त्वꣳ सुकृते जातवेद उ लोकमग्ने कृणवस्स्योनम् । अश्विनꣳ स पुत्रिणं वीरवन्तं गोमन्तꣳ रयिं नशते स्वस्ति ॥

त्वम् । अश्याम् । ²यस्मै । त्वम् । सुकृत इति सु-कृते । जतवेद इति जात-वेदः । उ । लोकम् । अग्ने । कृणवः । स्योनम् । अश्विनम् । सः । पुत्रिणम् । वीरवन्तमिति वीर-वन्तम् । गोमन्तमिति गो-मन्तम् । रयिम् । नशते ।

---

स्सर्वानस्मान्कुरु । किञ्च—ताभिः प्रजाभिः पुत्रादिभिरविछिन्नाभिस्सहाहममृतत्वं दीर्घायुष्यमश्यां प्राप्नुयाम् । व्यत्ययेन परस्मैपदम् ॥

²तत्रैव याज्या—यस्मा इति त्रिष्टुप् । वीरवन्तमिति तृतीयपादान्तः ॥ हे अग्ने जातवेदः यस्मै सुकृते शोभनानि कर्माणि कृतवते । उ इत्यवधारणे । (यस्त्वा समिष्टयजूंषि 'उकाररूपः प्लुत उदात्तः' इत्युदात्तः प्लुतः ।)* यस्मा एव यदर्थमेव स्योनं सुखं लोकं स्थानं कृणवः कुर्याः । कृवि हिंसाकरणयोः, लेट्, 'धिन्विकृण्व्योर च' इत्युप्रत्ययः, 'लेटोडाटौ' इत्यडागमः । स एव अश्वादिसहितं रयिं धनं स्वस्ति अविच्छेदेन नशते प्राप्नोति । नशतिर्गतिकर्मा । स एव त्वत्प्रसादाद्बह्वश्वो भवति, अश्वपुत्रपौत्रादिमांश्च भवति, अन्यैश्च विक्रान्तैः पुरुषैस्तद्वान् भवति, गोमहिष्यादिसङ्घातस्वामी महाधनश्च भवतीति ॥

---

* ( ) एतच्चिह्नान्तर्गतं वाक्यं सत्स्वपि कोशेषु दृश्यमानमपि प्रक्षिप्तमिव भाति ॥

स्ति । त्वे सु पुत्र शवसोवृत्रन्का-
मंकातयः । न त्वामिन्द्राति रिच्यते ।

स्वस्ति । [3]त्वे इति । स्विति । पुत्र । शवसः । अवृत्रन् । कामकातय इति काम—कातयः । न । त्वाम् । इन्द्र । अतीति । रिच्यते ।

[3]अथैन्द्रस्य पुरोनुवाक्या—त्वे इति गायत्री ॥ त्वे त्वयि । 'सुपां सुलुक' इति सप्तम्येकवचनस्य शेआदेशः । हे शवसो बलस्य पुत्र । महाबलश्च बलाज्जात इत्युपचर्यते । 'परमपिच्छन्दसि' इति परमपि षष्ठ्यन्तं पूर्वमामन्त्रितं प्रत्यङ्गवद्भवतीति षष्ठ्यन्तामन्त्रितसमुदायस्याष्टमिकमामन्त्रितसर्वानुदात्तत्वम् । कामकातयस्स्तुतयः कामा वाञ्छितानि कायन्ते *प्रार्थ्यन्ते याभिस्ताः कामकातयः । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । तास्त्वय्येव स्ववृत्रन् शोभनं वर्तन्ते त्वय्येव महाबले क्रियमाणास्स्तुतयश्शोभन्ते, न पुरुषान्तरवदनर्थकाभिधानतां प्रतिपद्यन्ते । वृतेश्छान्दसो लुङ्, 'द्युद्भ्यो लुङि' इति परस्मैपदम्, द्युतादित्वादङ्, 'बहुळं छन्दसि' इति रुट् । यदुक्तं त्वय्येव स्तुतयश्शोभनवृत्तय इति तदेव समर्थयते—हे इन्द्र तासां स्तुतीनां मध्ये एकापि त्वां नातिरिच्यते त्वां विहाय न प्रवर्तते सर्वा अपि त्वद्विषया एवात्मानं लभन्ते ॥

---

*ग. घ—काम्यन्ते.

उक्थउक्थे सोम इन्द्रं ममाद नीथेनीथे मघवानम् ॥५२॥ सुतासः । यदीं सबाधः पितरं न पुत्रास्समानदक्षा अवसे हवन्ते । अग्ने

उक्थउक्थ इत्युक्थे–उक्थे । सोमः । इन्द्रम् । ममाद । नीथेनीथ इति नीथे–नीथे । मघवानमिति मघ–वानम् ॥ ५२ ॥ सुतासः । यत् । ईम् । सबाध इति स–बाधः । पितरम् । न । पुत्राः । समानदक्षा इति समान-दक्षाः । अवसे । हवन्ते ।

---

तत्रैव याज्या—उक्थउक्थ इति त्रिष्टुप् ॥ उक्थउक्थे शस्त्रेशस्त्रे सोम इन्द्रं ममाद मादयति तर्पयति । मदेर्ण्यन्ताच्छान्दसो लिट्, 'बहुळमन्यत्रापि' इति णिलुक् । 'अनुदात्तं च' इति द्वितीयस्योक्थशब्दस्यानुदात्तत्वम् । किञ्च—नीथेनीथे स्तोत्रेस्तोत्रे सुतासः अभिषुतास्सोमाः मघवानं महाधनं इन्द्रं मादयति । आज्जसेरसुक् । किञ्च—यत् यदा खलु सबाधः बाधासहिताः शत्र्वादिभिर्बाधिता भवन्ति पुरुषाः । व्यत्ययेन समासान्तोदात्तत्वम् । तदा तेपि पितरन्न पितरमिव पुत्राः अवसे रक्षणाय इन्द्रमेव हवन्ते ह्वयन्ति । पूर्ववत्सम्प्रसारणम् । ईमित्यवधारणे । समानदक्षाः, दक्षः पिता, समानपितृका इत्यर्थः । इन्द्र एव सर्वेषां समानः पितेति ॥

रसेन तेजसा जातवेदो वि रोचसे।
रक्षोहामीवचातनः । अपो अन्व-
चारिषꣳ रसेन समसृक्ष्महि । पय-
स्वाꣳ अग्न आगमं तं मा सꣳ सृज

5 अग्ने । रसेन । तेजसा । जातवेद इति जात-वेदः । वीति । रोचसे । रक्षोहेति रक्षः-हा । अमीवचातन इत्यमीव-चातनः । 6 अपः । अन्विति । अचारिषम् । रसेन । समिति । असृक्ष्महि ।

5 'अग्नये रसवतेजक्षीरे चरुं निर्वपेद्यः कामयेत रसवान् स्याम् '* इत्यस्य पुरोनुवाक्या—अग्ने रसेनेति गायत्री ॥ हे अग्ने जातवेदस्तेजसा रोचसे दीप्यसे । केन हेतुना ? रसेन रसयोगो मम यथा स्यादिति । यद्वा—रसेन मां योजयितुं तेजसा विरोचसे विशेषेण दीप्यस्व । यद्वा—तद्धेतुत्वात्ताच्छब्द्यम् , यथा नड्वलोदकं पादरोग इति, अस्मद्रसहेतुना तेजसा विरोचसे इति । इदं चास्त्वित्याह—रक्षोहा रक्षसां हन्ता अमीवचातनः अमीवानामाभ्यन्तररोगाणां च नाशयितास्माकं भव । क्षीरादिरस-समृद्धिमस्माकं कुरु तद्रोगविघ्नहेतूंश्च रक्षःप्रभृतीन् सर्वांश्च रोगा-न्नाशयेत्यभिप्रायः ॥

6 तत्रैव याज्या—अप इत्यनुष्टुप् ॥ व्याख्याता चेयं ' उरुं हि† ' इत्यत्र । अपः कर्माण्यनुक्रमेण करोमि । रसेन संसृष्टो भूयासम् । हे अग्ने पयस्वान् हविष्मान् त्वामागमं तम्मा वर्चसा बलेन संसृजेति ॥

*सं. २-२-४. †सं. १-४-३९.[16]

वर्चसा । वसुर्वसुपतिर् हिकमस्यग्ने
विभावसुः । स्याम ते सुमतावपि ।
त्वामग्ने वसुपतिं वसूनामभि प्र

पर्यस्वान् । अग्ने । एति । अगमम् । तम् । मा । समिति । सृज । वर्चसा । [7]वसुः । वसुपतिरिति वसु—पतिः । हिकम् । असि । अग्ने । विभावसुरिति विभा—वसुः । स्याम । ते । सुमताविति सु—मतौ । अपि । [8]त्वाम् । अग्ने ।

[7]'अग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेत वसुमान् स्याम्*' इत्यस्य पुरोनुवाक्या—वसुर्वसुपतिरिति गायत्री ॥ हे अग्ने वसुर्वासयिता सर्वस्य लोकस्य वसुपतिः धनानां स्वामी चात एव वासयिता ईदृशस्त्वमसि । किञ्च—विभावसुस्तेजोधनश्च त्वमसि दातासि† धनानामित्यर्थः । हिकं यस्मादेवं तस्मात्ते तव सुमतौ कल्याण्यामनुग्रहबुद्धौ वयं स्याम भूयास्म । अपिशब्दाद्वसुमन्तश्च स्याम । 'मन्क्तिन्व्याख्यान' इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—क्तिचि कृदुत्तरपदप्रकृतिस्वरत्वम् । क्तिन्येव वा 'तादौ च निति' इत्येतद्वाधित्वा कृदुत्तरपदप्रकृतिस्वरत्वम् । उत्तरपदे वा 'मन्त्रे वृष' इति क्तिन उदात्तत्वम् ॥

[8]तत्रैव याज्या—त्वामग्न इति त्रिष्टुप् ॥ हे अग्ने अध्वरेषु राजन् चरुपुरोडाशादिभिर्दीप्यमान त्वां वसूनां सर्वेषां सम्बन्धिनं

*सं. २-२-४. †म—पतिरसि.

मन्दे ॥ ५३ ॥ अध्वरेषु राजन् ।
त्वया वाजं वाजयन्तो जयेमाभि-
ष्याम पृत्सुतीर्मर्त्यानाम् । त्वामग्ने

वसुपतिमिति वसु-पतिम् । वसूनाम् । अभि ।
प्रेति । मन्दे ॥ ५३ ॥ अध्वरेषु । राजन् । त्वया ।
वाजम् । वाजयन्त इति वाज-यन्तः । जयेम ।
अभीति । स्याम । पृत्सुतीः । मर्त्यानाम् ।

---

नैकस्य द्वयोर्वा वसुपतिं वसूनां नित्यस्वामिनम् । इदं समास-व्यासाभ्यां प्रतिपाद्यते । ईदृशं त्वामभिप्रमन्दे आभिमुख्येन तर्पयामि । मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । कश्चिदाह—वसूनां देवानां मध्ये वसुपतिमिति । किञ्च—वाजयन्तः वाजमन्नमात्मन इच्छन्तः । क्यचि 'न छन्दस्यपुत्रस्य' इतीत्वप्रतिषेधः । यदा वयं वाजमिच्छामस्तदा त्वया वाजं जयेम त्वयैव प्राप्नुयाम । किञ्च—मर्त्यानां मध्ये पृत्सुतीः पृतनां कर्तुं या अस्माभिरिच्छन्ति ताश्शत्रुसेना अभिष्यामाभिभवेम । 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वम् । पृदिति सङ्ग्रामकर्म । तस्मात्सङ्ग्रामयितुमिच्छन्तीति सन्, छान्दसोभ्यासलोपः, विकरणव्यत्ययेन शः, वर्णव्यत्ययेन शतुरकारस्योकारः, 'शतुरनुमः' इति नद्या उदात्तत्वम् । यद्वा—पृतनास्सूयन्ते उत्पाद्यन्ते याभिस्ताः पृत्सुतयः । छान्दसं ह्रस्वत्वं, पृद्भावश्च । बहुविकारत्वान्नावगृह्यते । 'मन्क्तिन्व्याख्यान' इत्युत्तरपदान्तोदात्तत्वम् ॥

वाजसातमं विप्रा वर्धन्ति सुष्टुतम् ।
स नो रास्व सुवीर्यम् । अयं नो
अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु

[9]त्वाम् । अग्ने । वाजसातममिति वाज-सातमम् । विप्राः । वर्धन्ति । सुष्टुतमिति सु-स्तुतम् । सः । नः । रास्व । सुवीर्यमिति सु-वीर्यम् । [10]अयम् । नः । अग्निः । वरिवः । कृणोतु । अयम् । मृधः ।

---

[9]'अग्नये वाजसृते पुरोडाशमष्टाकपालं निर्वपेत्सङ्ग्रामे संयत्ते*' इत्यस्य पुरोनुवाक्या—त्वामग्ने वाजसातममिति गायत्री ॥ हे अग्ने त्वां वाजसातमं वाजस्यान्नस्य सम्भक्तृतमम् । सनोतेः 'जनसनखनक्रमगमो विट्,' 'विड्वनोरनुनासिकस्यात्' इत्यात्वम् । सुष्टुतं सर्वैस्सुष्ठु स्तुतम् । यद्वा—सुष्ठु स्तुतो यथा भवसि तथा त्वां विप्रा मेधाविनो वर्धन्ति स्तुतिभिस्त्वां वर्धयन्तीत्यर्थः । 'बहुलमन्यत्रापि' इति णिलुक् । यद्वा—'छन्दस्युभयथा' इति शप आर्धधातुकत्वाण्णिलोपः । स्तौतेः कर्मणि निष्ठायां 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वं, 'उपसर्गात्सुनोति' इत्यादिना षत्वम् । स त्वं नः अस्मभ्यं सुवीर्यं शोभनवीर्यं धनं वाजलक्षणं रास्व देहि । व्यत्ययेनात्मनेपदम्, 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् ॥

[10]तत्रैव याज्या—अयं न इति त्रिष्टुप् ॥ व्याख्याता चेयं 'त्वं सोम'† इत्यत्र । अयमग्निरस्माकं वरिवो धनं कृणोतु ।

---

*सं. २-२-४. †सं. १-३-४३.

प्रभिन्दन्न्। अयꣳ शत्रूञ्जयतु जर्हृ-
षाणोयं वाजं जयतु वाजसातौ।
अग्निनाग्निस्समिध्यते कविर्गृहपति-

पुरः। एतु। प्रभिन्दन्निति प्र-भिन्दन्न्। अयम्। शत्रून्। जयतु। जर्हृषाणः। अयम्। वाजम्। जयतु। वाजसाताविति वाज-सातौ।
11 अग्निना। अग्निः। समिति। इध्यते। कविः। गृहपतिरिति गृह-पतिः। युवा। हव्यवाडिति

---

अयं मृधस्सङ्ग्रामान् प्रभिन्दन् पुरस्तादेतु। अयं जर्हृषाणस्सङ्ग्रामजयेन हृष्टान्तःकरणश्शत्रून् जयतु। अयं वाजमन्नं जयतु वाजसातौ वाजलाभहेतौ सङ्ग्रामे इति॥

11 'अग्नयेग्निवते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नावग्निमभ्युद्धरेयुः*' इत्यस्य पुरोनुवाक्या—अग्निनाग्निरिति गायत्री॥ अग्निनाभ्युद्धृतेनायमग्निः पूर्वोद्धृतः समिध्यते सम्यगेव इध्म उद्धायते† [सम्यगेव इध्यते]। कविर्मेधावी गृहपतिर्गृहस्य पतिस्स्वामी। युवा नित्यतरुणः, हविर्भिर्वा देवानामात्मनश्च मिश्रयिता। हव्यवाट् हविषां वोढा। 'वहश्च' इति ण्विः। जुह्वास्यः जुहूरास्यस्थानीया यस्य। सोयमेवं गुणोग्निरभ्युद्धरणदोषमुपशमयत्विति शेषः॥

---

*सं. २-२-४, †तं—इध्म उध्मायते. [इध्मैर्ध्मायते.]

युवा । हव्यवाड्जुह्वास्यः । त्वꣳ ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसे । उदग्ने

हव्य-वाट् । जुह्वास्य इति जुहु-आस्यः । [12]त्वम् । हि । अग्ने । अग्निना । विप्रः । विप्रेण । सन् । सता । सखा । सख्या । समिध्यस इति सं-इध्यसे । [13]उदिति । अग्ने । शुचयः । तव ।

[12]तत्रैव याज्या—त्वं ह्यग्न इति गायत्री ॥ हे अग्ने त्वमग्निनाभ्युद्धृतेन समिध्यसे सम्यगेवेध्यसे । कीदृशः कीदृशेनेत्याह—विप्रो मेधावी विप्रेण मेधाविना समिध्यसे । अयमेकस्समिन्धनहेतुः । किञ्च—सन् प्राज्ञः स तादृशेनाग्निना समिध्यसे । 'हि च' इति निघातप्रतिषेधः, 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वं, 'उदात्तवता तिङा' इति समासः, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे यक उदात्तत्वम् । ईदृशस्त्वमभ्युद्धरणदोषमुपशमयेति शेषः ॥

[13]'अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोहुतेग्निहोत्र उद्वायेत्*' इत्यस्य पुरोनुवाक्या—उदग्न इति गायत्री ॥ व्याख्याता चेयं 'त्वमग्ने रुद्रः'† इत्यत्र । इह तु प्रतीकमस्या गृह्यते । हे अग्ने तव शुक्रास्तेजोविशेषाः शुचयश्शुद्धाः भ्राजन्तः दीप्यमानाः उदीरते उद्गच्छन्ति । किञ्च—तवैव स्वभूतानि ज्योतींष्यादित्यादीनि अर्चयोर्चींषि च । यद्वा—तव

*सं. २-२-४. †सं. १-३-१४[28].

शुचयस्तव वि ज्योतिषा ॥५४॥

[14]वीति । ज्योतिषा ॥ ५४ ॥

मघवानं मन्दे ह्यग्ने चतुर्दश च (॥४६॥) ॥४०॥

अर्चयोर्चयितारो यजमानाः ज्योतींषि ज्योतीरूपा भवन्ति स त्वमेवं महानुभावः उद्वापदोषमुपशमयेति ॥

[14]तत्रैव याज्या—वि ज्योतिषेति त्रिष्टुप् ॥ इयमपि 'कृणुष्व पाजः'* इत्यत्र व्याख्याता । इह तु प्रतीकं गृह्यते । अयमग्निर्बृहता ज्योतिषा विभाति विशेषेण भायात् अनेन हविषा । किञ्च—विश्वानि महित्वा माहात्म्यानि आविष्कृणुते आविष्कुर्वीत । किञ्च—अदेवीः अदेवनशीला आसुरीर्मायाः दुरेवाः दुष्प्रधर्षाः प्रसहते अभिभवेत् । किञ्च—शृङ्गे शृङ्गस्थानीये आत्मीये प्रधाने ज्वाले शत्रूणां वा हिंसके शिशीते तीक्ष्णीकुर्यात् । किमर्थम्? रक्षसे विनिक्षे रक्षसो विनाशार्थं ज्वालाभ्यां निक्षणं चुम्बनं शोधनं वा विनाशोवेति स एव महानुभावोऽग्निरनुगमनदोषमुपशमय्यात्मनः परापतितं ज्योतिरवरुन्ध इति ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
प्रथमकाण्डे चतुर्थप्रपाठके चत्वारिंशोनुवाकः

समाप्तः प्रपाठकः.

*सं. १-२-१४ .

वाचः प्राणाय त्वा । उपयामगृहीतोस्यपानाय त्वा । आ वायो वायवे सजोषाभ्यां त्वा । अयमृतायुभ्यां त्वा । या वामश्विभ्यां माध्वीभ्यां त्वा । प्रातर्युजाववश्विभ्यां त्वा । अयं वेनश्शण्डाय त्वैष ते योनिर्वीरतां पाहि । तं मर्काय त्वैष ते योनिः प्रजाः पाहि । ये देवास्त्रि९ंशदाग्रयणोसि विश्वेभ्यस्त्वा देवेभ्यः । उपयामगृहीतोसीन्द्राय त्वोक्थायुवे । मूर्धानमग्नये त्वा वैश्वानराय । मधुश्च स९ंसर्पोसि । इन्द्राग्नी इन्द्राग्निभ्यां त्वा । ओमासो विश्वेभ्यस्त्वा देवेभ्यः । मरुत्वन्तं त्रीणीन्द्राय त्वा मरुत्वते । महान्द्वे महेन्द्राय त्वा । कदा चनादित्येभ्यस्त्वा । कदा चन स्तरीर्विवस्व आदित्य । इन्द्र९ं शुचिरपः । वामं त्रीन्देवाय त्वा सवित्रे । सुशर्मा विश्वेभ्यस्त्वा देवेभ्यः । बृहस्पतिसुतस्य त्वष्ट्रा सोमं पिब स्वाहा । हरिरसि सहसोमा इन्द्राय स्वाहा । अग्न आयू९ंष्यग्नये त्वा तेजस्वते । उत्तिष्ठन्निन्द्राय त्वौजस्वते । तरणिस्सूर्याय त्वा भ्राजस्वते । आ तिष्ठाद्याष्षडिन्द्राय त्वा षोडशिने । उदु त्यं चित्रम् । अग्ने दिवं गच्छ । उरुमायुष्टे यद्देवा मुमुग्धि । अग्ना-

विष्णू मुमुक्तम् । परा वै पङ्क्त्यः । देवा वै ये देवाः पङ्क्त्यौ । परा वै स वाचमम् । देवासुराः कार्यम् । भूमिर्व्यैतृष्यन्न् । प्रजापतिर्व्यैक्षुध्यन्न् । भूमिरादित्या वै । अग्निहोत्रमादित्यो वै । भूमिर्लोकस्सलोकस्सुलोकः । विष्णोरुदुत्तमम् । अन्नपते पुनस्त्वादित्याः । यस्त्वा सुष्टुतम् । त्वमग्ने सुष्टुतिम् । यस्त्वा वि रोचसे । त्वमग्ने वि चर्षणे ॥

आ ददे वाचस्पतय उपयामगृहीतोस्या वायो अयं वां या वां प्रातर्युजावयं तं ये देवास्त्रिꣳशदुपयामगृहीतोसि मूर्धानं मधुश्चेन्द्राग्नी ओमासो मरुत्वन्तमिन्द्र मरुत्वो मरुत्वान्महान्महान्नृवत्कदा वाममदब्धेभिर्हिरण्यपाणिꣳ सुशर्मा बृहस्पतिसुतस्य हरिरस्यग्न उत्तिष्ठन्तरणिरा प्यायस्वेयुष्टे ये ज्योतिष्मतीं प्रयासाय चित्तमा तिष्ठेन्द्रमसावि सर्वस्य महान्थ्सजोषा उदु त्यं धातोरुꣳ हि यस्त्वा षट्चत्वारिꣳशत् ॥ ४६ ॥

आ ददे ये देवा महानुत्तिष्ठंन्थ्सर्वस्य सन्तु दुर्मित्राश्चतुःपञ्चाशत् ॥ ५४ ॥

आ ददे वि ज्योतिषा ॥

हरिः ओं तत्सत् ॥



# अथ पञ्चमः प्रपाठकः.

अथ अतः परं पुनराधेयब्राह्मणं समन्त्रकं चत्वारोऽनुवाकाः। तत्र केवलाग्नेयतामस्य प्रतिपादयिष्यन्तदर्थमर्थवादान् प्रस्तौति— देवासुरा इत्यादि ॥ 'कृत्तिकास्वग्निमा दधीत'* इत्याद्याधानकाण्डं भविष्यति; तदेतस्मादनुवाकादधस्तान्निवेशयितव्यमिति वक्ष्यते। कर्मक्रमानुरोधादित्थमिदं ज्ञातव्यम्; यथाम्नातमेव त्वध्येतव्यमिति। तत्र 'कर्मचोदना ब्राह्मणानि'† । ब्राह्मणं नाम कर्मणस्तन्मन्त्राणां च व्याख्यानग्रन्थः। 'ब्राह्मणशेषोऽर्थवादः'†। 'निन्दा प्रशंसा परकृतिः पुराकल्पश्च'† इति। ब्राह्मणं च द्विधा कर्मब्राह्मणं कल्पब्राह्मणं चेति। तत्र कर्मब्राह्मणं यत्केवलानि कर्माणि विधत्ते मन्त्रान्विनियुङ्क्ते, न प्रशंसति न निन्दति च, यथा— 'अनुमत्यै पुरोडाशम्'‡ इत्यादि सांहितिकम्। अतोऽन्यानि कल्पब्राह्मणानि, यथेदमेव 'देवासुरास्संयत्ता आसन् ते देवा विजयमुपयन्तः' इत्यादि। आहुश्च—

क्वचिद्विधिः प्रशंसा च केषु चिद्विधिरेव च§।
केषु चिद्विधिरेव स्यादेवं निन्दानिषेधयोः ॥ इति ॥

तत्र परकृतयः मनुष्यकृतयः, यथा—'विश्वरूपो वै त्वाष्ट्रः'¶ इत्यादयः। पुराकल्पाः प्रजापत्यादिकृतयः, यथा—'प्रजापतिः प्रजा असृजत'** इत्यादयः। सर्वाण्येतानि कल्पब्राह्मणानि। अथ ब्राह्मणानुब्राह्मणानि यथा—'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति। ये प्रत्यञ्चश्शम्यायाः'†† इत्यादीनि ॥

---

*ब्रा. १-१-२.[1] †आप. परि. १-३५, ३६, ३७.
‡सं. १-८-१.[1] §तं—कोशे द्वितीयपादो नास्ति.
¶सं. २-५-१.[1] **सं. २-१-२.[1] ††ब्रा. १-६-१[1].

पञ्चमः प्रपाठकः.

देवासुरास्संयत्ता आसन्ते देवा विजयमुपयन्तोग्नौ वामं वसु सं न्यदधतेदमु नो भविष्यति यदि नो जेष्यन्तीति तदग्निर्न्यकामयत तेना-

[1] देवासुरा इति देव-असुराः । संयत्ता इति सं-यत्ताः । आसन्न् । ते । देवाः । विजयमिति वि-जयम् । उपयन्त इत्युप-यन्तः । अग्नौ । वामम् । वसु । सम् । नीति । अदधत । इदम् । उ । नः । भविष्यति । यदि । नः । जेष्यन्ति । इति । तत् ।

[1] देवाश्चासुराश्च संयत्ताः सङ्ग्रामार्थमुद्युक्ताः आसन् अभवन् । यती प्रयत्ने, 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः, सम्यग्यत्ता इति कर्तरि निष्ठा, तेन प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । क्वचित् ते देवा विजयमुपयन्तः असुरान्विजयमानाः तेभ्यः पराजयमानेभ्योसुरेभ्यो यद्वामं वसु वननीयं वरिष्ठं वसु धनं समासादितवन्तः तत् सर्वमग्नौ न्यदधत सम्यक् सम्भूय निभृतं निहितवन्तः । कथं मन्यमाना इत्याह—इदमु न इति । इदं तावदस्माकमेव भविष्यति यद्यपि पुनरस्मानसुरा जेष्यन्तीति मन्यमाना अयमस्माकमग्निरस्माकमास्त इति तत्र संन्यदधतेति । तद्देवैरात्मनि निहितं वस्वग्निर्न्यकामयत. आत्मसात्कर्तुमैच्छत् । ततस्स कामयमानस्तेन वसुना सहापाक्रामत् देवसकाशात्पलायत । अथ देवा असुरान्विजित्य तद्वामं वस्ववरुरुत्समानाः आत्मसा-

पा॑क्रा॒म॒त्तद्दे॒वा वि॒जित्या॑व॒रुरु॑त्समा॒-
ना॒ अन्वा॑य॒न्तद॑स्य॒ सह॑सादि॑त्सन्त॒

अ॒ग्निः । नीति॑ । अ॒का॒म॒य॒त॒ । तेन॑ । अपेति॑ । अ॒क्रा॒म॒त् । तत् । दे॒वाः । वि॒जित्येति॑ वि–जित्य॑ । अ॒व॒रुरु॑त्समा॒ना॒ इत्य॑व–रुरु॑त्समानाः । आ॒न्विति॑ । आ॒य॒न् । तत् । अ॒स्य॒ । सह॑सा । एति॑ । अ॒दि॒त्स॒न्त॒ ।

त्कर्तुमिच्छन्तः अग्निमन्वायन् अन्वगच्छन् । अनुगम्य च तद्वसु अस्याग्नेस्सकाशात् सहसा बलेन विनैवानुज्ञया आदित्सन्त आदातुमैच्छन् । ततःप्रभृत्याग्निं रुद्रमाचक्षते रोदनेन निमित्तेन । ‘ रोदेर्णिलुक ’ इति ण्यन्ताद्विधीयमानो रक्प्रत्ययो बाहुलका-त्केवलादपि भवति । तस्य रुदतो यदश्रु नेत्रजलमशीयत न्यपतत् रजतं रूप्यं हिरंण्यमभवत् , हितरमणीयं वा । यद्वा— रूप्यस्वर्णयोर्हिरण्यमिति वर्तते (भवति) । तदिदानीं रजतेन विशेष्यते—हिरण्यशब्दाभिधानं तु प्रशंसार्थम् । तस्माद्रजतमद-क्षिण्यं अदक्षिणार्हं अश्रुजम् । हीति हेतौ । हिरण्यमप्यदक्षि-णार्हमिति प्रतिपादनार्थं पुनरपि हिरण्यग्रहणम् । ‘ कडङ्करदक्षि-णाच्छ च ’ इति यत्प्रत्ययः, ‘ ययतोश्चातदर्थे ’ इत्युत्तरपदान्तो-दात्तत्वम् । तस्मात् , बर्हिषि यज्ञे यो रजतं ददाति अस्य गृहे पुरा संवत्सरात् संवत्सरसमाप्तेः रुदन्ति रोदननिमित्तान्युत्प-त्स्यन्ते । ‘ यावत्पुरानिपातयोर्लट् ’ । यद्वा—‘ सप्तमीपञ्चम्यौ कारकमध्ये ’ इति पञ्चमी । तस्मात् बर्हिषि रजतं न दद्यादिति । इदं प्रासङ्गिकमुक्तम् ॥

सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्र्वशीयत तत् ॥ १ ॥ रजतꣳ हिरण्यमभवत्तस्माद्रजतꣳ हिरण्यमदक्षिण्यमश्रुजꣳ हि यो बर्हिषि ददाति पुराऽस्य संवत्सराद्गृहे रुदन्ति तस्माद्बर्हिषि न देयꣳ सोऽग्निरब्रवी-

[2]सः । अरोदीत् । यत् । अरोदीत् । तत् । रुद्रस्य । रुद्रत्वमिति रुद्र–त्वम् । यत् । अश्रु । अशीयत । तत् ॥ १ ॥ रजतम् । हिरण्यम् । अभवत् । तस्मात् । रजतम् । हिरण्यम् । अदक्षिण्यम् । अश्रुजमित्यश्रु–जम् । हि । यः । बर्हिषि । ददाति । पुरा । अस्य । संवत्सरादिति सं–वत्स-रात् । गृहे । रुदन्ति । तस्मात् । बर्हिषि । न । देयम् । सः । अग्निः । अब्रवीत् । भागी ।

---

[2]अथ सः कृतरोदनोऽग्निः तद्वस्वप्रयच्छन्नेवाब्रवीत् । भागी भागवान् अस्मि भवानि मह्यं भागो युष्माभिर्देयः, अथ तथा-कृते इदं मयि निहितं वसु वः युष्माकमेव भविष्यति अहं दास्यामीति । तच्छुश्रुवांसो देवा अब्रुवन् पुनराधेयं ते तवैव केवलमस्ति नान्यः कश्चिदत्र भागीति । पुनः. आधानानन्तरमग्नि-

द्राग्यंसान्यथं व इदमितिं पुनराधेयं ते केवंलमित्यंब्रुवन्नृध्नवत्खलु स इत्यंब्रवीद्यो मंद्देवत्यंमग्निमादधाता इति तं पूषाधंत्त तेनं ॥ २ ॥ पूषाऽऽर्ध्नोत्तस्मात्पौष्णाः पशवं उच्यन्ते तं

असानि । अर्थ । वः । इदम् । इतिं । पुनराधेयमितिं पुनः–आधेयम् । ते । केवंलम् । इतिं । अब्रुवन् । ऋध्नवंत् । खलुं । सः । इतिं । अब्रवीत् । यः । मद्देवत्यमितिं मत्–देवत्यम् । अग्निम् । आदधाता इत्या–दधातै । इतिं । तम् । पूषा । एतिं । अधत्त । तेनं ॥ २ ॥ पूषा । आर्ध्नोत् । तस्मात् । पौष्णाः । पशवः । उच्यन्ते । तम् । त्वष्टां । एतिं । अधत्त । तेनं । त्वष्टां । आर्ध्नोत् ।

---

राधीयते तस्मिन्निति पुनराधेयं कर्म अग्न्याधेयस्यैव उत्तरा ततिः ऋद्धिकामिभिः कर्तव्या । अधिकरणे कृत्यः । अथाग्निरब्रवीत् ऋध्नवत् ऋध्नुयात् खलु सः । कः? इत्थं यो मद्देवत्यं मदेकदेवत्यमग्निमादधातै आदधीतेति द्वितीयामग्न्याधेयतातिं करोतीत्यर्थः । एवमाधातुरभ्युदयमाशास्ते[सै] इति । ऋध्नोतेर्लेटि 'लेटोऽडाटौ' इत्यडागमः । 'देवतान्तात्तादर्थ्ये यत्' । दधाते-

त्वष्टाधत्त तेन त्वष्टार्ध्नोत्तस्मात्त्वाष्ट्राः पशव उच्यन्ते तं मनुराधत्त तेन मनुरार्ध्नोत्तस्मान्मानव्यः प्रजा उच्यन्ते तं धाताधत्त तेन धातार्ध्नोत्संवत्सरो वै धाता तस्मात्संवत्सरं प्रजाः पशवोनु प्र जायन्ते

तस्मात् । त्वाष्ट्राः । पशवः । उच्यन्ते । तम् । मनुः । एति । अधत्त । तेन । मनुः । आर्ध्नोत् । तस्मात् । मानव्यः । प्रजा इति प्र-जाः । उच्यन्ते । तम् । धाता । एति । अधत्त । तेन । धाता । आर्ध्नोत् । संवत्सर इति सं-वत्सरः । वै । धाता । तस्मात् । संवत्सरमिति सं-वत्सरम् । प्रजा इति प्र-जाः । पशवः । अनु । प्रेति । जायन्ते ।

---

लैटि 'वैतोन्यत्र' इत्यैकारः । तच्च तथा देवैः प्रतिश्रुतमिति गम्यते । तस्मात् पुनराधेयं कर्तव्यमिति विधिश्चानुमीयते । अनन्तरं च ऋद्धिकामाः पूषादयः तादृशेन पुनराधेयेन ऋद्धिं प्राप्ता इति दर्शयति—पूषेत्यादि । गतम् । पूष्णः स्वभूताः पौष्णाः पशवः । संवत्सरमिति । प्रजाः पशवश्च संवत्सरमनु प्रजायन्ते । लक्षणादिना अनोः कर्मप्रवचनीयत्वम् ॥

य एवं पुनराधेयस्यर्धिं वेद॥३॥ऋध्नो-
त्येव योऽस्यैवं बन्धुतां वेद बन्धुमा-
न्भवति भागधेयं वा अग्निराहित
इच्छमानः प्रजां पशून् यजमान-
स्योप दोद्रावोद्वास्य पुनरा दधीत

[3]यः। एवम्। पुनराधेयस्येति पुनः–आधेयस्य। ऋद्धिम्। वेद॥ ३॥ ऋध्नोति। एव। यः। अस्य। एवम्। बन्धुताम्। वेद। बन्धुमानिति बन्धु–मान्। भवति। [4]भागधेयमिति भाग–धेयम्। वै। अग्निः। आहित इत्या–हितः। इच्छमानः। प्रजामिति प्र–जाम्। पशून्। यजमानस्य। उपेति। दोद्राव। उद्वास्येत्युत्–वास्य। पुनः। एति। दधीत। भागधेयेनेति भाग–

---

[3]य एवमित्यादि॥ गतम्। बन्धुतां बन्धुसमूहं पूषादीनाम्। 'ग्रामजनबन्धुसहायेभ्यस्तल्'॥

[4]भागधेयं वा इत्यादि॥ गतम्। आत्मन एवासाधारणं भागमिच्छन् प्रजां पशूंश्च यजमानस्योपदोद्राव भृशमुपद्रुतान् करोति स्म। द्रवतेर्यङ्लुगन्ताच्छान्दसो लिट्। तस्मादुद्वास्याग्निं पुनरादधीत। भागधेयेनाभीप्सितेन एनमग्निं समर्थयति सुप्रीतं करोति। अथो

भागधेयेनैवैनꣳ समर्धयत्यथो शा-
न्तिरेवास्यैषा पुनर्वस्वोरा दधीतै-
तद्वै पुनराधेयस्य नक्षत्रं यत्पुनर्वसू
स्वायामेवैनं देवतायामाधाय ब्रह्म-
वर्चसी भवति दर्भैरा दधात्ययाम-

धेयेन । एव । एनम् । सम् इति । अर्धयति । अथो इति । शान्तिः । एव । अस्य । एषा । 5 पुनर्वस्वोरिति पुनः—वस्वोः । एति । दधीत । एतत् । वै । पुनराधेयस्येति पुनः—आधेयस्य । नक्षत्रम् । यत् । पुनर्वसू इति पुनः—वसू । स्वायाम् । एव । एनम् । देवतायाम् । आधायेत्या—धाय । ब्रह्मवर्चसीति ब्रह्म—वर्चसी । भवति । 6 दर्भैः । एति । दधाति । अयातयामत्वायेत्ययातयाम—

---

अपि च शान्तिरेवैषास्य येनोपद्रवकारी न भवति उद्वासन्येष्ट्वे-ष्ट्वाग्नीन् परोप्य पुनरग्न्यगारं यज्ञपात्राणि च संस्कृत्यान्यानि वा कृत्वा पुनरादधीताग्नीनग्न्याधेयकल्पेनेति ॥

5पुनर्वस्वोरिति ॥ पुनरावर्तते वामं वस्वेतयोरिति पुनर्वसू देव-तायाम् । ब्रह्मवर्चसी ब्राह्मणस्येयमेव ऋद्धिरिति ॥

6दर्भैरिति ॥ न प्रणयनीयेनेध्मेन । अयातयामत्वाय अपुनरु-

तयामत्वाय दुर्भैरा दधात्यद्भ्य एवैन-
मोषधीभ्योवरुध्या धत्ते पञ्चकपालः
पुरोडाशो भवति पञ्च वा ऋतव
ऋतुभ्य एवैनमवरुध्या धत्ते ॥ ४ ॥

त्वाय । दर्भैः । एति । दधाति । अद्भ्य इत्यत्-भ्यः । एव । एनम् । ओषधीभ्य इत्योषधि-भ्यः । अवरुध्येत्यव-रुध्य । एति । धत्ते । [7]पञ्चकपाल इति पञ्च-कपालः । पुरोडाशः । भवति । पञ्च । वै । ऋतवः । ऋतुभ्य इत्यृतु-भ्यः । एव । एनम् । अवरुध्येत्यव-रुध्य । एति । धत्ते ॥ ४ ॥

अशीयत तत्तेन वेदं दर्भैः पञ्चविंशतिश्च ॥ १ ॥

क्तत्वाय । किञ्च—दर्भैराधानमद्भ्यश्चौषधीभ्यश्चाप्नेरेवावरुद्ध्यै भवति ॥

[7]पञ्चकपाल इत्यष्टाकपालस्य स्थाने ॥ पञ्चसु कपालेषु संस्कृत इति तद्धितार्थे द्विगुः, 'द्विगोः' इति लुक्, 'इगन्तकाल' इति पूर्वपदप्रकृतिस्वरत्वम् । पञ्च वा इति ॥ हेमन्तशिशिरयोरेकत्वाभिप्रायमिदम्, 'हेमन्तशिशिरावृतूनाम्'* इति सहनिर्देशात् ॥

इति पञ्चमे प्रथमोनुवाकः.

*सं. १-६-२.

परा वा एष यज्ञं पशून् वपति
योऽग्निमुद्वासयते पञ्चकपालः पुरो-
डाशो भवति पाङ्क्तो यज्ञः पाङ्क्ताः
पशवो यज्ञमेव पशूनव रुन्धे वीरहा
वा एष देवानां योऽग्निमुद्वासयते न

[1]परेति । वै । एषः । यज्ञम् । पशून् । वपति । यः । अग्निम् । उद्वासयत इत्युत्-वासयते । पञ्चकपाल इति पञ्च-कपालः । पुरोडाशः । भवति । पाङ्क्तः । यज्ञः । पाङ्क्ताः । पशवः । यज्ञम् । एव । पशून् । अवेति । रुन्धे । [2]वीरहेति वीर-हा । वै । एषः । देवानाम् । यः । अग्निम् । उद्वासयत इत्युत्-वासयते । न । वै । एतस्य । ब्रा-

---

[1]परा वा इत्यादि ॥ परावापो विनाशः । पञ्चकपाल इति पुनर्विधानं प्रयोजनान्तरार्थम् । पाङ्क्तो यज्ञ इति, धानादिपञ्चकाधीनसिद्धित्वात् । उत्सादित्वादणपवादोऽञ् उक्तः । पाङ्क्ता इति पशुसाधनत्वात्पाङ्क्ताः । यज्ञं पशूंश्च अवरुन्धे प्राप्नोति ॥

[2]वीरहेत्यादि याज्यानुवाक्या विशेषविधिः ॥ देवानां मध्ये वीरस्याग्नेर्हन्ता, का कथान्येषां देवानामिति ? तस्मात् सर्वेभ्यस्माद्बिभ्यतीति । ऋतायवः ऋतं सत्यं यज्ञं वा आत्मन इच्छन्तः । क्यचि

वा एतस्यं ब्राह्मणा ऋतायवः पुरा-
न्नमक्षन्पङ्क्त्यौ याज्यानुवाक्या भव-
न्ति पाङ्क्तो यज्ञः पाङ्क्तः पुरुषो देवा-
नेव वीरं निरवदायाग्निं पुनरा॥५॥

ह्मणाः। ऋतायव इत्यृत–यवः। पुरा। अन्नम्। अक्षन्। पङ्क्त्यः। याज्यानुवाक्या इति याज्या–अनुवाक्याः। भवन्ति। पाङ्क्तः। यज्ञः। पाङ्क्तः। पुरुषः। देवान्। एव। वीरम्। निरवदायेति निः–अवदाय। अग्निम्। पुनः। एति॥ ५॥

'न छन्दस्यपुत्रस्य' इतीत्वाभावः। 'क्याच्छन्दसि' इत्युप्रत्ययः। ऋतायुत्वादेतस्योद्वासिताग्नेरन्नं नाक्षन् नादन्, अभोज्यान्नत्वादेतस्य। अत्तेर्लुङि 'लुङ्सनोर्घस्लृ' इति घस्लादेशः, 'मन्त्रे घस' इत्यादिना च्लेर्लुक्, 'घसिभसोः' इत्युपधालोपः, 'शासिवसिघसीनां च' इति षत्वम्। पङ्क्त्य इति। 'अग्ने तमद्याश्वं न स्तोमैः'* इति चतस्रोऽक्षरपङ्क्तयः। तत्र द्वे अग्न्याधेयस्य याज्यानुवाक्ये द्वे स्विष्टकृतः। याज्यानुवाक्ये च याज्यानुवाक्ये चेति कृतैकशेषयोर्द्वन्द्वः। छान्दसमुत्तरपदप्रकृतिस्वरत्वम्। पाङ्क्तः पुरुष इति। 'पाङ्क्तं वा इदं सर्वम्'† इति। देवानिति। देवान् तेषां च वीरं निरवदाय उद्वासनलक्षणभयस्थानान्निष्कृष्य अग्निं पुनराधत्ते॥

*सं. ४-४-४. † ब्रा. १-१-१०.

धत्ते शताक्षरा भवन्ति शतायुः
पुरुषश्शतेन्द्रिय आयुष्येवेन्द्रिये प्रति
तिष्ठति यद्वा अग्निराहितो नर्ध्यते
ज्यायो भागधेयं निकामयमानो
यदाग्नेयꣳ सर्वं भवति सैवास्यर्धि-

धत्ते । [3]शताक्षरा इति शत–अक्षराः । भवन्ति । शतायुरिति शत–आयुः । पुरुषः । शतेन्द्रिय इति शत–इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठति । [4]यत् । वै । अग्निः । आहित इत्या–हितः । न । ऋध्यते । ज्यायः । भागधेयमिति भाग-धेयम् । निकामयमान इति नि-कामयमानः । यत् । आग्नेयम् । सर्वम् । भवति । सा ।

---

[3]शताक्षरा इति ॥ उक्ता अक्षरपङ्क्तयश्चतस्र इति । तत्रैकैका पञ्चविंशत्यक्षरा । सर्वास्सम्भूय शताक्षरा इति । शतायुश्शतवर्षः शतेन्द्रियश्शतवीर्यः आयुषीन्द्रिये च प्रतिष्ठितो भवति ॥

[4]यद्वा इत्यादि ॥ येन नर्ध्यते ऋद्धिहेतुर्न भवति तज्ज्यायः प्रशस्यतरं अग्न्याधेयभागात् केवलाग्नेयत्वात् पुनराधेयभागं तन्निकामयमानः तन्निभृतं आत्मनस्सम्पादयितुमिच्छन् ऋद्धिहेतुतामग्निर्न प्रतिपद्यत इति । आहितशब्दे 'गतिरनन्तरः' इति स्वरः । ततः केवलाग्नेयकरणेन ऋद्धिहेतुरयमिति । तस्मात् सर्वमाग्नेयं कर्तव्यमिति विधिः ॥

स्सं वा एतस्य गृहे वाक्सृज्यते योऽग्निमुद्वासयते स वाच॒ꣳ स॒ꣳसृष्टां यजमान ईश्वरोनु पराभवितोर्विभक्तयो भवन्ति वाचो विधृत्यै

एव । अस्य । ऋद्धिः । [5]सामिति । वै । एतस्य । गृहे । वाक् । सृज्यते । यः । अग्निम् । उद्वासयत इत्युत्–वासयते । सः । वाचम् । सꣳसृष्टामिति सं–सृष्टाम् । यजमानः । ईश्वरः । अन्विति । पराभवितोरिति परा–भवितोः । विभक्तय इति वि–भक्तयः । भवन्ति । वाचः । विधृत्या इति वि–धृत्यै । यजमानस्य । अपराभावायेत्यपरा–

[5]अथ विभक्तिविधानार्थमाह—सं वा इति ॥ अस्य वाग्गृहे संसृज्यते गृहवासिनां वाग्योगे न वैलक्षण्यं भजते । ततश्चाबहुमतवाक्त्वात् पराभवितोः पराभवितुमीश्वरस्स्यात् । ततश्चास्य गृहान् भावयितुमेव वरमिति । वक्ष्यति च—'आयतनादेव नैति'* इति । मूकत्वं वा वाक्संसर्गः । 'ईश्वरे तोसुन्कसुनौ' । लक्षणेनोः कर्मप्रवचनीयत्वम् । तस्मात् विभक्तयो भवन्तीति विधिः । विभज्यते व्यावर्त्यतेस्य वाग्भिरिति विभक्तयः 'अग्नाग्ने अग्नावग्ने अग्निनाग्ने अग्निमग्ने' इति चतस्रः । एताश्च चतुर्षु प्रयाजेषु देयाः नोत्तमे ।

*सं. १-५-२.[8]

यजमानस्यापराभावाय ॥६॥ विभ-
क्तिं करोति ब्रह्मैव तदकरुपांशु
यजति यथा वामं वसु विविदानो

भावाय ॥ ६ ॥ [6]विभक्तिमिति वि–भक्तिम् ।
करोति । ब्रह्म । एव । तत् । अकः । [7]उपांश्विति-
त्युप–अंशु । यजति । यथा । वामम् । वसु ।
विविदानः । गूहति । तादृक् । एव । तत् ।

---

'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । विधृत्यै विलक्षणावस्था-
नाय प्रयाजानामग्न्याधेयाद्वैलक्षण्यापादने वाचस्संसर्गदोषः परिह्रि-
यत इति ॥

[6]विभक्तिमिति ॥ विभक्तिं वैलक्षण्यविभक्तिप्रदानमस्येति[मस्य]
कर्मणो यत्करोति तेन हेतुना पुनराधेयं ब्रह्म परिबृढं अग्न्याधेयात्
अकः करोति । छान्दसो लुङ्, 'मन्त्रे घस' इति च्लेर्लुक् ।
मन्त्र इति वेदमात्रस्य ग्रहणम् । यद्वा—लङि व्यत्ययेन शपो लुक् ॥

[7]उपांश्विति ॥ सर्वो याग उपांशुः कर्तव्यः ओत्तमादनूयाजात् ।
'उपाद्द्व्यजजिनम्' इत्युत्तरपदान्तोदात्तत्वम् । यथेति । यथा
वामं वननीयं वरिष्ठं धनं मुषितं विविदानः लभमानः लब्धुं यत-
मानः तत् गूहति संवृणोति तादृक्तदुपांशुकरणम् । छान्दसस्य
लिटः कानजादेशः ॥

गूहति ताद‍ृगेव तदग्निं प्रति स्विष्ट-
कृतं निराह यथा वामं वसु विवि-
दानः प्रकाशं जिगमिषति ताद‍ृगेव
तद्विभक्तिमुक्त्वा प्रयाजेन वषट्करो-
त्यायतनादेव नैति यजमानो वै पु-

[8]अग्निम् । प्रतीति । स्विष्टकृतमिति स्विष्ट-कृतम् । निरिति । आह । यथा । वामम् । वसु । विविदानः । प्रकाशमिति प्र-काशम् । जिगमिषति । ताद‍ृक् । एव । तत् । विभक्तिमिति वि-भक्तिम् । उक्त्वा । प्रयाजेनेति प्र-याजेन । वषट् । करोति । आयतनादित्या-यतनात् । एव । न । एति । [9]यजमानः । वै । पुरोडाशः । पशवः । एते

[8]अग्निं प्रतीति ॥ स्विष्टकृतमग्निं प्रति निराह निर्गतं ब्रूयात् उच्चैरिति यावत् । लक्षणादिना प्रतेः कर्मप्रवचनीयत्वम् । यथेति । यथा वामं वसु विविदानः अन्विष्य लब्धवान् तत्प्रकाशं विवृतं जिगमिषति ख्यापयितुमिच्छति । अहो इदं द‍ृष्टं पश्यतेति ताद‍ृक् तदुच्चैर्वचनम् । परोक्षे लिटः कानजादेशः । विभक्तिमिति । ये यजामह इत्यस्यानन्तरं विभक्तिमुक्त्वा ततः प्रयाजमन्त्रेण वषट्करोति हविर्ददाति । अनेन कर्मणा स्वस्मादायतनान्नैति न गच्छति । अनुष्ठेयवचनः स्व आयतने निवसति ॥

[9]यजमानो वा इत्यादि ॥ प्राधान्यात्ताद्धर्म्येण ताच्छब्द्यम् ।

रोडाशः पशव एते आहुती यदभि-
तः पुरोडाशमेते आहुती ॥ ७ ॥
जुहोति यजमानमेवोभयतः पशु-
भिः परि गृह्णाति कृतयजुस्सम्भृत-
सम्भार इत्याहुर्न सम्भृत्यास्सम्भारा

इति । आहुती इत्या-हुती । यत् । अभितः । पुरोडाशम् । एते इति । आहुती इत्या-हुती ॥ ७ ॥ जुहोति । यजमानम् । एव । उभयतः । पशुभिरिति पशु-भिः । परीति । गृह्णाति । [10]कृत-यजुरिति कृत-यजुः । सम्भृतसम्भार इति सम्भृत-सम्भारः । इति । आहुः । न । सम्भृत्या इति सं-भृत्याः । सम्भारा इति सं-भाराः । न ।

---

पशव इति । तद्धेतुत्वात्ताच्छब्द्यम् । स्वयं पशव एव पुनरूर्जा निवर्तस्व सह रय्या निवर्तस्वेत्येते आहुती । यदभित इति । अभितः पुरस्तादुपरिष्टाच्च पुरोडाशहोमस्य । 'अभितःपरितः' इति द्वितीया । गतमन्यत् ॥

[10]कृतयजुरिति ॥ कृतस्तम्बयजुरग्न्याधेयेन सम्भृताश्च सम्भाराः । तस्मादत्र न सम्भृत्याः न सम्भरणीयास्सम्भाराः न यजुः कर्तव्यमित्याहुरेके आचार्याः । 'भृञोसंज्ञायाम्' इति क्यप् ॥

न यजुः कर्तव्यमित्यथो खलु स-
म्भृत्या एव सम्भाराः कर्तव्यं यजु-
र्यज्ञस्य समृद्ध्यै पुनर्निष्कृतो रथो
दक्षिणा पुनरुत्स्यूतं वासः पुनरुत्सृ-

यजुः । कर्तव्यम् । इति । [11]अथो इति । खलु । सम्भृत्या इति सं–भृत्याः । एव । सम्भारा इति सं–भाराः । कर्तव्यम् । यजुः । यज्ञस्य । समृद्ध्या इति सं–ऋद्ध्यै । [12]पुनर्निष्कृत इति पुनः–निष्कृतः । रथः । दक्षिणा । पुनरुत्स्यूतमिति पुनः–उत्स्यूतम् । वासः । पुनरुत्सृष्ट इति पुनः उत्सृष्टः । अनड्वान् । पुनराधेयस्येति पुनः–आधेयस्य । समृद्ध्या इति सं–ऋद्ध्यै ।

---

[11]एतद्दूषयति—अथो खलु वयं ब्रूमः सम्भृत्या एवेति ॥ गतम् ।

[12]पुनर्निष्कृत इत्यादि ॥ पुनर्निष्कृतः पुनस्संस्कृतः । पुनरुत्स्यूतं पुनस्संस्कृतमेव संहितच्छिद्रम् । षिवेर्निष्ठायां 'च्छ्वोश्शूडनुनासिके च' इत्यूठ् । पुनरुत्सृष्टः अवशीर्णगवः । एते पात्रे सम्मितादयो द्रष्टव्याः, उपपदसमासो वा । कृदुत्तरपदप्रकृतिस्वरत्वम् । 'पुनश्चनसौ छन्दसि' इति गतित्वात् गतिसमासो वा । प्रवृद्धादेराकृतिगणत्वादुत्तरपदान्तोदात्तत्वम् ॥

ष्टोऽनड्वान्पुनराधेयस्य समृद्ध्यै सप्त ते अग्ने समिधस्सप्त जिह्वा इत्यग्निहोत्रं जुहोति यत्रयत्रैवास्य न्यक्तं ततः ॥८॥ एवैनमव रुन्धे वीरहा वा एष देवानां योऽग्निमुद्वासयते तस्य वरुण एवर्णयादाग्निवारुणमेकादशकपालमनु निर्वपेद्यं चैव ह-

[13]सप्त । ते । अग्ने । समिध इति सं-इधः । सप्त । जिह्वाः । इति । अग्निहोत्रमित्यग्नि-होत्रम् । जुहोति । यत्रयत्रेति यत्र-यत्र । एव । अस्य । न्यक्तमिति नि-अक्तम् । ततः ॥ ८ ॥ एव । एनम् । अवेति । रुन्धे । [14]वीरहेति वीर-हा । वै । एषः । देवानाम् । यः । अग्निम् । उद्वासयत इत्युत्-वासयते । तस्य । वरुणः । एव । ऋणयादित्यृण-यात् । आग्निवारुणमित्याग्नि-

---

[13]सप्त ते अग्ने इति ॥ न्यक्तिः [न्यक्तं न्यक्तिः] नियता अक्तिरनुगतिः ॥

[14]वीरहेत्यादि ॥ पुनर्वचनं हविरन्तरविधानार्थम् । वरुण एव देवानां मध्ये ऋणयात् ऋणेन यातयिता ऋणिनमिव तममुञ्चन् पीडयति ।

न्ति यश्चास्यर्णयात्तौ भागधेयेन प्री-
णाति नार्तिमार्छति यजमानः॥१॥
भूमिर्भूम्ना द्यौर्वरिणान्तरिक्षं महि-

वारुणम्। एकादशकपालमित्येकादश–कपालम्। अनु। निरिति। वपेत्। यम्। च। एव। हन्ति। यः। च। अस्य। ऋणयादित्यृण–यात्। तौ। भागधेयेनेति भाग–धेयेन। प्रीणाति। न। आर्तिम्। एति। ऋच्छति। यजमानः॥ १ ॥

आपराभावाय पुरोडाशमेते आहु-
ती ततष्षड्विꣳशञ्च ॥ २ ॥

[1]भूमिः। भूम्ना। द्यौः। वरिणा। अन्तरिक्षम्।

---

ण्यन्तात्क्विप्। ऋणमिच्छतीति क्यचि वा पूर्ववदीत्वाभावः, शतरि छान्दसो नुमभावः पररूपाभावश्च ॥

पञ्चमे द्वितीयोनुवाकः.

---

[1]अथ पुनराधेयमन्त्राः। तत्र गार्हपत्य आधीयमाने सर्पराज्ञी-स्तिस्रोनुवर्तयति—भूमिर्भूम्नेति ॥ प्रथमोपरिष्टाद्बृहती, अन्त्यस्य पादस्य द्वादशाक्षरत्वात्। हे देवि अदिते अखण्डिते भूमे।

त्वा । उपस्थे ते देव्यदितेग्निमन्नाद-
मन्नाद्याया दधे । आयं गौः पृश्नि-
रक्रमीदसनन्मातरं पुनः । पितरं च

महित्वेति महि—त्वा । उपस्थ इत्युप—स्थे । ते । देवि । अदिते । अग्निम् । अन्नादमित्यन्न—अदम् । अन्नाद्यायेत्यन्न—अद्याय । एति । दधे ।
[2]एति । अयम् । गौः । पृश्निः । अक्रमीत् ।

---

आहवनीयो भूमित्वेन स्तूयते । भूम्ना बहुत्वेन विपुलत्वेन त्वं भूमिरेवासि । द्यौरसि त्वं वरिणा उरुत्वेन । ताद्धर्म्यात्ताच्छ-ब्द्यम् । अ[म?]कारलोपश्छान्दसः । अन्तरिक्षमसि महित्वा माहात्म्येन । व्यञ्जनविपर्ययः । सर्वत्रोदात्तनिवृत्तिस्वरेण तृती-याया उदात्तत्वम् । महित्वशब्दात्तृतीयाया आकारो वा । अत्र तवोपस्थे उत्सङ्गे गार्हपत्यात्मनि अग्निमन्नादमन्नस्य हविषोत्तारं अन्नाद्याय अन्नादनसामर्थ्यात्मिकायै ऋद्ध्यै आदधे स्थापयामि । पचाद्यचि अन्नादः । इतरत्र छान्दसो भावे यत् । 'लघावन्ते' इति मध्योदात्त उपस्थशब्दः । मरुद्वृधादित्वाद्वा ॥

[2]द्वितीया—आयमिति गायत्री ॥ इदानीमादित्यात्मना स्तूयते—अयमग्निः गौरादित्यात्मा गच्छतीति गौः गमनशीलः पृश्निः शुक्ल-वर्णः आदित्यानामे[आदित्यनामै]व वा । आक्रमीत् अयमेवादित्यात्मना विश्वमाक्रामतीति । प्रकर्षेणाविच्छेदेन गच्छन् सुवः शोभना रतिः । छान्दसौ लुङ्लङौ । आक्रम्य च मातरं भूमिमसनत् भूमौ मातरि

प्रयन्त्सुवः । त्रि॒ꣳशद्धाम॒ वि रा-
जति॒ वाक्प॑तङ्गाय॑ शिश्रिये । प्रत्य-

अस॑नत् । मा॒तर॑म् । पुन॑ः । पि॒तर॑म् । च॒ ।
प्र॒यन्निति॑ प्र—यन् । सुव॑ः । [3]त्रि॒ꣳशत् । धाम॑ ।
वीति॑ । रा॒ज॒ति॒ । वाक् । प॒त॒ङ्गाय॑ । शि॒श्रि॒ये॒ ।
प्रतीति॑ । अ॒स्य॒ । व॒ह॒ । द्यु॒भि॒रिति॒ द्यु—भि॒ः ।

---

शान्तोभूत् । पितरं दिवं प्रयन् प्रकर्षेण गच्छन् सर्वतो ज्वलन् धूमज्वालाभ्यामभ्रं लिहन् सुवः पितृस्थानीये दिवि स्वरतिरभूत् ॥

[3]तृतीया—त्रिंशदिति गायत्री ॥ त्रिंशद्धामानि स्थानानि विराजति प्रकाशवद्भवति । उभयत्रापि वचनव्यत्ययः । त्रिंशन्मुहूर्ता उच्यन्ते। [पञ्चदशाह्नः]पञ्चदश रात्रेः । तेषु वाक् शिश्रिये सिषेवे आश्रिता पतङ्गाय पतङ्गः आदित्यः । यथा 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते'* इति या स्तुतिलक्षणा वाक् तेषु सर्वेष्वपि मुहूर्तेषु पतङ्गं श्रिता । कर्मणि चतुर्थी । तस्मात्तादृशः महानुभावः आदित्यात्मा त्वं प्रत्यस्य प्रतिकूलं यत्प्रकृतं तवोद्वासनं तदस्य विसृज बुद्धौ मा कृथाः । 'ससाधनां क्रियामुपसर्ग आह' इति प्रतिशब्देन प्रतिकूलमुच्यते । ततः प्रसन्नो भूत्वा वह हवींष्यस्माकं द्युभिः दिनेदिने । अधिकरणानां साधकतमत्वविवक्षया तृतीया; यथा 'स्थाल्या पचति' इति । 'ऊडिदम्' इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'दिवो झल्' इति प्रतिषेधः । अस्मिन्व्याख्याने तिङः परत्वाद्वहेत्यस्य निघातो दुर्लभस्स्यात् ।

---

*ब्रा. ३-१२-९.

स्य वह द्युभिः । अस्य प्राणादपा-
नत्यन्तश्चरति रोचना । व्यख्यन्म-
हिषस्सुवः । यत्त्वा ॥ १० ॥ क्रुद्धः

[4]अस्य । प्राणादिति प्र–अनात् । अपानतीत्यप–
अनती । अन्तः । चरति । रोचना । वीति ।

---

अथ ब्रूमः—एवं महातेजाः पतङ्गः अस्य प्रतिवह प्रतिरूपतया वर्तस्व द्युभिः तेजोभिः । अन्वादेशत्वादस्येति सर्वानुदात्तः ॥

[4]आहवनीये तिस्रोनुवर्तयति । तत्र प्रथमा—अस्येति गायत्री ॥ अपानतीति प्रथमपादान्तः । अस्याग्नेः रोचना दीप्तिः रोचनशीला । 'अनुदात्तेतश्च' इति युच् । अन्तश्शरीरेषु चरति । किं कुर्वती· प्राणात् प्राणनव्यापारात् अनन्तरमपानती अपाननव्यापारं कुर्वती । जीवानां ऊर्ध्वगमनं प्राणनं अधोगमनमपाननम् । जीवश्श्वास-वायुः । किञ्च—महिषः महति शरीरे सीदति । 'सदिरप्रतेः' इति षत्वम् । अन्त्यविकारश्छान्दसः । यद्वा—महतेष्टिषचि लिङ्ग-व्यत्ययः । महनीया सुवः शोभना रोचना व्यख्यत् विचष्टे प्रकाशते जीवानामन्तः । छान्दसो लुङ् । 'अस्यतिवक्ति' इत्या-दिनाऽङ् । 'उदात्तस्वरितयोः' इति संहितायामडागमः स्वर्यते । अन्य आहुः—अस्याग्नेः सुवः आदित्यात्मिका रोचना दीप्तिः प्राणा-दुदयात् अपानती अस्तं गच्छन्ती अन्तः द्यावापृथिव्योर्मध्ये चरति । महत्यन्तरिक्षे सीदति । व्यख्यत् प्रकाशयति च द्यावापृथिव्यौ । एवं महानुभावं त्वामादधामीति ॥

परोवप मन्युना यदवर्त्या । सुकल्प-
मग्ने तत्तव पुनस्त्वोद्दीपयामसि ।
यत्ते मन्युपरोप्तस्य पृथिवीमनु दध्व-
से । आदित्या विश्वे तद्देवा वसवश्च

अख्यत् । महिषः । सुवः । [5]यत् । त्वा ॥ १० ॥
क्रुद्धः । परोवपेति परा-उवप । मन्युना । यत् ।
अवर्त्या । सुकल्पमिति सु-कल्पम् । अग्ने । तत् ।
तव । पुनः । त्वा । उदिति । दीपयामसि । [6]यत् ।
ते । मन्युपरोप्तस्येति मन्यु-परोप्तस्य । पृथिवीम् ।

---

[5]द्वितीया—यत्त्वेत्यनुष्टुप् । तवेति तृतीयपादान्तः ॥ यत् येन कारणेन ऋद्ध्यभावेन क्रुद्धोहं त्वामपि परोवप परोप्तवान् उद्वासितवानस्मि । 'णलुत्तमो वा' इति णित्त्वाभावः । 'यद्वृत्तान्नित्यम्' इति निघाताभावे 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम्, समासश्च । लिति प्रत्ययात्पूर्वस्योदात्तत्वम् । मन्युना शोकेन परीतोहमवर्त्या दारिद्र्येण पाप्मना वा यत्त्वां परोवप विनाशितवान् हे अग्ने तदपि तव प्रसादात्सुकल्पं शोभनकृतिकमेव भवति । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । 'युष्मदस्मदोर्ङसि' इति तवशब्द आद्युदात्तः । अतस्त्वां पूर्ववदेवोद्दीपयामसि उद्दपामः । 'इदन्तो मसि' ॥

[6]अथ तृतीया—यत्त इत्यनुष्टुप् ॥ ते तव मन्युपरोप्तस्य मन्युना हेतुना मयोद्वासितस्य । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ।

समाभरन् । मनो ज्योतिर्जुषतामा-
ज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु ।
बृहस्पतिस्तनुतामिमं नो विश्वे देवा

अन्विति । दध्वसे । आदित्याः । विश्वे । तत् । देवाः । वसवः । च । समाभरन्निति सं–आभरन् । [7]मनः । ज्योतिः । जुषताम् । आज्यम् । विच्छिन्नमिति वि–छिन्नम् । यज्ञम् । समिति । इमम् । दधातु । बृहस्पतिः । तनुताम् । इमम् ।

यत्तेजः पृथिवीमनुदध्वसे ध्वस्तं पृथिवीमनुप्रविश्य वा नष्टं बभूव तदादित्या विश्वे देवा वसवश्च समाभरन् संमाभरन्तु । 'ह्रग्रहोः' इति भत्वम् ॥

[7]अग्निहोत्रमन्त्रावुपस्थानार्थौ—तत्र प्रथमा मन इति विराट् ॥ हे अग्ने तव ज्योतिः कीदृशं मननीयम् । यद्वा—मनश्शोषमुद्वासितेन पीडितं यन्मननीयमेवासीत् नान्यत्वे[त्र ?]विद्यते तदिदमाज्यं जुषतां सेवतां अनेन कर्मणा पूर्ववत्समृद्धमस्तु । यद्वा—मनस्सदा मननीयं मनोहरं अग्न्याख्यं ज्योतिः उद्वासनापराधं चेतस्यकृत्वा जुषतामाज्यमिति । ततो विच्छिन्नमुद्वासने तव यज्ञमिमं सन्दधातु । बृहस्पतिश्च नः अस्माकमिमं यज्ञं तनुतां विश्वे देवाश्च इहास्मिन्कर्मणि मादयन्तां मोद(य)न्ताम् । मद तृप्तियोगे चुरादिः । बृहस्पतिशब्दश्च पारस्करादिः, वनस्पत्यादिश्च । तेन सुडागमः, पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं च ॥

इह मादयन्ताम् । सप्त ते अग्ने स-
मिधस्सप्त जिह्वास्सप्त ॥ ११ ॥ ऋ-
षयस्सप्त धाम प्रियाणि । सप्त हो-
त्रास्सप्तधा त्वा यजन्ति सप्त योनी-
रा पृणस्वा घृतेन । पुनरूर्जा नि

नः । विश्वे । देवाः । इह । मादयन्ताम् । [8]सप्त । ते । अग्ने । समिध इति सं–इधः । सप्त । जिह्वाः । सप्त ॥ ११ ॥ ऋषयः । सप्त । धाम । प्रियाणि । सप्त । होत्राः । सप्तधेति सप्त–धा । त्वा । यजन्ति । सप्त । योनीः । एति । पृणस्व । घृतेन । [9]पुनः ।

---

[8]द्वितीया—सप्त त इति त्रिष्टुप् ॥ हे अग्ने तव प्रियाणि सप्त धामानि स्थानानि भूरादयो लोकाः । 'सुपां सुलुक्' इति धाम्नो जसो लुक् । तेषु सप्तसु धामसु तव सप्त समिधः सम्यगिद्धास्तनवः । सप्त जिह्वा ज्वाला याभिस्सप्तसु रसनास्वदनाय स्वादयसि सप्त ऋषयः दर्शयित्र्यः प्रकाशशक्तयः । यद्वा—सप्तर्षयो मन्त्राः सप्त धिष्ण्यविषयाः । सप्त होत्राः होत्रादयो वषट्कर्तारः । ते त्वामेकं सप्तधा यजन्ति । स त्वं तथेष्टः सप्त योनीः स्थानानि भूरादीनि सप्त कारणानि घृतेनाज्येन उदकेन वा फलभूतेन आपृणस्व आप्रीणय । पृण प्रीणने ॥

[9]अभितः पुरोडाशमाहुतीर्जुहोति पुरस्तादुपरिष्टाच्च—पुनरूर्जेति

वर्तस्व पुनरग्न इषायुषा । पुनर्नः पाहि विश्वतः । सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया । विश्व-

ऊर्जा । नीति । वर्तस्व । पुनः । अग्ने । इषा । आयुषा । पुनः । नः । पाहि । विश्वतः । [10]सह । रय्या । नीति । वर्तस्व । अग्ने । पिन्वस्व । धारया । विश्वफ्स्नियेति विश्व—फ्स्निया । विश्वतः ।

---

द्वाभ्यां गायत्रीभ्याम् ॥ हे अग्ने ऊर्जा रसेन क्षीरादिना अस्मभ्यं देयेन सह निवर्तस्व पुनरुद्वासितोहमिति सञ्जातमन्युर्वा मय्युपेक्षां मा कार्षीः । इषा अन्नेन आयुषा च सह पुनर्निवर्तस्वेत्येव । उद्वासननिमित्ताच्च पापाद्विश्वतोस्मान्पुनः पाहि रक्ष ॥

[10]द्वितीया—हे अग्ने रय्या धनेन सह निवर्तस्व । 'उदात्तयणः' इति तृतीयाया उदात्तत्वम् । धारयानयाहुत्या एतदाहुतिहेतुकया वा वर्षधारया विश्वतस्परि विश्वस्य रक्षणीयस्य तृणधान्यलतापादपादेर्मूर्ध्नि पिन्वस्य सिञ्च । पिवि सेचने; इदित्वान्नुम् । 'पञ्चम्याः परावध्यर्थे' इति संहितायां सत्वम् । धारा विशेष्यते—विश्वप्स्न्या । प्सा भक्षणे । विश्वेन प्सानीया भक्षणीया विश्वं वा प्साति भक्षयति व्याप्नोतीति विश्वप्सम् । 'श्वन्नुक्षन्' इत्यादौ कनिन्प्रत्ययान्तो निपात्यते निपातनसामर्थ्यादभीष्टस्वरसिद्धिः । 'ऋन्नेभ्यः' इति ङीप् ॥

प्स्नया विश्वतस्परि । लेकस्सलेकस्सुलेकस्ते न आदित्या आज्यं जुषाणा वियन्तु केतस्सकेतस्सुकेतस्ते न आदित्या आज्यं जुषाणा वियन्तु विवस्वाꣳ अदितिर्देवजूति-

परि । [11]लेकः । सलेक इति स-लेकः । सुलेक इति सु-लेकः । ते । नः । आदित्याः । आज्यम् । जुषाणाः । वियन्तु । [12]केतः । सकेत इति स-केतः । सुकेत इति सु-केतः । ते । नः । आदित्याः । आज्यम् । जुषाणाः । वियन्तु । [13]विवस्वान् । अदितिः । देवजूतिरिति देव-जूतिः । ते । नः ।

---

[11-13]तृतीयमादधानस्य स्रुवाहुतिमन्त्राः—लेक इत्यादयः ॥ द्विपदा विच्छन्दसः, यजूंषि वा । एते लेकादयो नवादित्याः नः अस्माकमिदं आज्यं जुषाणाः प्रीणानाः वियन्तु पिबन्तु । लेकतिर्दर्शनकर्मा । सर्वैर्दृश्यते इति लेकः ; द्रष्टव्यो वा । दर्शनेन प्रकाशात्मकेन सह वर्तते इति सलेकः । शोभनदर्शनस्सुलेकः । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । कित ज्ञाने, सर्वैर्ज्ञायते इति केतः सर्वैरुपासनीयः । सकेतसुकेतौ गतौ । विवस्वान् दीप्तिमान् धनवान्वा । अदितिः अखण्डनीयः केनापि । देवजूतिः देवानामपि गतिः, देवैर्वा गन्तव्यः । दासीभारादित्वात्पूर्व-

स्ते नं आदित्या आज्यं जुषाणा
वियन्तु ॥ १२ ॥
भूमिर्भूम्ना द्यौर्वरिणेत्याहाशिषैवैन-
मा धंत्ते सर्पा वै जीर्यन्तोमन्यन्त

आदित्याः । आज्यम् । जुषाणाः । वियन्तु ॥ १२ ॥

त्वा जिह्वास्सप्त सुकेतस्तेनस्त्रयो-
दश च ॥ ३ ॥

[1]भूमिः । भूम्ना । द्यौः । वरिणा । इति । आह । आशिषेत्या–शिषा । एव । एनम् । एति । धत्ते । [2]सर्पाः । वै । जीर्यन्तः । अमन्यन्त । सः ।

---

पदप्रकृतिस्वरत्वम् । इदं तृतीयाधेयमग्न्याधेयमुपश्रयतीत्येके । पुनराधेयमित्यन्ये ॥

पञ्चमे तृतीयोनुवाकः.

---

[1]अथ सर्पराज्ञ्यादीनां मन्त्राणां ब्राह्मणम्—भूमिरित्यादि ॥ आशिषा अन्नाद्यं प्राप्तुमिच्छया ॥

[2]सर्पा वा इत्यादि ॥ धिक् जरा प्राप्यतेऽस्माभिरिति सविषादां मतिमकुर्वत सर्पाः । अथ तेषु कसर्णीरो नाम कश्चित्कद्रूपुत्रः स एतं भूमिर्भूम्नेत्यादिकं सर्पराज्ञ्याख्यं मन्त्रमपश्यत् ।

स एतं कसर्णीरः काद्रवेयो मन्त्रम-
पश्यत्ततो वै ते जीर्णास्तनूरपाघ्नत
सर्पराज्ञिया ऋग्भिर्गार्हपत्यमा द-
धाति पुनर्नवमेवैनमजरं कृत्वा धत्ते-

एतम् । कसर्णीरः । काद्रवेयः । मन्त्रम् । अपश्यत् । ततः । वै । ते । जीर्णाः । तनूः । अपेति । अघ्नत । सर्पराज्ञिया इति सर्प–राज्ञियाः । ऋग्भिरित्यृक्–भिः । गार्हपत्यमिति गार्ह-पत्यम् । एति । दधाति । पुनर्नवमिति पुनः–नवम् । एव । एनम् । अजरम् । कृत्वा । एति । धत्ते । अथो

'स्त्रीभ्यो ढक्' इति ढक् । ततस्सर्पा एतेनाग्निमादधतेति सामर्थ्याद्गम्यते । ततश्च जीर्णास्तनूरपहत्याभिनवा अलभन्तेत्यर्थः । सर्पराज्ञिया इत्यादि । गतम् । पृथिवी सर्पराज्ञी । यथोक्तम्—'इयं वै सर्पतो राज्ञी'* इति । तस्या ऋग्भिः भूमिर्भूम्नेत्यादिभिः । 'अपोद्धृत्य घर्मशिर एतस्य सर्पराज्ञी रोप्य गार्हपत्यमेव सर्वाभिराददीत' इत्याचार्याः । राजनशीला राज्ञी । 'कनिन्युवृष' इति कनिन्प्रत्ययः, 'ऋन्नेभ्यः' इति ङीप् । सर्पाणां राज्ञी स्वामिनी सर्पराज्ञी । 'समासस्य' इत्यन्तोदात्तत्वम् । 'उदात्तयणः' इत्येतद्बाधित्वा व्यत्ययेन 'उदात्तस्वरितयोर्यणः' इति विभक्तिस्स्वर्यते ।

*सं. ७-३-१.

थो पूतमेव पृथिवीमन्नाद्यं नोपान-
मत्सैतम् ॥ १३ ॥ मन्त्रमपश्यत्ततो
वै तामन्नाद्यमुपानमद्यत्सर्पराज्ञिया
ऋग्भिर्गार्हपत्यमादधात्यन्नाद्यस्या-
वरुद्ध्या अथो अस्यामेवैनं प्रतिष्ठि-
तमा धत्ते यत्त्वा क्रुद्धः परोवपेत्या-

इति । पूतम् । एव । पृथिवीम् । अन्नाद्यमित्यन्न-अद्यम् । न । उपेति । अनमत् । सा । एतम् । ॥ १३ ॥ मन्त्रम् । अपश्यत् । ततः । वै । ताम् । अन्नाद्यमित्यन्न-अद्यम् । उपेति । अनमत् । यत् । सर्पराज्ञिया इति सर्प-राज्ञियाः । ऋग्भिरित्यृक्-भिः । गार्हपत्यमिति गार्ह-पत्यम् । आदधातीत्या-दधाति । अन्नाद्यस्येत्यन्न-अद्यस्य । अवरुध्या इत्यव-रुध्यै । अथो इति । अस्याम् । एव । एनम् । प्रतिष्ठितमिति प्रति-स्थितम् । एति । धत्ते । यत् । त्वा । क्रुद्धः । परोवपेति परा-उवप । इति । आह । अपेति । ह्नुते । एव ।

---

पुनर्नवमित्यादि । गतम् । अथो अपिच पूतमेवाधत्ते । येनायमृद्धि-

हापंह्नुत एवास्मै तत्पुनस्त्वोद्दीपया-
मसीत्याह समिन्ध एवैनं यत्ते
मन्युपरोप्तस्येत्याह देवताभिरेव
॥ १४ ॥ एनꣳसम्भरति वि वा

अस्मै । तत् । पुनः । त्वा । उदिति । दीपयामसि । इति । आह । समिति । इन्धे । एव । एनम् । यत् । ते । मन्युपरोप्तस्येति मन्यु—परोप्तस्य । इति । आह । देवताभिः । एव ॥ १४ ॥ एनम् । समिति । भरति । [3]वीति । वै । एतस्य । यज्ञः ।

हेतुर्भवति*...........त्यादि हेतुश्च न भवति । पृथिवीमित्यादि । गतम् । 'अन्नाद्यायादधे'† इति मन्त्रपदम् । अथो अपिच अस्यां पृथिव्यां प्रतिष्ठितमाधत्ते । 'उपस्थे ते देवि'† इति मन्त्रपदम् । यत्त्वेति । आत्मीयमुद्वासनात्मकं दुष्कृतमस्मा अग्नयेपह्नुते अपनय[पलप]ति 'सुकल्पमग्ने तत्'‡ इति प्रच्छादयति । तद्दुष्कृतमपि त्वत्प्रसादात् सुकृतमेव भवतीति । पुनस्त्वेत्यादि । गतम् ॥

[3]वि वा एतस्येत्यादि ॥ 'मनो ज्योतिः'§ इत्येषा बृहस्पतिवती ऋक् । 'छन्दसीरः' इतिमतुपो वत्वम् । बृहस्पतिशब्दस्याद्युदा-

*म, घ कोशयोः 'हेतुर्भवति' इत्यत ऊर्ध्वं कतिपयाक्षरलेखपर्याप्तं स्थलमलेख्यं विधाय ततः 'त्यादि हेतुश्च' इत्यादि लिखितम्. ["......हेतुर्भवति 'ज्यान्यां पुत्रमर्त्यायां स्वेष्वारुध्यमानेषु यदावाङ्गेन विधुरतां नीयात्. (आप. श्रौ. ५-२६-३,) इत्यादिहेतुश्च न भवति" इति पाठं सम्भावयामः.

†सं. १-५-३[1]. ‡सं. १-५-३[6]. §सं. १-५-३[7].

एतस्यं यज्ञश्छिद्यते योऽग्निमुंद्वास-
यंते बृहस्पतिंवत्यर्चोपं तिष्ठते ब्रह्म
वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ
सन्दंधाति विच्छिंन्नं यज्ञꣳ सामिमं
दंधात्वित्यांह सन्तंत्यै विश्वें देवा
इह मांदयन्तामित्यांह सन्तत्यैव

छिद्यते । यः । अग्निम् । उद्वासयंत इत्युत्–वासयंते । बृहस्पतिंवत्येति बृहस्पतिं–वत्या । ऋचा । उपेतिं । तिष्ठते । ब्रह्मं । वै । देवानांम् । बृहस्पतिः । ब्रह्मंणा । एव । यज्ञम् । समिति । दधाति । विच्छिंन्नमिति वि–छिन्नम् । यज्ञम् । समितिं । इमम् । दधातु । इतिं । आह । सन्तंत्या इति सं–तत्यै । विश्वें । देवाः । इह । मादयन्ताम् । इतिं । आह । सन्तत्येतिं सं–

---

तत्वम् । विश्वे देवा इति । विच्छिन्नयज्ञं सन्तत्यैव सन्धाय सन्ततमिहेति देवेभ्योनुदिशति ज्ञापयति । सप्त त इति । समिदादयस्सप्तसप्त प्रत्येकं सप्तसङ्ख्याः सप्तधा सर्वा अपि सप्तधा भिन्नाः अग्नेः प्रियास्तनुवः तनुवत् मूर्तिरिव प्रधानभूताः अग्नेस्तास्सर्वाः अवरुन्धे स्वाभिमतसाधनतया लभते । पुनरूर्जेति । पुनरूर्जा नि

यज्ञं देवेभ्योनु दिशति सप्त ते अग्ने
समिधस्सप्त जिह्वाः ॥१५॥ इत्याह
सप्तसप्त वै सप्तधाग्नेः प्रियास्तनुव-
स्ता एवाव रुन्धे पुनरूर्जा सह
रय्येत्यभितः पुरोडाशमाहुती जुहो-
ति यजमानमेवोर्जा च रय्या चोभ-

तत्य । एव । यज्ञम् । देवेभ्यः । अन्विति । दिशति । सप्त । ते । अग्ने । समिध इति सं-इधः । सप्त । जिह्वाः ॥ १५ ॥ इति । आह । सप्तसप्तेति सप्त-सप्त । वै । सप्तधेति सप्त-धा । अग्नेः । प्रियाः । तनुवः । ताः । एव । अवेति । रुन्धे । पुनः । ऊर्जा । सह । रय्या । इति । अभितः । पुरोडाशम् । आहुती इत्या-हुती । जुहोति । यजमानम् । एव । ऊर्जा । च । रय्या ।

---

वर्तस्व '* 'सह रय्या नि वर्तस्व '* इति मन्त्राभ्यामभितः पुरोडाशमाहुती जुहोति पुरस्तादुपरिष्टाच्च । 'अभितःपरितः' इति द्वितीया । यजमानमेवेत्यादि । 'सावेकाचः' इत्येकत्रोदात्तत्वम् । 'उदात्तयणः' इतीतरत्र ॥

---

*सं. १-५-३९-10.

यतः परि गृह्णात्यादित्या वा अस्मा-
ल्लोकादमुं लोकमायन्तेमुष्मिन्लोके
व्यतृष्यन्त इमं लोकं पुनर-
भ्यवेत्याग्निमाधायैतान् होमानजुह-
वुस्त आर्ध्नुवन्ते सुवर्गं लोकमायन्
यः पराचीनं पुनराधेयादग्निमादधीत

च । उभयतः । परीति । गृह्णाति । [4]आदित्याः । वै । अस्मात् । लोकात् । अमुम् । लोकम् । आयन्न् । ते । अमुष्मिन्न् । लोके । वीति । अतृष्यन्न् । ते । इमम् । लोकम् । पुनः । अभ्यवेत्येत्यभि-अवेत्य । अग्निम् । आधायेत्या-धाय । एतान् । होमान् । अजुहवुः । ते । आर्ध्नुवन्न् । ते । सुवर्गमिति सुवः-गम् । लोकम् । आयन्न् । यः । पराचीनम् । पुनराधेयादिति पुनः-आधेयात् ।

[4]आदित्या इत्यादि ॥ भूलोकाद्द्युलोकं गताः ऋद्ध्यर्थं कृतपुनराधानाः आदित्याः । तत्र च ते व्यतृष्यन् भूयोपि ऋद्ध्यभावेन विविधं तृष्यन्तोभवन् । तृषा पिपासायां दैवादिकः । ततस्ते पुनरपि इममेव लोकमभ्यवेत्य अभ्यावृत्य तृतीयमग्निमाधाय एतान् 'लेकः'* इत्यादीन् होमानजुहवुः ऋद्धाः स्वर्गं गताः । य इत्यादि । पराचीनं पुनराधेयात् पुनराधेयानन्तरं तृतीयमित्यर्थः ।

*सं. १-५-३ 11—13

स एतान् होमाञ्जुहुयाद्यामेवादित्या ऋद्धिमार्ध्नुवन्तामेवर्ध्नोति ॥ १६ ॥ उपप्रयन्तो अध्वरं मन्त्रं वोचेमा-

अग्निम् । आदधीतेत्या—दधीत । सः । एतान् । होमान् । जुहुयात् । याम् । एव । आदित्याः । ऋद्धिम् । आर्ध्नुवन् । ताम् । एव । ऋध्नोति ॥ १६ ॥

सैतं देवताभिरेव जिह्वा एतान्पञ्च-विꣳशतिश्च ॥ ४ ॥

[1]उपप्रयन्त इत्युप—प्रयन्तः । अध्वरम् । मन्त्रम् । वोचेम । अग्नये । आरे । अस्मे इति ।

यामित्यादि । अयमृध्नोतिः ऋद्धौ च वर्तते, यथा ऋध्नुवन्तीति । ऋद्धिकर्मिकायां च प्राप्तौ ऋद्धिमार्ध्नुवन्निति । तत्र पोषं पुष्णातीतिवत्प्राप्तिमात्रप्रवृत्तिर्द्वितीयो द्रष्टव्यः ॥

पञ्चमे चतुर्थः ॥

॥ अग्न्युपस्थानकाण्डं अग्न्यार्षम् ॥

[1]आहवनीयमुपतिष्ठते—उपप्रयन्त इति षड्भिः । 'षड्भिरुत्तराभिरुपतिष्ठते'* इत्यादि ब्राह्मणम् । प्रथमा गायत्री ॥ उपप्र-

*सं. १-५-१४.

ग्नये। आरे अस्मे च शृण्वते। अस्य
प्रत्नामनु द्युतꣳ शुक्रं दुदुह्रे अह्रयः।

च। शृण्वते। अस्य। प्रत्नाम्। अन्विति। द्युतम्।
शुक्रम्। दुदुह्रे। अह्रयः। पयः। सहस्रसामिति

---

यन्तः उपेत्य प्रकर्षेण गच्छन्तः अध्वरं यज्ञं अविच्छेदेन गच्छन्तः कुर्वन्तो वयं मन्त्रं वोचेमेत्याशास्यते, उपस्थानमन्त्रस्य वक्तारो भूयास्मेति। वचेराशिषि लिङ् 'लिङ्याशिष्यङ्' 'वच उम्'। अग्नये अग्न्यर्थम्। कीदृशायाग्नये? आरे दूरे च अस्मे अस्माकं शृण्वते श्रुत्वा वचनार्थं कुर्वते सर्वदा तं मन्त्रं वोचेम उच्यास्मेत्यविच्छेदेन आशास्यते॥

[2]द्वितीया—अस्य प्रत्नामिति गायत्री॥ अस्याग्नेः प्रत्नां पुरातनीं अनुद्युतम्। अनुद्युदिति दीप्तिनाम। सम्पदादिलक्षणः क्विप्। गोस्थानीयां दुदुह्रे दुहन्ति। छान्दसे लिटि 'इरयो रे' इति रे आदेशः। अह्रयः अह्रियः अलज्जमाना ऋत्विजः। जिह्रतेः कर्तरि क्विप्। व्यत्ययेन ह्रस्वत्वम्। औणादिको वा डिप्रत्ययः। अह्नोतेर्वा क्रिन्प्रत्ययः। ज्ञातार उच्यन्ते। किं दुदुह्रे? शुक्रं सारं निर्मलं वा पयः उदकम्। दीप्तिर्विशेष्यते—सहस्रसां बहुनो धनस्य सनित्रीं सम्भक्त्रीं ऋषिं अर्षणिं दृष्टिम्। सनोतेः 'जनसनखन' इति विट्, 'विड्वनोः' इत्यात्वम्। तस्माद्वयमप्यनेनोपस्थानेन तां दुह्म इति॥

पर्यस्सहस्रसामृषिम् । अग्निर्मूर्धा
दिवः ककुत्पतिः पृथिव्या अयम् ।
अपाꣳ रेताꣳसि जिन्वति । अयमिह

सहस्र—साम् । ऋषिम् । [3]अग्निः । मूर्धा । दिवः । ककुत् । पतिः । पृथिव्याः । अयम् । अपाम् । रेताꣳसि । जिन्वति । [4]अयम् । इह । प्रथमः ।

---

[3]तृतीया—अग्निरिति गायत्री ॥ अयमग्निर्मूर्धा प्रधानभूतः दिवः द्युलोकस्य ककुत् उच्छ्रितः आत्मेत्यर्थः अयमात्मना दिवो मूर्धत्वेन वर्तत इति । अयमेव पृथिव्याः पतिः पाता; अग्निर्हि पृथिव्यात्मना वर्तते । सोयमपां रेतांसि कार्यभूतानि स्थावरजङ्गमाख्यानि माध्यमिकाग्निरूपेण जिन्वति वृष्ट्या तर्पयति । 'ऊडिदम्' इति षष्ठ्या उदात्तत्वम् । 'उदात्तयणः' इति पृथिव्याः ॥

[4]चतुर्थी—अयमिहेति जगती ॥ अयमग्निः प्रथमः प्रधानभूतः धायि धार्यतेस्माभिः धातृभिः धारणाय यतमानैः होता आह्वाता देवानां यजिष्ठः यष्टृतमः । मनुष्यहोतॄनपेक्ष्य प्रकर्षः । यष्टृशब्दात् 'तुश्छन्दसि' इतीष्ठनि 'तुरिष्ठेमे यस्सु' इति टिलोपः । अध्वरेषु यज्ञेषु ईड्यः स्तुत्यः । 'ईडवन्द' इत्याद्युदात्तत्वम् । अयमित्युक्तम् ; कीदृशोयमित्याह—यं चित्रं चायनीयं विभुवं व्याप्तिमन्तम् । तन्वादित्वादुवङ् । भृगवः विरुरुचुः विविधं रोचयामासुः । ण्यन्ताल्लिटि 'बहुलमन्यत्रापि' इति णिलुक् । कीदृशाः अप्नवानः अप्न इति कर्मनाम तद्वन्तः । 'छन्दसीवनिपौ' इति

प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभुवं विशेविशे । उभा वामिन्द्राग्नी आहुव-

धायि । धातृभिरिति धातृ-भिः । होता । यजिष्ठः । अध्वरेषु । ईड्यः । यम् । अप्नवानः । भृगवः । विरुरुचुरिति वि-रुरुचुः । वनेषु । चित्रम् । विभुवमिति वि-भुवम् । विशेविश इति विशे-विशे । [5]उभा । वाम् । इन्द्राग्नी इतीन्द्र-अग्नी ।

मत्वर्थीयो वनिप् । यद्वा—अप्नवानो भृगुविशेषः । यथाहुः—'भार्गवच्यावनाप्नवानौर्वजामदग्न्य' इति । व्यत्ययेनैकवचनम् । विरुरुचुः वनेषु आश्रमेषु । किमर्थं? विशेविशे मनुष्यायमनुष्याय सर्वो मनुष्योऽभ्युदयेन युज्येतेति । यद्वा—विभक्तिव्यत्ययः; विशिविशि व्याप्तवन्तमिति । 'सावेकाचः' इति विश इति चतुर्थ्या उदात्तत्वम् । अयमेवं महानुभावो अस्मान्मृडयत्विति शेषः ॥

[5]उभा वामिति पञ्चमी—प्रथमे प्रश्ने *पठिता व्याख्याता च ॥ हे इन्द्राग्नी उभौ युवां, द्वितीयाद्विवचनम् । आहुवे आह्वयामि । किमर्थं? आहुवध्यै आभिमुख्येन होतुं उपस्थानेनाराधयितुमित्यर्थः । इह जुहोतिस्स्तुतिकर्मा । किञ्च—राधसः रायो धनं हविर्लक्षणं

* सं. १-१-१४-[1].

ध्यै ॥ १७ ॥ उभा राधसस्सह
मादयध्यै । उभा दातारविषाꣳ
रयीणामुभा वाजस्य सातये हुवे
वाम् । अयं ते योनिर् ऋत्वियो
यतो जातो अरोचथाः । तं जानन्नग्न
आहुवध्यै ॥ १७ ॥ उभा । राधसः । सह ।
मादयध्यै । उभा । दातारौ । इषाम् । रयीणाम् ।
उभा । वाजस्य । सातये । हुवे । वाम् । [6]अयम् ।
ते । योनिः । ऋत्वियः । यतः । जातः । अरो-
चथाः । तम् । जानन् । अग्ने । एति । रोह ।

---

स्तुतिर्वा । तृतीयार्थे षष्ठी । हेतौ वा पञ्चमी । उभौ युवां सहैव नैकैकशः राधस मादयध्यै मादयितुं सहैव तर्पयितुमाह्वयामि । अनयोरेवाह्वाने हेतुमाह—उभेति । युवामेव ह्युभौ इषामन्नानां रयीणां धनानां क्षेत्रपुत्रपश्वादीनां दातारौ । तस्माद्वाजस्यान्नस्य सातये लाभाय प्राप्त्यै तादृशावुभौ वां युवां हुवे आह्वयामि स्तौमि ॥

[6]अथ षष्ठी—अयं त इत्यनुष्टुप् ॥ हे अग्ने अयं ते तव योनिः कारणं गार्हपत्य उच्यते नात्रारणिः । ऋत्वियः ऋतुः प्राप्तो-स्येति 'छन्दसि घस्' इति घस् । ऋतावृताविज्यत इत्यर्थः । यतस्त्वं जातोऽरोचथाः दीप्यसे । छान्दसो लङ् । तं योनिं जानन् त्वं ममायं योनिरित्यवगच्छन् आरोह । आश्रय मा कदाचिदपि मुचः ।

आ रोहाथा नो वर्धया रयिम् ।
अग्न आयूꣳषि पवस आ सुवोर्ज-
मिषं च नः । आरे बाधस्व दुच्छुनाम् ।
अग्ने पवस्व स्वपा अस्मे वर्चस्सु-
वीर्यम् । दधत्पोषꣳ रयिम् ॥ १८ ॥

अथ । नः । वर्धय । रयिम् । [7]अग्ने । आयूꣳषि । पवसे । एति । सुव । ऊर्जम् । इषम् । च । नः । आरे । बाधस्व । दुच्छुनाम् । [8]अग्ने । पवस्व । स्वपा इति सु-अपाः । अस्मे इति । वर्चः ।

---

अथ नोस्माकं रयिं धनं वर्धय । सांहितिकं दीर्घत्वं छान्दसम् । 'निपातस्य च' इत्यथशब्दस्य ॥

[7]अथ सप्तम्याद्याष्षडपि गायत्र्यचः व्याख्याताश्च 'त्वमग्ने रुद्रः'* इत्यत्र । सप्तमी—हे अग्ने आयूंषि जीवनानि अन्नानि वा जीवितकाल इति अस्मदीयान्यायूंषि जीवच्छरीरवृत्तिसाधनानि पवसे पवस्व शोधय निर्दोषाणि देहि यथा वर्धन्ते यथा च न क्षीयन्ते य[त]था ऊर्जं रसं क्षीरादिकं रसं इषमन्नं च नः अस्मभ्यं आसुव अनुजानीहि आभिमुख्येनोत्पादय । आरे दूरेण बाधस्व अपगमय दुच्छुनां अलक्ष्मीम् ॥

[8]अष्टमी—हे अग्ने स्वपाः शोभनकर्मा त्वम् । अस्मे अस्मभ्यं

*सं. १-३-१४[23—28].

मयि । अग्ने पावक रोचिषा
मन्द्रया देव जिह्वया । आ
देवान् वक्षि यक्षि च । स नः
पावक दीदिवोग्ने देवा॑ इहा वह ।

सुवीर्यमिति सु—वीर्यम् । दधत् । पोषम् । रयिम् ॥ १८ ॥ मयि । [9]अग्ने । पावक । रोचिषा । मन्द्रया । देव । जिह्वया । एति । देवान् । वक्षि । यक्षि । च । [10]सः । नः । पावक । दीदिवः । अग्ने । देवान् । इह । एति । वह । उपेति ।

---

सुवीर्यं शोभनवीर्ययुक्तं पुत्रादिकं वर्चो बलमन्नं वा पवस्व शोधय। मयि पोषं पुष्टिं अभित[भिमत]वृद्धिं रयिं धनं च दधत् स्थापयन् ॥

[9]नवमी—हे अग्ने पावक शोधक रोचिषा रोचमानया मन्द्रया मदयित्र्या हर्षणशीलया जिह्वया हे देव क्रीडादियुक्त देवानिहावह च यज च ॥

[10]दशमी—हे अग्ने पावक दीदिवः अस्मदर्थं दीप्यमान त्वं इहास्मिन् कर्मणि देवानावह । नः अस्माकं च हविः उपयज्ञं यज्ञस्य समीपं प्रापय । यद्वा—नः अस्माकमिमं यज्ञं च हविश्चाग्निहोत्रलक्षणं उपवह देवेभ्यः स त्वमुपहर देवान्प्रापयेत्यर्थः ॥

उप॑ य॒ज्ञꣳ ह॒विश्च॑ नः । अ॒ग्निश्शु॒-
चि॑व्रततम॒श्शु॒चि॒र्वि॑प्र॒श्शु॒चि॑ः क॒विः ।
शुची॑ रोचत॒ आहु॑तः । उद॑ग्ने शुच॑-
य॒स्तव॑ शु॒क्रा भ्राज॑न्त ईरते । तव॒
ज्योती॑ꣳष्य॒र्चयः॑ । आ॒यु॒र्दा अ॑ग्ने-

य॒ज्ञम् । ह॒विः । च॒ । न॒ः । [11]अ॒ग्निः । शु॒चि॑व्रततम॒ इति॒ शु॒चि॑व्रत-त॒मः । शु॒चि॑ः । विप्रः॑ । शु॒चि॑ः । क॒विः । शु॒चि॑ः । रो॒च॒ते॒ । आहु॑त॒ इत्या-हु॒त॒ः । [12]उदिति॑ । अ॒ग्ने॒ । शु॒च॑यः । तव॑ । शु॒क्राः । भ्राज॑न्तः । ई॒र॒ते॒ । तव॑ । ज्योती॑ꣳषि । अ॒र्चय॑ः । [13]आ॒यु॒र्दा इत्या॑युः-दाः । अ॒ग्ने॒ । अ॒सि॒ । आयु॑ः ।

[11]एकादशी—अयमग्निश्शुचिव्रततमः स्वयमेव तावत् शुद्धसत्कर्मतमः विप्रत्वान्मेधावित्वाच्च शुचिः । कवित्वात्क्रान्तदर्शनत्वाच्च शुचिः ; वशीकृतवाङ्मयत्वाद्वा । एवं सर्वात्मना आहुतः शास्त्रोक्तवर्त्मनाऽस्माभिराहुतः प्रतीतहविर्लक्षणोयं रोचते तेजिष्ठो भवति ॥

[12]द्वादशी—हे अग्ने तव शुचयः तेजांसि शुक्राः निर्मलाः भ्राजन्तः दीप्यमानाः उदीरते उद्गच्छन्ति तत्रैव स्वभूतानि सर्वाण्यादित्यादीनि ज्योतींषि । अर्चयः अर्चयितारः यागादिभिराराधयितारः ज्योतींषि भवन्ति ज्योतीरूपास्सम्पद्यन्ते । एवम्महानुभावस्त्वमस्मदभिमतं क्षिप्रं प्रयच्छेति भावः ॥

[13]तत्राहवनीयमेवोपतिष्ठते—आयुर्दा इति ॥ हे अग्ने त्वमा-

स्यायुर्मे ॥११॥ देहि वर्चोदा अग्नेसि वर्चो मे देहि तनूपा अग्नेसि तनुवं मे पाह्यग्ने यन्मे तनुवा ऊनं तन्म आ पृण चित्रावसो स्वस्ति ते पारमशीय ॥ ११ ॥ देहि । वर्चोदा इति वर्चः—दाः । अग्ने । असि । वर्चः । मे । देहि । तनूपा इति तनू—पाः । अग्ने । असि । तनुवम् । मे । पाहि । अग्ने । यत् । मे । तनुवाः । ऊनम् । तत् । मे । एति । पृण । [14]चित्रावसो इति चित्र—वसो ।

युर्दाः आयुषोन्नस्य जीवितस्य वा दातासि तस्मादायुर्मे देहि । एवमुत्तरत्रापि द्रष्टव्यम् । वर्चो बलं दीप्तिर्वा । तनूनां शरीराणां पाता तनूपाः । सर्वत्र 'आतो मनिन्' इति विच् । हे अग्ने ऊनं विकलीभूतं छिन्नं भिन्नं वा यन्मे तनुवाः तन्वा ऊनं तन्मे त्वां भजमानस्य आपृण आपूरय । यद्वा—यन्मे तन्वाः तनुस्थानीयानां प्रजानां पशूनां ऊनं तदापूरय । पृण प्रीणने अत्रापूरणे वर्तते । 'तन्वादीनां छन्दसि बहुलम्' इत्युवङादेशः ॥

[14]रात्रिमुपतिष्ठते—चित्रावसो इति ॥ चित्राः नानारूपाः चायनीया वा । वसवो वसून्यावसनानि वस्तारो वा यस्यां सा चित्रावसुः रात्रिः । सांहितिकं दीर्घत्वम् । त्वयि वसन्ति सर्वेपि सुखेन अतोहमपि ते तव पारं समाप्तिं व्युष्टिं स्वस्ति अविनाशेन सुखेन अशीय प्राप्नुयां त्वत्प्रसादेन । अश्नोतेर्लिङि शपो लुक् ॥

मशीयेन्धानास्त्वा शतꣳ हिमा
द्युमन्तस्समिधीमहि वयस्वन्तो
वयस्कृतं यशस्वन्तो यशस्कृतꣳ

स्वस्ति । ते । पारम् । अशीय । [15]इन्धानाः । त्वा । शतम् । हिमाः । द्युमन्त इति द्यु-मन्तः । सम् । इति । इधीमहि । वयस्वन्तः । वयस्कृतमिति वयः-कृतम् । यशस्वन्तः । यशस्कृतमिति यशः-

[15]आहवनीये समिधमादधाति—इन्धाना इति सप्तपदया शक्वर्या ॥ हे अग्ने इन्धानाः ज्वलन्तः । 'विभाषा वेण्विन्धानयोः' इत्याद्युदात्तत्वम् । शतं हिमाः संवत्सरान् हेमन्तान्वा । हिमा इति ऋतोस्स्त्रीलिङ्गत्वं वर्षा इति [इति वत् ?] । वर्षशतेन शतं हेमन्ता भवन्तीति वर्षमेवाशांसितम् । शिशिरे शीतेन हेमन्ते प्रजानां पीडनात् तेन लक्ष्यते संवत्सरः । यदा हिमशब्देन हेमन्तऋतुर्लक्ष्यते स च मत्वर्थियाच्प्रत्ययान्तः स स्त्रियां वर्तते । द्युमन्तः दीप्तिमन्तः । 'ह्रस्वनुड्भ्याम्' इति मतुप उदात्तत्वम् । समिधीमहि सम्यक् दीपयामः त्वामिन्धाना वयमपि द्युमन्तस्समिधीमहि । पूर्ववच्छपो लुक् । ततश्च त्वत्प्रसादाद्वयस्वन्तोऽन्नवन्तो वयमायुष्मन्तो वा; वयोनामायुषोंशः । वयस्कृतं वयस्कर्तारं सम्पूर्णवयसो दातारं त्वाम् । 'अतः कृकमि', इति सत्वम् । यशस्वन्तः सत्कीर्तिमन्तो वयं त्वत्समाराधनेन त्वां यशस्कृतम् । गतम् । सुवीरासः कल्याणपुत्रादिका वयम् । 'आज्जसेरसुक्' । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । अदाभ्यं अनुपहिंसितं बाधितुमशक्यं त्वां सपत्नदम्भनं

सुवीरासो अदाभ्यम् । अग्ने सपत्न-
दम्भनं वर्षिष्ठे अधि नाके । सं
त्वमग्ने सूर्यस्य वर्चसागथास्समृषी-
णाꣳ स्तुतेन सं प्रियेण धाम्ना ।

कृतम् । सुवीरास इति सु-वीरासः । अदाभ्यम् । अग्ने । सपत्नदम्भनमिति सपत्न-दम्भनम् । वर्षिष्ठे । अधीति । नाके । [16]समिति । त्वम् । अग्ने । सूर्यस्य । वर्चसा । अगथाः । समिति । ऋषीणाम् । स्तुतेन । समिति । प्रियेण । धाम्ना । त्वम् । अग्ने । सूर्यवर्चा इति सूर्य-वर्चाः । असि । समिति ।

---

सपत्नानां अनिष्टानां विनाशयितारं स्वयं केन चिदप्यदाभ्यम् । दभिः प्रकृत्यन्तरमस्तीत्याहुः । अतो ण्यत् । वर्षिष्ठे वृद्धतमे नाके सुखैकरूपे अस्मिन् स्थाने स्वर्गसदृशे अधि उपरि त्वामिन्धाना वयमीदृशा भूयास्मेति । प्रियस्थिरादिना वृद्धशब्दस्य वर्षादेशः ॥

[16]पुनरुपतिष्ठते—सं त्वमग्न इति । इयं जगती वृद्धपदा ॥ हे अग्ने त्वं सूर्यस्य वर्चसा दीप्त्या समगथाः सङ्गच्छसे । छान्दसो लुङ्, 'समो गमृच्छि' इत्यात्मनेपदम्, 'मन्त्रे घस' इति च्लेर्लुक्, 'वागमः' इति सिचः किन्त्वम् । ऋषीणां मन्त्रद्रष्टॄणां मन्त्राणां वा स्तुतेन स्तुत्या च समगथाः इत्येव । प्रियेण च धाम्ना स्थानेनाहवनीयेन समगथाः सम्पृक्तोसि । यस्मादेवं तस्मात् हे अग्ने त्वं सूर्यवर्चाः सूर्येण तुल्यतेजा असि । यद्वा—सूर्यस्य वर्चस्त्वमसि ।

त्वम॑ग्ने सूर्य॑वर्चा असि सं मामायु॑षा
वर्च॑सा प्रजया॑ सृज ॥ २० ॥
सं प॑श्यामि प्रजा अ॒हमिडप्रजसो

माम् । आयु॑षा । वर्च॑सा । प्रजयेति॑ प्र—जया॑ ।
सृज ॥ २० ॥

आहुवध्यै पोष॑ रयिं मे वर्च॑सा
सप्त द॑श च ॥ ५ ॥

[1]समिति॑ । पश्यामि । प्रजा इति॑ प्र—जाः ।

स त्वं मां त्वाम्प्रपन्नमायुषा शतायुष्ट्वेन वर्चसा प्रजया च सत्पुत्रपौत्रादिपरम्परया संसृज सङ्गमय ॥

इति पञ्चमे अग्न्युपस्थानन्नाम पञ्चमोनुवाकः ॥

---

[1]गृहांश्च पशूंश्चोपतिष्ठते—सं पश्यामीति । तत्र प्रथमा गायत्री । शेषाणि यजूंषि 'मयि वो रायश्श्रयन्ताम्' इत्यन्तानि ॥ सं पश्यामि सम्यक् वः पश्यामि अहं प्रजाः गृहनिवासिनः पशून्; 'यावन्त एव ग्राम्याः पशवस्तानेवाव रुन्धे'* इति च ब्राह्मणम् । प्रजाशब्देन पशव उच्यन्ते । इडप्रजसः इडा गौः मनोः पुत्री वा । तस्याः प्रजा इडप्रजसः । सा वा यासां तथा ते सं पश्यामीति । यथोक्तम्—'इडा वै मानवी †' 'साब्रवीदिडा मनुम्'† इत्यादि । 'ङ्यापोस्संज्ञाछन्दसोः' इति ह्रस्वत्वम्, 'नित्यमसिच्प्रजामेधयोः' इत्यत्र 'नित्यग्रहणमन्यत्रापि यथा स्यात्' इत्यु-

*सं. १-५-८[1] †ब्रा. १-१-४.

मानवीः । सर्वा भवन्तु नो गृहे ।
अम्भस्स्थाम्भो वो भक्षीय महस्स्थ
महो वो भक्षीय सहस्स्थ सहो वो

अहम् । इडप्रजस इतीड-प्रजसः । मानवीः । सर्वाः । भवन्तु । नः । गृहे । [2]अम्भः । स्थ । अम्भः । वः । भक्षीय । महः । स्थ । महः । वः । भक्षीय । सहः । स्थ । सहः । वः । भक्षीय । ऊर्जः । स्थ ।

---

क्त्वादसिच् समासान्तः, दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । यद्वा—इडायाः प्रजायन्त इति 'गतिकारकयोरिति पूर्वपद-प्रकृतिस्वरत्वं च' इत्यसुन्प्रत्ययान्ताद्धातोः अन्तलोपश्छान्दसः । डिद्वा प्रत्ययः कर्तव्यः । मानवीर्मनोरपत्यभूताः । जातिविशेषस्याविवक्षितत्वात् 'मनोर्जातौ' इति न प्रवर्तते । सर्वास्ताः सर्वा अपि गवादयः प्रजाः नः अस्माकं गृहे एतस्मिन् स्थाने भवन्तु पशुपुत्रमित्रकलत्रादिसर्वसम्पदः सदा प्रभूतास्सन्तु । 'अस्मदो द्वयोश्च' इति द्वितीये वाक्ये एकस्मिन्बहुवचनम् । यद्वा—पुत्रपौत्रादिसहितानामस्माकामिति वेदितव्यम् ॥

[2]अम्भस्स्थेत्यादि ॥ अम्भः अदनीयमुच्यते । 'अदेर्नुम्भश्च' इत्यसुन् । अन्नमुच्यते । वाजसनेयिनां तु—'अन्धस्स्थ'* इति वा [इत्येव] पाठः । हे पशवः अन्धः स्थ भवथ । तद्धेतुत्वात्ताच्छब्द्यम् । अन्नस्य हेतवस्स्थ । तस्माद्वा युष्माकमम्भः क्षीराज्यादिरूपमदनीयं भक्षीय भजेयम् । भजेराशिषि लिङ् ।

---

*वाज.सं. ३-२०.

भक्षीयोर्जस्स्थोर्जं वो भक्षीय रेवती
रमध्वमस्मिन्लोकेस्मिन्गोष्ठेस्मिन्क्ष-
येस्मिन् योनाविहैव स्तेतो मापं

ऊर्जम् । वः । भक्षीय । रेवतीः । रमध्वम् ।
अस्मिन् । लोके । अस्मिन् । गोष्ठ इति गो–स्थे ।
अस्मिन् । क्षये । अस्मिन् । योनौ । इह । एव ।
स्त । इतः । मा । अपेति । गात । बह्वीः । मे ।

---

महः पूजा ब्रह्म वा महः तद्धेतवः स्थ यागादिद्वारेण । वः युष्माकं अदनीयं क्षीरादि भक्षीय । सहो बलं तद्धेतवः स्थ युष्माकं बलकरं घृतादि भक्षीय । ऊर्जः रसः क्षीरादि तद्धेतवः स्थ युष्माकमूर्जं बलकररसं भक्षीय । मह्यादिभ्योऽसुन् । ऊर्जयतेः क्विप् सम्पदादिलक्षणः । हे रेवतीः रेवत्यः क्षीरादिना धनेन तद्वत्यः । 'रयेर्मतौ बहुलम्' इति सम्प्रसारणम्, 'वाच्छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । रमध्वं प्रीयमाणा वर्तध्वम् । 'पशवो वै रेवतीः पशूनेवात्मन्रमयते'* इति ब्राह्मणम् । अस्मिन्लोके पृथिव्याम् । 'ऊडिदम्' इति विभक्तिरुदात्ता । अस्मिन् गोष्ठे गवां स्थाने व्रजे । गावस्तिष्ठन्त्यस्मिन्निति 'सुपि स्थः' इति कः, 'अम्बाम्ब' इति मूर्धन्यः । अस्मिन् क्षये अस्मदीये । 'क्षयो निवासे' इत्याद्युदात्तत्वम् । अस्मिन् योनौ रमध्वमिति सर्वत्र । इहैवास्मदीये लोकादौ स्त भूयास्त । इतोस्मत्सकाशान्मापगात अपरक्ता मापगात न निर्गच्छत । अपि तु बह्वीः बह्व्यः पुत्रपौत्रादिमत्यो मम भूयास्त ॥

---

*सं. १-५-८.६

गात बह्वीर्मे भूयास्त ॥ २१ ॥ सꣳहितासि विश्वरूपीरा मोर्जा विशा गौपत्येना रायस्पोषेण सहस्रपोषं वः पुष्यासं मयि वो रायश्श्रयन्ताम् ।

भूयास्त ॥ २१ ॥ [3]सꣳहितेति सं-हिता । असि । विश्वरूपीरिति विश्व-रूपीः । एति । मा । ऊर्जा । विशा । एति । गौपत्येन । एति । रायः । पोषेण । सहस्रपोषमिति सहस्र-पोषम् । वः । पुष्यासम् ।

---

[3]अग्निहोत्रीवत्समभिमृशति—संहितेति ॥ संहिता संयुक्ता मात्रा असि भव । मात्रा वियुक्ता मा भूः । विश्वरूपीः नानारूपवती मत्वर्थीय ईकारः । सा त्वं मामूर्जा क्षीरादिना रसेन आविश । क्षीरादेर्दातृत्वेन मत्सम्बन्धिनी भव । 'सावेकाचः' इत्यूर्जो विभक्तिरुदात्ता । गौपत्येन च मामाविशेत्येव । गवां पतिः स्वामी तद्भावो गौपत्यम् । पत्यन्तलक्षणो यत् । यथाहं गोपतिर्भवानि तथा मयि वर्तस्व । रायो धनस्य पोषेण पुष्ट्या च मामाविश मदीयानि धनानि पोषयन्ती स्वजन इव मम भव । 'ऊडिदम्' इति रायो विभक्तिरुदात्ता । 'षष्ठ्याः पतिपुत्र' इति सत्वम् । किं बहुना, वः युष्माकं सहस्रपोषं बहुप्रकारमहं पुष्यासं पौष्कल्येनोद्भावयिषीय बह्वीनां युष्माकं सम्बन्धी भूयासम् । गोपोषं पुष्णातीतिवत् सामान्यवचनोन्यतरो द्रष्टव्यः । वः युष्माकं रायो धनानि क्षीरादीनि मयि श्रयन्तां अविच्छेदेन सन्ततं वर्धन्ताम् ॥

उप॑ त्वाग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या
व॒यम्। नमो॒ भर॑न्त॒ एम॑सि। रा-

मयि॑। व॒ः। राय॑ः। श्र॒यन्ता॒म्। [4]उपेति॑। त्वा॒।
अ॒ग्ने॒। दि॒वेदि॑व॒ इति॑ दि॒वे-दि॒वे॒। दोषा॑वस्त॒रिति॒
दोषा॑-व॒स्त॒ः। धि॒या। व॒यम्। नम॑ः। भर॑न्तः।
एति॑। इ॒मसि॒। [5]राज॑न्तम्। अ॒ध्व॒राणा॑म्।

[4]गार्हपत्यमुपतिष्ठते—उप त्वाग्न इति तिसृभिर्गायत्रीभिः। अग्ने त्वं न इति चतसृभिर्द्विपदाभिर्विराड्गायत्रीभिश्च। 'जागतगायत्राभ्यां विराड्गायत्री'* इति। 'गायत्रीभिरुप तिष्ठते'† इत्यादि ब्राह्मणम्। उप त्वेति प्रथमा॥ हे अग्ने वयं दिवेदिवे यत् दिनेदिने धिया प्रज्ञया कर्मणा वा त्वामुपेमसि उपेम उपगच्छामः 'इदन्तो मसि'। किं कुर्वन्त इत्याह—दोषावस्तः रात्रावह्नि च सायं प्रातश्च नमो भरन्तः नमस्कारमाभरन्तः आहरन्तः नमस्कुर्वन्तः त्वामुपेम इति। त्वं चास्माकमुपकुर्विति शेषः। 'हृग्रहोर्भः'। भरतिर्वा भौवादिकः भृञ् भरणे इति। 'सुपां सुलुक्' इति दिवसवाचिनो दिवूशब्दात्परस्य सप्तम्येकवचनस्य शे आदेशः। प्रगृह्यत्वं तु स्यात्। व्यत्ययेन वा चतुर्थी। 'ऊडिदम्' इति विभक्तेरुदात्तत्वम्। 'अनुदात्तं च' इति द्वितीयं निहन्यते। दोषावस्तरिति कार्तकौजपादिषु द्रष्टव्यः। 'सावेकाचः' इति धियो विभक्तिरुदात्ता॥

[5]राजन्तमिति द्वितीया—राजन्तं दीप्यमानं अध्वराणां यज्ञानां

*'तृतीयं द्विपाज्जागतगायत्राभ्याम्' पिं. (३-१६) इत्येव दृश्यते। †सं. १-५-८[10].

जन्तमध्वराणां गोपामृतस्य दीदिं-
विम्। वर्धमान५ स्वे दमे। स नः
पितेव सूनवेऽग्ने सूपायनो भव। सच-

गोपामिति गो-पाम्। ऋतस्य। दीदिविम्।
वर्धमानम्। स्वे। दमे। [6]सः। नः। पिता।
इव। सूनवे। अग्ने। सूपायन इति सु-उपायनः।

गोपां गोप्तारम्। गोपायतेः क्विप् अतोलोपवलिलोपाप्टक्तलोपाश्च। ऋतस्य यज्ञस्य सत्यस्य च गोप्तारम्। यद्वा—अध्वराणां राजन्तं गोपां रक्षितारं स्वयं सर्वदा दीदिविं दीप्यमानम्। अथवा—अध्वराणां यज्ञानां राजानम्। ऋतस्य ऋतेन यज्ञेन सत्येन वा दीदिविं प्रकाशयितारं गोपां गवां पातारम्। अस्मिन्पक्षे अवग्रह उपपद्यते। 'दीर्घश्चाभ्यासस्य' इति क्विन्प्रत्ययः। वर्धमानं सामिद्भिर्हविर्भिश्च स्वे दमे नः गृहे अग्निहोत्रवेश्मनि। तं त्वामुपेमसीति॥

[6]स न इति॥ हे अग्ने स त्वं नः अस्मभ्यं पितेव सूनवे तात इव पुत्राय सूपायनः सूपचरणः सुखेनोपचरणीयः परिचरणीयो वा भव। 'छन्दसि गत्यर्थेभ्यः' इति युच्। शोभनोपायनो वा। किञ्च—नः अस्मान् स्वस्तये अविनाशाय सचस्व सङ्गच्छस्व मा कदाचिदपि मुचः। 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम्। स्वस्तय इति विभक्त्यन्तप्रतिरूपोऽव्ययः* ॥

*क-पो निपातः.

स्वा नस्स्वस्तये । अग्ने ॥ २२ ॥
त्वं नो अन्तमः । उत त्राता शिवो
भव वरूथ्यः । तं त्वा शोचिष्ठ दीदि-
वः । सुम्नाय नूनमीमहे सखिभ्यः।

भव । सचस्व । नः । स्वस्तये । [7]अग्ने ॥ २२ ॥
त्वम् । नः । अन्तमः । उत । त्राता । शिवः ।
भव । वरूथ्यः । [8]तम् । त्वा । शोचिष्ठ । दीदिवः।
सुम्नाय । नूनम् । ईमहे । सखिभ्य इति सखि-

---

[7]अग्ने त्वं न इति ॥ हे अग्ने त्वं नः अस्माकमन्तमः अन्तिकतमः सन्निकृष्टतमः । 'तमे तादेश्च' इति तादिलोपः । उत अपिच त्राता रक्षकः भयेष्विति गम्यते । शिवः सुखकरः सर्वदा भव अस्माकं वरूथ्यः गृहे भवः नित्यसन्निहितः । दिगादित्वाद्यत् । वरूथाय गृहाय वा हितः वरूथ्यः । उगवादिर्द्रष्टव्यः ॥

[8]तं त्वेति ॥ शोचिष्ठ दीपयितृतम 'तुश्छन्दसि' इतीष्ठन् । 'तुरिष्ठेमेयस्सु' इति टिलोपः । यद्वा—शोचस्वितम । 'विन्मतोर्लुक्' । हे दीदिवः दीप्यमान जिगीषन्वा । दिवेर्लिटः क्वसुरादेशः, 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम् । तं त्वां तादृशमन्तिकतमत्वादिगुणविशिष्टं त्वां सुम्नाय धनाय सुखाय वा ईमहे याचामहे । नूनमिति पादपूरणे निश्चये वा । यद्वा—नूनं नूतनं अभूतपूर्वं तं त्वां सखिभ्यः समानख्यानेभ्यः सुहृदयसुहृद्भ्यः । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणस्सम्प्रदानत्वात्सुम्नायेति चतुर्थी ॥

वसुरग्निर्वसुश्रवाः । अच्छा नक्षि द्युमत्तमो रयिं दाः । ऊर्जा वः पश्याम्यूर्जा मा पश्यत रायस्पोषेण वः पश्यामि रायस्पोषेण मा

भ्यः । [9]वसुः । अग्निः । वसुश्रवा इति वसु-श्रवाः । अच्छ । नक्षि । द्युमत्तम इति द्युमत्-तमः । रयिम् । दाः । [10]ऊर्जा । वः । पश्यामि । ऊर्जा । मा । पश्यत । रायः । पोषेण ।

---

[9]वसुरिति ॥ वसुः वसुमान् । मत्वर्थीयो लुप्यते । अग्निः अङ्गनादिगुणयुक्तः वसुश्रवाः वासयतीति वसुः तादृशं श्रवणं यस्य तादृशः । वसुभिर्वा श्रूयत इति वसुश्रवाः । 'गतिकारकयोरपि इति पूर्वपदप्रकृतिस्वरत्वश्च' इत्यसुन् । स त्वमस्मानच्छ आभिमुख्येन नक्षि प्राप्नुहि । 'निपातस्य च' इति संहितायां दीर्घत्वम् । नशतिर्गतिकर्मा, 'बहुळं छन्दसि' इति शपोलुक् । अस्मान् प्राप्य चास्मभ्यं द्युमत्तमः दीप्तिमत्तमः त्वं रयिं धनं दाः देहि । दधातेर्लिटि पूर्ववच्छपोलुक् । 'ह्रस्वनुड्भ्यां मतुप्' इति द्योर्मतुप उदात्तत्वम् ॥

[10]पुनश्च गृहांश्च पशूंश्चोपतिष्ठते—ऊर्जा व इति । एतानि यजूंषि ॥ ऊर्जा क्षीरादिना रसेन समग्रास्सदा वः पश्यामि । यूयमपि ऊर्जा रसेन स्नेहेन बलेन वा सहितं मां पश्यत । किञ्च—रायो धनस्य पुत्रपश्वादिलक्षणस्य घासादिलक्षणस्य वा पोषेण वृद्ध्या वः पश्या-

पश्यतेडास्स्थ मधुकृतस्स्योना मा विशतेरा मदः । सहस्रपोषं वः पुष्यासम् ॥ २३ ॥ मयि वो रायश्श्रयन्ताम् । तत्सवितुर्वरेण्यं भर्गो

वः । पश्यामि । रायः । पोषेण । मा । पश्यत । [11]इडाः । स्थ । मधुकृत इति मधु–कृतः । स्योनाः । मा । एति । विशत । इराः । मदः । सहस्रपोषमिति सहस्र–पोषम् । वः । पुष्यासम् ॥ २३ ॥ मयि । वः । रायः । श्रयन्ताम् । [12]तत् । सवितुः ।

मि । यूयमपि रायो धनस्य पशुहिरण्यलक्षणस्य पोषेण मां पश्यत । पूर्ववत्सत्वस्वरौ ॥

[11]इडास्स्थेत्यादि अनुष्टुप् ॥ इडाः अन्नं स्थ तद्धेतुत्वात्ताच्छब्द्यम् । मधुकृतः मधुसदृशस्य कृतः कर्त्र्यः उत्पादयित्र्यः । उक्तश्च— 'एतद्वै देवानां मधु यद्घृतम्' इति 'एतद्वै मधु दैव्यं यदाज्यम्' इति च । ता यूयं स्योनाः सुखभूताः मामाविशत । इराः क्षीराद्यन्नाद्यात्मिकाः मदः मदयित्र्यः देवानां मनुष्याणां च हर्षयित्र्यः । मदेर्ण्यन्तात्क्विप् । 'बहुळं संज्ञाछन्दसोः' इति णिलुक् ॥ सहस्रपोषमिति* व्याख्यातम् ॥

[12]आहवनीयमुपतिष्ठते—तत्सवितुरिति गायत्र्या ॥ तत्तस्य 'सु-

*सं. १-५-६.३

देवस्य धीमहि । धियो यो नः प्रचो-
दयात् । सोमानꣳ स्वरणं कृणुहि

वरेण्यम् । भर्गः । देवस्य । धीमहि । धियः । यः । नः । प्रचोदयादिति प्र—चोदयात् । [13]सोमानम् ।

---

पां सुलुक्' इति षष्ठ्या लुक् । तस्य सवितुः देवस्य दाना[देवना]दिगुणयुक्तस्य स्वभूतं तत्प्रसादलभ्यं वा अत एव वरेण्यं वरणीयं सर्वैः प्रार्थनीयं भर्गः तेजः अन्नं धनं वा वयं धीमहि धारयेम तस्यैव प्रसादात्तस्याधारभूता भवेम । धीङ् आधारे दैवादिकः । 'छन्दसि लुङ्लङ्लिटः' इति लङि 'बहुलं छन्दस्यमाङ्' इत्यडभावः । दधातेर्वा लिङ् । सर्वत्र 'बहुलं छन्दसि' इति शपो लुक् । कस्येत्याह—यो देवस्सवितास्माकं धियः कर्माणि प्रचोदयात् प्रचोदयेत् प्रवर्तयेत् । यद्वा—धियः धर्मादिगोचराः बुद्धीः प्रचोदयात् प्रेरयेत् । लेट्याडागमः । तस्य सवितुरिति । यद्वा—सवितुर्देवस्य तदन्नादि धीमहि । किमित्याह—य इति । लिङ्गव्यत्ययः । यदस्माकं धियः प्रचोदयात् प्रेरयति । यद्वा—यो देवस्सविता विश्वस्य प्रसवितास्माकं धर्मादिगोचराः धियः प्रेरयति तस्य स्वभूतं वरेण्यं सर्वैर्भजनीयं भर्गः पापानां तापनं तेजो मण्डलात्मकं धीमहि मनसा धारयामः । ध्यायतेरेव वा छान्दसं सम्प्रसारणम् । एवं बोधप्रकाशाभ्यां समस्तस्य प्रपञ्चस्य उपकुर्वाणं श्रेयोर्थिभिर्भजनीयं सूर्यात्मना स्थितं पारमेश्वरं तेज उपास्यत्वेन उपदिश्यते ॥

[13]पुनरप्याहवनीयमुपतिष्ठते—सोमानमिति गायत्र्या ॥ सोमानं

ब्रह्मणस्पते । कक्षीवन्तं य औशि-
जम् । कदा चन स्तरीरसि नेन्द्र

स्वरणम् । कृणुहि । ब्रह्मणः । पते । कक्षीवन्त-
मिति कक्षी—वन्तम् । यः । औशिजम् । [14]कदा ।
चन । स्तरीः । असि । न । इन्द्र । सश्चसि । दा-

सोतारं सोमानामभिषोतारं मां कृणुहि । 'अन्येभ्योपि दृश्यते' इति मनिन् । उञ्छादित्वादन्तोदात्तत्वम् । औणादिको वा मनिन्प्रत्ययः । अन्य आहुः—सोमानामिति वक्तव्ये छान्दसं ह्रस्वत्वम् । सोमानां सप्तविधानां सम्बन्धिनं मां कुर्विति । तत्राप्यन्तोदात्तत्वं मृग्यम्, सोमशब्दस्याद्युदात्तत्वात् स्वरणं शब्दितं सोमत्वेन प्रकाशितम् । स्वृ शब्दोपतापयोः कर्मणि ल्युट् । ईदृशं च मां कुरु । हे ब्रह्मणः परिबृढस्यान्नस्य वा पते स्वामिन् । 'षष्ठ्याः पतिपुत्र' इति सत्वम् । 'सुबामन्त्रिते' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायो निहन्यते । कक्षीवन्तं ताद्धर्म्यात्ताच्छब्द्यम् । कक्षीवान्नाम ऋषिः तमिव य औशिजम् । स्वार्थिकोण् वचनव्यत्ययः । यद्वा—कक्षीवन्तं हस्त्यादिकक्ष्यावन्तं ईश्वरं मा कुरु । 'आसन्दीवदष्ठीवत्' इत्यादिना निपात्यते । य औशिज ईश्वर औशिजो भवति तम्मा कुरु । उशिक् कान्तः सर्वलोकप्रियः स औशिजः । स्वार्थिकोण् ॥

[14]रात्रिमुपतिष्ठते—कदा चनेति पथ्याबृहत्या ॥ 'तृतीयश्चेद्द्वादशाक्षरः पथ्या'* इति । व्याख्याता चेयमादित्यग्रहे† इन्द्रा-

*'पथ्या पूर्वश्चेत्तृतीयः' (पिं—३—२७) इत्येव पिङ्गलसूत्रं दृश्यते. † सं. १-४-२२[1]

सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते । परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि । धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गु-

शुषे । उपोपेत्युप—उप । इत् । नु । मघवन्निति मघ—वन् । भूयः । इत् । नु । ते । दानम् । देवस्य । पृच्यते । [15]परीति । त्वा । अग्ने । पुरम् । वयम् । विप्रम् । सहस्य । धीमहि । धृषद्वर्णमिति धृषत्—वर्णम् । दिवेदिव इति दिवे—दिवे । भेत्ता-

---

त्मना रात्रिस्स्तूयते । कदाचिदपि स्तरीश्छादयिता अभिभविता न भवसि । अपि तु दाशुषे हवींषि दत्तवते यजमानाय सश्चसि समागच्छसि, न कदाचिदपि तत्सकाशं मुञ्चसि उपकर्तुम् । तथाहि—हे मघवन् तव देवस्य देवनशीलस्य दानं भूयोभूयोपि उपपृच्यत एव, अविच्छेदेन निर्वर्त्यत एव । यद्वा—भूयोभूयोपि उपपृच्यतां उत्पाद्यतामिति ॥

[15]गार्हपत्यमुपतिष्ठते—परि त्वेत्यनुष्टुभा ॥ हे अग्ने सहस्य सहो बलं तत्र भवः । 'दिगादिभ्यो यत्' । पुरं अभिमतानां पूरयितारं विप्रं मेधाविनं धृषद्वर्णं वर्णमात्रेणैव, शत्रूणां अभिभवितारं भेत्तारम् । कस्य? भङ्गुरावतः परभञ्जनशीलैर्व्यापारैः तद्वतो रक्षःप्रभृतेः । छान्दसं संहितायां दीर्घत्वम् । ईदृशं त्वां दिनेदिने परिधीमहि सर्वतो धारयेम । दधातेर्लिङि शपो लुक् ॥

रावतः। अग्ने गृहपते सुगृहपतिरहं
त्वया गृहपतिना भूयासꣳ सुगृहप-
तिर्मया त्वं गृहपतिना भूयाꣳ शतꣳ
हिमास्तामाशिषमा शासे तन्तवे

रम्। भङ्गुरावत इति भङ्गुर-वतः। [16]अग्ने। गृहपत
इति गृह-पते। सुगृहपतिरिति सु-गृहपतिः।
अहम्। त्वया। गृहपतिनेति गृह-पतिना। भूया-
सम्। सुगृहपतिरिति सु-गृहपतिः। मया। त्वम्।
गृहपतिनेति गृह-पतिना। भूयाः। शतम्।
हिमाः। ताम्। आशिषमित्या-शिषम्। एति।

[16]गार्हपत्यमेवोपतिष्ठते—अग्ने गृहपत इति यजुर्भिः॥ हे अग्ने गृहपते गृहकर्मणां पालयितः त्वया गृहपतिना स[गृ]हकर्मणां पालनं कुर्वता सुगृहपतिः शोभनेन तद्वान् भूयासम्। त्वमपि गृहपतिना मया सुगृहपतिर्भूयाः। कियन्तं कालमित्याह—शतं हिमाः शतं वर्षाणि हि मर्त्यानाम्। 'शतं त्वा हेमन्तानिन्धिषीय'* इति ब्राह्मणम्। तावन्तं कालमिदमित्थं भवतु। किञ्च—तामाशिषं, अनागताभिप्रेतार्थप्रार्थनमाशीः, तामाशासे प्रार्थये। यद्वा—आशासनीया आयुरादिसर्वसम्पदाशीः, तामाशासे। 'आशासः क्वौ' इतीत्वम्। कीदृशीं? ज्योतिष्मतीं दीप्तिमतीं ब्रह्मवर्चसप्रधानाम्। कस्मै? तन्तवे अजातापत्यविषयमिदं;

*सं. १-५-८[19].

ज्योतिष्मतीं तामाशिषमा शासेमु-
ष्मै ज्योतिष्मतीम् ॥ २४ ॥
अयंज्ञो वा एष योऽसामोपप्रयन्तो
अध्वरमित्याह स्तोममेवास्मै युन-

शासे । तन्तवे । ज्योतिष्मतीम् । ताम् । आशि-
षमित्या–शिषम् । एति । शासे । अमुष्मै ।
ज्योतिष्मतीम् ॥ २४ ॥

भूयास्तु स्वस्तयेऽग्ने पुष्यासं धृषद्वर्णमेकान्न
त्रिꣳशच्च ॥ ६ ॥

[1]अयज्ञः । वै । एषः । यः । असामा । उपप्रयन्त
इत्युप–प्रयन्तः । अध्वरम् । इति । आह । स्तो-

अमुष्मा इति वक्ष्यमाणस्य सन्निहितापत्यविषयत्वात् । अमुष्मा इति सन्निहितानामपत्यानां साधारणो निर्देशः । तस्मै सहस्रकिरणाय भास्कराय गोविन्दाय च तां ज्योतिष्मतीमाशिषमाशासे । 'पुत्रस्य नाम गृह्णाति'* इत्यादि ब्राह्मणम् ॥

इति पञ्चमे षष्ठोनुवाकः.

---

[1]अग्न्युपस्थानमन्त्राणां ब्राह्मणमग्न्यार्षेयम्—अयज्ञ इत्यादि ॥ 'उपप्रयन्त'† इत्यादि द्वादशर्चं स्तोमस्थानीयमस्य यज्ञस्य करोतीति । 'मन्त्रं वोचेम'† इत्येतच्च स्तोमाभिप्रायमित्यभिप्रायः ॥

*सं. १-५-८[20]. †सं. १-५-५[1].

त्युपेत्याह प्रजा वै पशव उपेमं
लोकं प्रजामेव पशूनिमं लोकमुपैत्य-
स्य प्रत्नामनु द्युतमित्याह सुवर्गो
वै लोकः प्रत्नस्सुवर्गमेव लोकं

मम् । एव । अस्मै । युनक्ति । [2]उपेति । इति ।
आह । प्रजेति प्र—जा । वै । पशवः । उपेति ।
इमम् । लोकम् । प्रजामिति प्र—जाम् । एव ।
पशून् । इमम् । लोकम् । उपेति । एति ।
[3]अस्य । प्रत्नाम् । अन्विति । द्युतम् । इति ।
आह । सुवर्ग इति सुवः—गः । वै । लोकः । प्रत्नः ।
सुवर्गमिति सुवः—गम् । एव । लोकम् । समारो-

---

[2]उपेत्याहेत्यादि ॥ प्रजाश्च पशवश्चेमं लोकमुपेत्य वर्तन्ते । तस्मादे-तल्लोकात्मकाध्वरोपायनकथनं प्रजानां पशूनामस्य च लोकस्योपनय-नाय भवतीति ॥

[3]अस्य प्रत्नामिति ॥ प्रत्नतया स्वर्गस्थानीयं दीप्तिदोहनं स्वर्ग-समारोहणाय भवतीति ॥

[4]अग्निरिति ॥ अग्नेर्मूर्धत्वाभिधानं यजमानस्य प्राधान्यार्थमिति। अथो अपि च देवलोकादागत्य मनुष्यलोके प्रतिष्ठितो भवति ॥

समारोहत्यग्निर्मूर्धा दिवः ककुदित्या-
ह मूर्धानम् ॥२५॥ एवैनꣳ समा-
नानां करोत्यथो देवलोकादेव मनु-
ष्यलोके प्रति तिष्ठत्ययमिह प्रथ-
मो धायि धातृभिरित्याह मुख्यमे-
वैनं करोत्युभा वामिन्द्राग्नी आहु-
वध्या इत्याहौजो बलमेवाव रुन्धे-

इतीति सं–आरोहति । [4]अग्निः । मूर्धा । दिवः । ककुत् । इति । आह । मूर्धानम् ॥ २५ ॥ एव । एनम् । समानानाम् । करोति । अथो इति । देव-लोकादिति देव–लोकात् । एव । मनुष्यलोक इति मनुष्य–लोके । प्रतीति । तिष्ठति । [5]अयम् । इह । प्रथमः । धायि । धातृभिरिति धातृ–भिः । इति । आह । मुख्यम् । एव । एनम् । करोति । [6]उभा । वाम् । इन्द्राग्नी इतीन्द्र–अग्नी । आहुवध्यै । इति । आह । ओजः । बलम् । एव । अवेति ।

[5]पार्थिवस्याग्नेः पश्चादभिधानात् मुखमिति प्रथमत्ववचनादग्नेः मुख*मिव मुख*म् ॥

[6]ओजोबलात्मकत्वादिन्द्राग्न्योः ॥

*क—मुख्य.

यं ते योनिर् ऋत्विय इत्याह पशवो
वै रयिः पशूनेवावं रुन्धे षड्भिरुप
तिष्ठते षड्वै ॥ २६ ॥ ऋतवं ऋतुष्वेव
प्रति तिष्ठति षड्भिरुत्तराभिरुप तिष्ठ-
ते द्वादश सं पद्यन्ते द्वादश मासा-
स्संवत्सरस्संवत्सर एव प्रति तिष्ठ-

रुन्धे । अयम् । ते । योनिः । ऋत्वियः । इति । आह । [7]पशवः । वै । रयिः । पशून् । एव । अवेति । रुन्धे । [8]षड्भिरिति षट्-भिः । उपेति । तिष्ठते । षट् । वै ॥ २६ ॥ ऋतवः । ऋतुषु । एव । प्रतीति । तिष्ठति । षड्भिरिति षट्-भिः । उत्तराभिरित्युत्-तराभिः । उपेति । तिष्ठते । द्वादश । समिति । पद्यन्ते । द्वादश । मासाः । संवत्सर इति सं-वत्सरः । संवत्सर इति सं-

[7]पशवो वै रयिरिति ॥ 'वर्धया रयिम्' इति दर्शनात्* ॥

[8]षड्भिरिति ॥ आहवनीयमेव सर्वत्र । विशिष्टसङ्ख्यान्वयो विशिष्टफलावाप्तिहेतुरिति भावः । षड्भिरुत्तराभिरिति । ननु द्वादशाभिरुपतिष्ठत इत्येव वाच्यं स्यात् । मैवम् , षट्त्वनिबन्धनफलावाप्तये षड्भिष्षड्भिरुपस्थीयते । द्वादशेति तन्निबन्धनफलावाप्तिश्च भवति ॥

*सं. १-५-५⁸.

ति यथा वै पुरुषोऽश्वो गौर्जीर्यत्येव-
मग्निराहितो जीर्यति संवत्सरस्य
परस्तादाग्निपावमानीभिरुप तिष्ठते
पुनर्नवमेवैनमजरं करोत्यथो पुना-

त्सरे । एव । प्रतीति । तिष्ठति । [9]यथा । वै । पुरुषः । अश्वः । गौः । जीर्यति । एवम् । अग्निः । आहित इत्या—हितः । जीर्यति । संवत्सरस्येति सं—वत्सरस्य । परस्तात् । आग्निपावमानीभिरित्याग्नि—पावमानीभिः । उपेति । तिष्ठते । [10]पुनर्नवमिति पुनः—नवम् । एव । एनम् । अजरम् ।

[9]यथेत्यादि ॥ यथा पुरुषादयः आसादिताहारा जीर्यन्ते । एवमग्निराहितो जीर्यति । संवत्सरस्येत्यादि । 'अग्न आयूंषि पवसे '* इत्येताभिः षड्भिः संवत्सरेसंवत्सरे उपतिष्ठते । 'देवताद्वन्द्वे च ' इत्युभयपदवृद्धिः, उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् ॥

[10]पुनर्नवमित्यादि ॥ आयुरादिलाभात् । अथो अपिच पुनात्येवाग्निं जरया नाभिभूयते, पवमानस्यायं महिमेति । उपतिष्ठते योग एवास्यैष उपतिष्ठत इति । यत् एषोऽग्निः योगस्संश्लेषस्सम्पद्यते । यत्रायुरादीनि स्वयमेव सम्पद्यन्त इति उपतिष्ठत इति

*सं. १-५-५.

त्येवोप तिष्ठते योग एवास्यैष उप
तिष्ठते ॥ २७ ॥ दम एवास्यैष उप
तिष्ठते याञ्जैवास्यैषोप तिष्ठते यथा
पापीयाञ्छ्रेयस आहृत्य नमस्यति

करोति । अथो इति । पुनाति । एव । उपेति ।
तिष्ठते । योगः । एव । अस्य । एषः । उपेति ।
तिष्ठते ॥ २७ ॥ दमः । एव । अस्य । एषः ।
उपेति । तिष्ठते । याञ्जा । एव । अस्य । एषा ।
उपेति । तिष्ठते । यथा । पापीयान् । श्रेयसे ।
आहृत्येत्या–हृत्य । नमस्यति । तादृक् । एव ।

---

यत् इदमग्नेरुपस्थानं इदं दम एवास्यैष क्रियते । दमो निबन्ध-[न्ध]स्तुतिकरपदैर्विधेयीकरणम् । यथास्मै अभीष्टमकृत्वा स्थातुमपि न शक्नोति तथैनं दमयति 'अग्निश्शुचिव्रततमश्शुचिर्विप्रश्शुचिः कविः'* इत्यादि । उपतिष्ठत इति । उपस्थानव्याजेन स्वाभिमतानग्निं याचते 'आयूंषि पवस्व, ऊर्जमिषं चासुव, दुच्छुनां दूरे बाधस्व' इति । उपतिष्ठत इति । परस्पराश्रयः प्रकर्षः । यथा स्वल्पैश्वर्यो जनः प्रभूतैश्वर्याय फलादिकमुपहृत्य नमस्यति तादृगिदमुपस्थानम्; आराध्यैश्वर्यव्यापनार्थत्वात् । ततस्सुप्रसन्नः स्वामी फलेनाभिमतेन पुरुषं आराधयितारं योजयतीति । 'नमोवरिवश्चित्रङः क्यच्' ॥

---

*सं. १-५-५[11].

तादृगेव तदायुर्दा अंग्नेस्यायुर्मे दे-
हीत्याहायुर्दा ह्येष वर्चोदा अंग्नेसि
वर्चो मे देहीत्याह वर्चोदा ह्येष
तंनूपा अंग्नेसि तनुवं मे पाहीत्याह
॥ २८ ॥ तनूपा ह्येषोग्ने यन्मे तनुवा
ऊनं तन्म आ पृणेत्याह यन्मे प्र-
जायै पशूनामूनं तन्म आ पूरयेति

तत् । [11]आयुर्दा इत्यायुः—दाः । अग्ने । असि । आयुः । मे । देहि । इति । आह । आयुर्दा इत्यायुः—दाः । हि । एषः । वर्चोदा इति वर्चः—दाः । अग्ने । असि । वर्चः । मे । देहि । इति । आह । वर्चोदा इति वर्चः—दाः । हि । एषः । तनूपा इति तनू—पाः । अग्ने । असि । तनुवम् । मे । पाहि । इति । आह ॥ २८ ॥ तनूपा इति तनू—पाः । हि । एषः । अग्ने । यत् । मे । तनुवाः । ऊनम् । तत् । मे । एति । पृण । इति । आह । [12]यत् । मे । प्रजाया इति प्र—जायै । पशूनाम् । ऊनम् ।

[11]आयुर्दा इत्यादि ॥ गतम्* ॥

[12]यन्मे प्रजाया इत्यादि ॥ तनुवत्प्रधानत्वात् प्रजाश्च पशव-

*सं. १-५-५[13].

वावैतदाह चित्रांवसो स्वस्ति तें
पारमंशीयेत्याह रात्रिर्वै चित्रावसु-
रव्युंष्टयै वा एतस्यै पुरा ब्रांह्मणा
अंभैषुर्व्युंष्टिमेवाव रुन्धइन्धांनास्त्वा
शतम् ॥ २१ ॥ हिमा इत्यांह

तनूः । मे । एति । पूरय । इति । वाव । एतत् ।
आह । चित्रांवसो इति चित्र–वसो । स्वस्ति ।
ते । पारम् । अशीय । इति । आह । [13]रात्रिः ।
वै । चित्रावसुरिति चित्र–वसुः । अव्युंष्टया इत्य-
वि–उष्टयै । वै । एतस्यै । पुरा । ब्राह्मणाः ।
अभैषुः । व्युंष्टिमिति वि–उष्टिम् । एव । अवेति ।
रुन्धे । इन्धांनाः । त्वा । शतम् ॥ २१ ॥ हिमाः ।

---

श्च तनुशब्देनोच्यन्त इति दर्शयति । आ पूरयेति । पृणाति-रापूरणकर्मेत्याचष्टे ॥

[13]रात्रिर्वा इति ॥ चित्रा नानारूपा वसवो वस्तारो यस्यामिति चित्रा अप्येकरूपा वसन्त्यस्यां इत्य[इति वा]र्थः । अव्युष्टयै वा॰ इत्यादि । रात्रेरवसानं व्युष्टिः एतस्या रात्रेरव्युष्टयै अभैषुः । यद्वा—अव्युष्टयै व्याप्तिरहिताया रात्रेरभैषुः अव्युष्टयाशङ्कया अभैषुरिति यावत् । छान्दसोन्तोदात्तत्वाभावः । तस्मात स्वस्ति ते पारमशीयेति प्रार्थनया व्युष्टिमवरुन्धे । 'तादौ

शतायुः पुरुषश्शतेन्द्रिय आयुष्ये-
वेन्द्रिये प्रति तिष्ठत्येषा वै सूर्मी
कर्णकावत्येतया ह स्म वै देवा
असुराणाꣳ शततर्हाꣳ स्तृꣳहन्ति

इति । आह । [14]शतायुरिति शत—आयुः । पुरुषः । शतेन्द्रिय इति शत—इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठति । एषा । वै । सूर्मी । कर्णकावतीति कर्णक—वती । एतया । ह । स्म । वै । देवाः । असुराणाम् । शततर्हानिति शत—तर्हान् । तृꣳहन्ति । यत् । एतया । समिधमिति

च' इति गतेः प्रकृतिस्वरत्वम्, 'उदात्तस्वरितयोर्यणः' इत्युकारः स्वर्यते ॥

[14]शतायुरिति ॥ शतवर्षश्शतवीर्यः पुरुषः । हिमशब्देन संवत्सराभिधानं व्याख्यातम्* । आयुषि इन्द्रिये च प्रतिष्ठितो भवति अनया समिधमाधाय । एषा वा इत्यादि । ज्वलन्ती लोहमयी स्थूणा सूर्मी । गौरादित्वान्ङीष् । कर्णकावती अन्तस्सुषिरवती अन्तर्बहिश्च ज्वलन्तीत्यर्थः । सांहितिकं दीर्घत्वम् । तत्सदृशा ऋगित्यर्थः । एतयेत्यादि । असुराणां मध्ये शततर्हान् अनेकप्रहारेण शतस्य हन्तॄन् तृंहन्ति घ्नन्ति स्म एतयर्चा । तृह हिंसायाम्, रौधादिकः, 'लट् स्मे' इति लट् । तस्मादेतय-

*सं. १-५-५[15].

यदेतयां समिधमादधाति वज्रमेवैत-
च्छतघ्नीं यजमानो भ्रातृव्याय प्र हं-
रति स्तृत्या अछम्बट्कारꣳ सं त्वमंग्ने
सूर्यंस्य वर्चसागथा इत्याहैतत्त्वम-
सीदमहं भूयासमिति वावैतदाह

सं-इधम्। आदधातीत्यां-दधाति। वज्रम्। एव। एतत्। शतघ्नीमिति शत-घ्नीम्। यजमानः। भ्रातृव्याय। प्रेति। हरति। स्तृत्यै। अछम्बट्कारमित्यछम्बट्-कारम्। समिति। त्वम्। अग्ने। सूर्यस्य। वर्चसा। अगथाः। इति। आह। [15]एतत्। त्वम्। असि। इदम्। अहम्। भूयासम्। इति। वाव। एतत्। आह। [16]त्वम्। अग्ने। सूर्यवर्चा

---

र्चा समिधमादधानो वज्रं शतघ्नचाख्यं इन्द्रायुधसदृशीं शतघ्नीं पूर्वोक्तां सूर्मिमेव भ्रातृव्याय प्रहिणोति। तच्च स्तृत्यै विनाशाय भ्रातृव्याणां भवति। अछम्बट्कारं अनार्तत्वाय चात्मनः॥

[15]एतदित्यादि॥ एतादृशास्त्वमसि एतादृशोहं भूयासमिति एतन्मन्त्रप्रतिपाद्यमित्यर्थः। इदं चास्त्विति लोपविषयत्वात् 'चादिलोपे विभाषा' इत्यसीत्याख्यातं न निहन्यते॥

[16]त्वमग्न इत्यादि॥ यथा त्वं सूर्यतुल्यतेजाः एवं मामपि

त्वमग्ने सूर्यवर्चा असीत्याहाशिष-
मेवैतामा शास्ते ॥ ३० ॥

सं पश्यामि प्रजा अहमित्याह या-
वन्त एव ग्राम्याः पशवस्तानेवाव

इति सूर्य–वर्चाः । असि । इति । आह । आशि-
षमित्या–शिषम् । एव । एताम् । एति ।
शास्ते ॥ ३० ॥

मूर्धानꣳ षड्वा एष उप तिष्ठते पाहीत्याह
शतमहꣳ षोडश च ॥ ७ ॥

[1]समिति । पश्यामि । प्रजा इति प्र–जाः ।
अहम् । इति । आह । यावन्तः । एव । ग्राम्याः ।

---

तादृशेन तेजसा आयुषा प्रजया च संसृजेत्येवमाशिषमनेनाशास्ते ॥

इति पञ्चमे सप्तमोनुवाकः.

---

[1]अथ ग्रहपश्वाद्युपस्थानमन्त्राणां ब्राह्मणम्—सं पश्यामीत्यादि ॥ ग्रहाणां पशूनां चोपस्थानमन्त्रः । ग्राम्याः पशवो गोश्वाजाविपुरुषगर्दभोष्ट्रास्सप्त ॥

रुन्धेम्भस्स्थाम्भो वो भक्षीयेत्याहा-
म्भो ह्येता महस्स्थ महो वो भक्षी-
येत्याह महो ह्येतास्सहस्स्थ सहो
वो भक्षीयेत्याह सहो ह्येता ऊर्ज-
स्स्थोर्जं वो भक्षीयेति ॥ ३१ ॥
आहोर्जो ह्येता रेवतीरमध्वमित्याह

पशवः । तान् । एव । अवेति । रुन्धे । अम्भः । स्थ । अम्भः । वः । भक्षीय । इति । आह । [2]अम्भः । हि । एताः । महः । स्थ । महः । वः । भक्षीय । इति । आह । [3]महः । हि । एताः । सहः । स्थ । सहः । वः । भक्षीय । इति । आह । [4]सहः । हि । एताः । ऊर्जः । स्थ । ऊर्जम् । वः । भक्षीय । इति ॥३१॥ आह । [5]ऊर्जः । हि । एताः । रेवतीः । रमध्वम् । इति । आह । [6]पशवः । वै ।

---

[2]अम्भो ह्येता इति ॥ अदनीयं क्षीराद्यन्नमम्भः । 'अदेर्नुम्भश्च' इत्यसुन् । तत्साधनत्वात्ताच्छब्द्यं गवाम् । एवं सर्वत्र द्रष्टव्यम् ॥

[3]महः पूजा ब्रह्म वा, यागादिद्वारेण तत्साधनत्वात् ॥

[4]सहो बलं, घृतादीनां बलहेतुत्वात् ॥

[5]ऊर्जः क्षीरादिरसः ॥

[6]पशवो वै रेवतीः रेवत्यः, क्षीरादिसाधनेन तद्वत्त्वात् । 'रयेर्म-

पशवो वै रेवतीः पशूनेवात्मन्रमयत
इहैव स्तेतो माप गातेत्याह ध्रुवा
एवैना अनपगाः कुरुत इष्टकचिद्वा
अन्योऽग्निः पशुचिदन्यस्सꣳहितासि

रेवतीः । पशून् । एव । आत्मन् । रमयते । इह । एव । स्त । इतः । मा । अपेति । गात । इति । आह । [7]ध्रुवाः । एव । एनाः । अनपगा इत्यनप–गाः । कुरुते । [8]इष्टकचिदितीष्टक–चित् । वै । अन्यः । अग्निः । पशुचिदिति पशु–चित् । अन्यः । सꣳहितेति सं–हिता । असि । विश्वरूपीरिति विश्व–रूपीः । इति । वत्सम् । अभीति । मृशति ।

---

तौ बहुलम्' इति सम्प्रसारणम्, 'वाच्छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । रेवतीशब्दः पशूनां संज्ञात्वेनाजहत्स्वलिङ्ग एव पशुषु वर्तते ॥

[7]ध्रुवा नित्याः अनपगाः अनपाक्ताः ॥

[8]इष्टकचिदित्यादि ॥ इष्टकाभिश्चीयत एकोऽग्निः । 'इष्टकेषीकामालानाम्' इति ह्रस्वत्वम्* । पशुभिरेकोग्निश्चीयते । तत्र

---

*'इष्टकेषीकामालानां चिततूलभारिषु' इति सूत्रे अदन्तचितशब्दस्यैव पाठात्, कथमत्र तेन ह्रस्वत्वमिति चिन्त्यमिदम्.

विश्वरूपीरिति वत्समभि मृशत्युपै-
वैनं धत्ते पशुचितमेनं कुरुते प्र
॥ ३२ ॥ वा एषोऽस्माल्लोकाच्च्य-
वते य आहवनीयमुपतिष्ठते गार्हप-
त्यमुपं तिष्ठतेऽस्मिन्नेव लोके प्रति
तिष्ठत्यथो गार्हपत्यायैव नि ह्नुते

उपेति । एव । एनम् । धत्ते । पशुचितमिति पशु–चितम् । एनम् । कुरुते । [9]प्रेति ॥३२॥ वै । एषः । अस्मात् । लोकात् । च्यवते । यः । आहवनीयमित्या–हवनीयम् । उपतिष्ठत इत्युप–तिष्ठते । गार्हपत्यमिति गार्ह–पत्यम् । उपेति । तिष्ठते । अस्मिन्न् । एव । लोके । प्रतीति । तिष्ठति । अथो इति । गार्हपत्यायेति गार्ह–पत्याय । एव । नीति ।

'संहिता '* इति मन्त्रेणाग्निहोत्रीवत्सस्याभिमर्शनेन उपधानस्थानीयेन एवं वत्समुपधत्ते । पशुचितमेनमग्निं कुर्वाणो भवति ॥

[9]प्र वा एष इत्यादि ॥ 'सुवर्गो लोक आहवनीयः '† इत्यन्यत्र दर्शनात् । गार्हपत्यमिति । 'गृहपतिना संयुक्ते ञ्यः ' । अथो अपि च उपस्थानेन गार्हपत्याय निह्नुते प्रह्वीभवति । यद्वा—आहवनीयं छादयति । त्वमेवोपस्थेय इति ॥

*सं. १-५-६[8]. †ब्रा. १-६-३.

गायत्रीभिरुपं तिष्ठते तेजो वै गाय-
त्री तेजं एवात्मन्धंत्तेथो यदेतं तृच-
मन्वाह सन्तंत्यै गार्हपत्यं वा
अनुं द्विपादों वीराः प्र जायन्ते य
एवं विद्वान्द्विपदाभिर्गार्हपत्यमुप-

ह्नुते । [10]गायत्रीभिः । उपेतिं । तिष्ठते । तेजः । वै । गायत्री । तेजः । एव । आत्मन्न् । धत्ते । अथो इतिं । यत् । एतम् । तृचम् । अन्वाहेत्यंनु—आहं । सन्तंत्या इति सं—तत्यै । [11]गार्हपत्यमिति गार्ह—पत्यम् । वै । अन्विति । द्विपाद इतिं द्वि—पादः । वीराः । प्रेतिं । जायन्ते । यः । एवम् । विद्वान् ।

[10]गायत्रीभिरिति ॥ 'उप त्वाग्ने दिवेदिवे '* इत्येताभिस्तिसृभिः । तेजो वा इति । पूर्ववत्ताच्छब्द्यम् । अथो अपि च एतस्य तृचस्यानुवचनं सन्तत्यै भवति । 'पितेव सूनवे '* इति च मन्त्रपदम् । 'तादौ च ' इति गतेः प्रकृतिस्वरत्वम् । तिस्र ऋचस्समाहृताः । 'ऋक्पूरब्धूः ' इति समासान्तः, 'ऋचि त्रेरुत्तरपदादिलोपश्च ' इति सम्प्रसारणम् ॥

[11]गार्हपत्यं वा इत्यादि ॥ लक्षणेऽनोः कर्मप्रवचनीयत्वम् । द्विपाद इति । 'सङ्ख्या सुपूर्वस्य ' इति लोपस्समासान्तः । द्विपदाभिरिति । 'अग्ने त्वं नः '† इति तिसृभिर्द्विपदाभिर्विराड्गायत्री-

*सं. १-५-६[4—6]. †सं. १-५-६[7—9].

तिष्ठते ॥ ३३ ॥ आस्य वीरो जायत
ऊर्जा वः पश्याम्यूर्जा मा पश्यते-
त्याहाशिषमेवैतामा शास्ते तत्स-
वितुर्वरेण्यमित्याह प्रसूत्यै सोमान-

द्विपदाभिरिति द्वि-पदाभिः । गार्हपत्यमिति गार्ह-
पत्यम् । उपतिष्ठत इत्युप-तिष्ठते ॥३३॥ एति ।
अस्य । वीरः । जायते । [12]ऊर्जा । वः । पश्यामि ।
ऊर्जा । मा । पश्यत । इति । आह । आशिष-
मित्या-शिषम् । एव । एताम् । एति । शास्ते ।
[13]तत् । सवितुः । वरेण्यम् । इति । आह । प्रसू-
त्या इति प्र-सूत्यै । [14]सोमानम् । स्वरणम् ।

---

भिरिति । पूर्ववत्समासान्तः, 'टाबृचि' इति टापि, 'पादः पत्' इति पद्भावः, 'द्वित्रिभ्यां पाद्दन्' इत्युभयत्राप्युत्तरपदान्तोदात्तत्वम् ॥

[12]ऊर्जा व इत्यादि ॥ अयमपि ग्रहपशूपस्थानमन्त्रः । पुष्यासं श्रूयन्तामित्येतामाशिषमाशास्ते ॥

[13]तत्सवितुरिति आहवनीयोपस्थानम् ॥ प्रसूत्यै अनुज्ञानाय भवति । पूर्ववद्गतिस्वरः ॥

[14]सोमानमित्याहवनीयोपस्थानमेव ॥ सोमपीथमेव सोमपानमेव

ऽँ स्वरणमित्याह सोमपीथमेवाव रुन्धे. कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवाव रुन्धे कदा चन स्तरीरसीत्याह न स्तरीꣳ रात्रिं वसति ॥ ३४ ॥ य एवं विद्वानग्निमुपतिष्ठते परि त्वाग्ने पुरं वयामि-

इति । आह । सोमपीथमिति सोम–पीथम् । एव । अवेति । रुन्धे । कृणुहि । ब्रह्मणः । पते । इति । आह । [15]ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । एव । अवेति । रुन्धे । [16]कदा । चन । स्तरीः । असि । इति । आह । न । स्तरीम् । रात्रिम् । वसति ॥३४॥ यः । एवम् । विद्वान् । अग्निम् । उपतिष्ठत इत्युप–तिष्ठते । [17]परीति । त्वा । अग्ने ।

---

अनेनावरुन्धे । पिबतेरौणादिकस्थक्प्रत्ययः ॥

[15]ब्रह्मवर्चसमिति ॥ 'ब्रह्महस्तिभ्यां वर्चसः' इत्यच् ॥

[16]कदा चनेति रात्र्युपस्थानम् ॥ य एवमस्य मन्त्रस्यार्थं विद्वानृचात्मिकां रात्रिमुपतिष्ठते स स्तरीं छादयित्रीं विनाशयित्रीं रात्रिं न वसति, अपि तु सुखयित्रीमेवाधिवसति सुखहेतुरेव भवतीति यावत् । 'अवितॄस्तृतन्त्रिभ्य ईः' इतीप्रत्ययः ॥

[17]परि त्वेति गार्हपत्योपस्थानम् ॥ इममेव मन्त्रं परिध्यात्मकं

त्याह परिधिमेवैतं परि दधात्यस्क-
न्दायाग्ने गृहपत इत्याह यथायजु-
रेवैतच्छतꣳ हिमा इत्याह शतं त्वा
हेमन्तानिन्धिषीयेति वावैतदाह
पुत्रस्य नाम गृह्णात्यन्नादमेवैनं क-

पुरम् । वयम् । इति । आह । परिधिमिति परि-धिम् । एव । एतम् । परीति । दधाति । अस्कन्दाय । [18]अग्ने । गृहपत इति गृह-पते । इति । आह । यथायजुरिति यथा-यजुः । एव । एतत् । शतम् । हिमाः । इति । आह । [19]शतम् । त्वा । हेमन्तान् । इन्धिषीय । इति । वाव । एतत् । आह । [20]पुत्रस्य । नाम । गृह्णाति । अन्नादमित्यन्न-अदम् । एव । एनम् । करोति । ताम् । आशिषमित्या-

परितस्सर्वतो दधाति । तच्चास्कन्दायाग्नेर्भवति ॥

[18]अग्ने गृहपत इति गार्हपत्योपस्थानमेव ॥ अत्र सुगृहपतित्वादिफलं यथा यजुर्वदति तथा भवत्येव ॥

[19]शतं त्वेति ॥ हिमशब्देन संवत्सराभिधानमुक्तम्* । इन्धिषीयेति । इदमेव सुगृहपतित्वमिति ॥

[20]पुत्रस्येति ॥ अमुष्मा इत्यत्र यथा नारायणाय केशवायेति ।

*सं. १-५-५[15].

रोति तामाशिषमा शांसे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रोऽजातस्स्यात्तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते तामाशिषमा शांसेमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो जातस्स्यात्तेज एवास्मिन्ब्रह्मवर्चसं दधाति ॥ ३५ ॥

शिषम् । एति । शासे । तन्तवे । ज्योतिष्मतीम् । इति । ब्रूयात् । [21]यस्य । पुत्रः । अजातः । स्यात् । तेजस्वी । एव । अस्य । ब्रह्मवर्चसीति ब्रह्म–वर्चसी । पुत्रः । जायते । ताम् । आशिषमित्या–शिषम् । एति । शासे । अमुष्मै । ज्योतिष्मतीम् । इति । ब्रूयात् । यस्य । पुत्रः । जातः । स्यात् । तेजः । एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । दधाति ॥ ३५ ॥

ऊर्जं वो भक्षीयेति प्र गार्हपत्यमुपतिष्ठते वसति ज्योतिष्मतीमेकान्न त्रिꣳशच्च ॥८॥

---

अन्नादमिति । इदमेव ज्योतिष्मत्त्वम् ॥

[21]यस्य पुत्र इति ॥ यस्याजातः पुत्रः तस्य तन्तव इति ब्रूयात् असन्निहितत्वात् । अमुष्मा इति जातं निर्देष्टुं शक्यत

अग्निहोत्रं जुहोति यदेव किं च यजमानस्य स्वं तस्यैव तद्रेतस्सिञ्चति

[1]अग्निहोत्रमित्यग्नि-होत्रम् । जुहोति । यत् । एव । किम् । च । यजमानस्य । स्वम् । तस्य ।

इति तन्तव इत्युच्यते । अमुष्मा इति जातपुत्रस्य, अदश्शब्दस्य सन्निहितविषयत्वात् ॥

इति पञ्चमे अष्टमोनुवाकः.

[1]अथाग्निहोत्रब्राह्मणमग्न्यार्षेयम् । तत्र 'अग्निहोत्रं जुहोति' इति विधिः । अस्त्ययमग्निहोत्रशब्दः कर्मणो नाम—हूयतेऽस्मिन्निति होत्रम् । 'हुयामाश्रुवसि' इत्यादिना ष्ट्रन्प्रत्ययः, षष्ठीसमासान्तोदात्तत्वम् । यथा—'असंस्थितो वा एष यज्ञः । यदग्निहोत्रम्* ' इति । अग्नेर्हविषो नाम—हूयते इति होत्रमिति, यथा 'अहरहर्यजमानस्स्वयमग्निहोत्रं जुहुयात्' †इति । ब्राह्मणं च भवति 'तुभ्यमेवेदं हूयाते' ‡इत्यादि । अस्ति गोर्नाम—यथा 'अग्नेर्हुतादजनीति । तदग्निहोत्रस्य '§ इत्यादि । अग्नेर्होमः अग्निहोत्रं, तदर्था गौरभेदेनोच्यते, 'गौर्वा अग्निहोत्रम्'§ इति, 'अग्निहोत्री वत्सम्' इत्यादि । गौरादिलक्षणो ङीष् द्रष्टव्यः । तत्र हविर्वाचिन इह ग्रहणम् । अयमर्थः—विशिष्टकालमन्त्रप्र-

*ब्रा. २-१-४. †आप. श्रौ. ६-१५-१४.
‡ब्रा. २-१-२. §ब्रा. २-१-६.

प्रजनने प्रजननꣳ हि वा अग्निरथौ-
षधीरन्तंगता दहति तास्ततो भूयं-

एव । तत् । रेतः । सिञ्चति । प्रजनन इति प्र-
जनने । प्रजननमिति प्र-जननम् । हि । वै ।
अग्निः । अथ । ओषधीः । अन्तंगता इत्यन्त-

---

योज्यमग्निहोत्राख्यं हविर्जुहुयादिति । यदेव किञ्च यत्किञ्चिदपि पयो वा दधि वा यवागूं वा जुहोति द्रव्यं तत्तस्यैव यजमानस्य स्वमविनष्टमेव तिष्ठति, तं च न मुञ्चति। ननु दग्धमविनष्टं तिष्ठतीत्यसमीचीनम् । तत्राह—रेत इत्यादि । सदृशप्रधानो निर्देशः । यथा प्रजनने योनौ रेतस्सिक्तमविनष्टं तिष्ठति तत्सदृशमिदमिति जानीयादित्यर्थः । प्रजायन्ते प्रजा अस्मिन्निति प्रजननम् । 'करणाधिकरणयोश्च' इत्यधिकरणे ल्युट् । अथाग्नेः प्रजननत्वं समर्थयते—प्रजननं हीति । ताद्धर्म्यात्ताच्छब्द्यम् । प्रजननसदृशोयमग्निरिति । नन्वग्निर्नाम सर्वं दहति, तत्कीदृशमस्य प्रजननसामर्थ्यमिति पर्यनुयोगावसरे प्रजननसामर्थ्यं दर्शयितुमाह—अथौषधीरन्तगता दहतीति । अथेति प्रस्तावे । अन्तं समीपं गता अन्तगताः । 'द्वितीयाश्रित' इति समासः, द्वितीयापूर्वपदप्रकृतिस्वरत्वम् । अयमग्निरेव समीपे निपतिता ओषधीर्दहति, ता यदृच्छानिपतिताः अमन्त्रहुता अपि ततः पूर्वं दग्ध* स्वरूपेभ्यो भूयसीः भूयस्यः बहुतराः प्रजायन्ते । यदैवमिदं पश्यामः, तदा किं पुनर्मन्त्रहुता इति । 'वा छन्दसि' इति

---

*म—अदग्ध.

सीः प्र जायन्ते यत्सायं जुहोति
रेत एव तत्सिञ्चति प्रैव प्रातस्तनेन
जनयति तद्रेतस्सिक्तं न त्वष्ट्राविकृतं
प्र जायते यावच्छो वै रेतसस्सिक्तस्य
॥ ३६ ॥ त्वष्टा रूपाणि विकरोति

गताः । दहति । ताः । ततः । भूयसीः । प्रेति । जायन्ते । [2]यत् । सायम् । जुहोति । रेतः । एव । तत् । सिञ्चति । प्रेति । एव । प्रातस्तनेनेति प्रातः–तनेन । जनयति । [3]तत् । रेतः । सिक्तम् । न । त्वष्ट्रा । अविकृतमित्यवि–कृतम् । प्रेति । जायते । यावच्छ इति यावत्–शः । वै । रेतसः । सिक्त-

---

पूर्वसवर्णदीर्घत्वम् । तस्मादुपपन्नमग्नेः प्रजननत्वम् । अतस्तत्र हु[हुतं] तस्यैव स्वं भूयिष्ठं च प्रथते इति । उक्तश्च—'यावदेका देवता'* इत्यादि । तस्मादग्निहोत्रं जुहोतीति† ॥

[2]अथ सायम्प्रातश्च होमं विधातुमाह—यत्सायमित्यादि ॥ गतम् ॥

[3]अग्नेरुपस्थानं विधातुमाह—तद्रेत इत्यादि ॥ तदुक्तम्—'रेतस्सिञ्चति प्रजनने'‡ इति । तद्रेतस्सिक्तमपि यदि त्वष्टा न विक्रियते नैव प्रजायते, त्वष्टा वै रूपाणि विकरोतीति । तद्विकुर्व-

---

*ब्रा. ३-२-६. †क—जुहोतीत्यादि. ‡सं. १-५-९[1].

तावच्छो वै तत्प्र जायत एष वै
दैव्यस्त्वष्टा यो यजते बह्वीभिरुप
तिष्ठते रेतस एव सिक्तस्य बहुशो
रूपाणि वि करोति स प्रैव जायते
श्वश्श्वो भूयान्भवति य एवं वि-
द्वानग्निमुपतिष्ठतेहर्देवानामासीद्रा-
त्रिरसुराणां तेसुरा यद्देवानां वित्तं

स्यं ॥३६॥ त्वष्टा । रूपाणि । विकरोतीति वि-करोति । तावच्छ इति तावत्-शः । वै । तत् । प्रेति । जायते । एषः । वै । दैव्यः । त्वष्टा । यः । यजते । बह्वीभिः । उपेति । तिष्ठते । रेतसः । एव । सिक्तस्य । बहुश इति बहु-शः । रूपाणि । वीति । करोति । सः । प्रेति । एव । जायते । श्वश्श्व इति श्वः-श्वः । भूयान् । भवति । यः । एवम् । वि-द्वान् । अग्निम् । उपतिष्ठत इत्युप-तिष्ठते । अहः । देवानाम् । आसीत् । रात्रिः । असुराणाम् । ते । असुराः । यत् । देवानाम् । वित्तम् । वेद्यम् ।

---

स्त्वष्टा यावन्ति रूपाणि विकरोति तावद्रूपं तत्प्रजायते । 'सङ्ख्यैकवचनाच्च' इति शस् । एष वा इत्यादि । देवेषु भवो

वेद्यमासीत्तेन सह ॥ ३७ ॥ रात्रिं
प्राविशन्ते देवा हीना अमन्यन्त
तेऽपश्यन्नाग्नेयी रात्रिराग्नेयाः पशव
इममेवाग्निꣳ स्तवाम स नस्स्तुतः
पशून्पुनर्दास्यतीति तेऽग्निमस्तुव-
न्थ्स एभ्यस्स्तुतो रात्रिया अध्यहे-

आसीत् । तेन । सह ॥ ३७ ॥ रात्रिम् । प्रेति । अविशन् । ते । देवाः । हीनाः । अमन्यन्त । ते । अपश्यन् । आग्नेयी । रात्रिः । आग्नेयाः । पशवः । इमम् । एव । अग्निम् । स्तवाम । सः । नः । स्तुतः । पशून् । पुनः । दास्यति । इति । ते । अग्निम् । अस्तुवन् । सः । एभ्यः । स्तुतः । रा-त्रियाः । अधीति । अहः । अभीति । पशून् ।

---

दैव्यः सामन्त इत्यर्थः । ‘देवाद्यञञौ’ । बह्वीभिरुपतिष्ठत इति विधिः। उत्तराहुत्यनन्तरं ‘उपप्रयन्तः’* इत्येतत्प्रभृतिभिः ऋग्भिः बह्वीभि-रुपतिष्ठते । ‘नित्यं छन्दसि’ इति ङीप् । ‘उपान्मन्त्रकरणे’ इत्यात्मनेपदम् । रेतस एवेत्यादि । बहुशः बहूनि । ‘बह्व-ल्पार्थात्’ इति शस् । भूयानिति । अद्यतनापेक्षया† श्वस्तनः

---

*सं. १-५-५[1—6].    †म—ह्यस्तनापेक्षया.

रभि पशून्निरार्जत्ते देवाः पशून्
वित्त्वा कामाꣳ अकुर्वत य एवं विद्वा-
नग्निमुपतिष्ठते पशुमान्भवति॥३८॥
आदित्यो वा अस्माल्लोकादमुं लो-
कमैत्सोऽमुं लोकं गत्वा पुनरिमं
लोकमभ्यध्यायत्स इमं लोकमाग-

निरिति । आर्जत् । ते । देवाः । पशून् । वित्त्वा । कामान् । अकुर्वत । यः । एवम् । विद्वान् । अग्निम् । उपतिष्ठत इत्युप-तिष्ठते । पशुमानिति पशु-मान् । भवति ॥ ३८ ॥ आदित्यः । वै । अस्मात् । लोकात् । अमुम् । लोकम् । ऐत् । सः । अमुम् । लोकम् । गत्वा । पुनः । इमम् ।

---

प्रकृष्यते । पुनरप्युपस्थानगुणान्विधातुमाह—अहरित्यादि । वित्तं लब्धं वेद्यं लब्धुं योग्यं धनं पशुलक्षणं यदासीत्तत्सर्वमादाय तेन सह रात्रिं प्राविशन्, तत्र देवा अपहृतपशवो हीनास्स्मः इत्यमन्यन्त । तेपश्यन्नित्यादि । अधिरनर्थकः । अहरभि अहर्लक्षीकृत्य रात्र्याः पशून्निरार्जत् निरगमयत् । ऋजु गत्यादिषु, भौवादिकः । 'अभिरभागे' इत्यभेर्लक्षणे कर्मप्रवचनीयत्वम् । ते देवा इत्यादि । गतम् । आदित्यो वा इत्यादि । अस्मान्मनुष्यलोकादमुं लोकमैत् अगच्छत् । गतमन्यत् । *अभि वा इत्यादि । अभ्यारो

---

*सं. १-५-४[4].

त्यं मृत्योरबिभेन्मृत्युसंयुत इव ह्ययं लोकस्सोऽमन्यतेममेवाग्निꣳ स्तवानि स मा स्तुतस्सुवर्गं लोकं गमयिष्यतीति सोऽग्निमस्तौत्स एनꣳ स्तुतस्सुवर्गं लोकमगमयद्यः॥३१॥ एवं विद्वानग्निमुपातिष्ठते सुवर्गमेव

लोकम् । अभीति । अध्यायत् । सः । इमम् । लोकम् । आगत्येत्या–गत्य । मृत्योः । अबिभेत् । मृत्युसंयुत इति मृत्यु–संयुतः । इव । हि । अयम् । लोकः । सः । अमन्यत । इमम् । एव । अग्निम् । स्तवानि । सः । मा । स्तुतः । सुवर्गमिति सुवः–गम् । लोकम् । गमयिष्यति । इति । सः । अग्निम् । अस्तौत् । सः । एनम् । स्तुतः । सुवर्गमिति सुवः–गम् । लोकम् । अगमयत् । यः ॥३१॥ एवम् । विद्वान् । अग्निम् । उपतिष्ठते

---

हणमभिमुखेन रोहणमुच्छ्रिताधिष्ठानम् । यथा खलु श्रेयान् श्रेयसाभिमुखमारूढो भवितुं कामयते एवमयमुपस्थाता करोति । तथापि नक्तमुपतिष्ठते प्रयोजनान्तरार्थमिति भावः । नैव प्रातरुपस्थानं कर्तव्यं, तादृशस्य प्रयोजनस्याभावात् । किम्पुनस्तत्प्रयोजनमित्याह—

लोकमेति सर्वमायुरेत्यभि वा ए-
षोऽग्नी आ रोहति य एनावुपति-
ष्ठते यथा खलु वै श्रेयानभ्यारूढः
कामयते तथा करोति नक्तमुप ति-
ष्ठते न प्रातस्सꣳ हि नक्तं व्रतानि
सृज्यन्ते सह श्रेयाꣳश्च पापीयाꣳ-

इत्युप-तिष्ठते । सुवर्गमिति सुवः-गम् । एव । लोकम् । एति । सर्वम् । आयुः । एति । अभीति । वै । एषः । अग्नी इति । एति । रोहति । यः । एनौ । उपतिष्ठत इत्युप-तिष्ठते । यथा । खलु । वै । श्रेयान् । अभ्यारूढ इत्यभि-आरूढः । कामयते । तथा । करोति । नक्तम् । उपेति । तिष्ठते । न । प्रातः । समिति । हि । नक्तम् । व्रतानि । सृज्यन्ते । सह । श्रेयान् । च । पापीयान् ।

सं हीत्यादि । हिशब्दो यस्मादित्यर्थे वर्तते । यस्मान्नक्तं व्रतानि कर्माणि शुभाशुभलक्षणानि संसृज्यन्ते अविभक्तानि भवन्ति, श्रेयसां पापीयसां च विशेषप्रतिपत्तिर्नास्ति, तस्मादेतद्दोषपरिहारार्थमुपस्थातव्यं; उपस्थानेन तमस्स्वरूपां रात्रिं ज्योतिषा सन्तरति । अथ पूर्वपक्षावतारं संशयपूर्वं प्रस्तौति । उपस्थेय इति । 'विचार्यमाणानाम्' इत्युभयत्रोदात्तप्लुतः । उपस्थेया इत्यत्र पूर्वं परत्वात्

आसाते ज्योतिर्वा अग्निस्तमो रा-
त्रिर्यत् ॥ ४० ॥ नक्तमुपतिष्ठते
ज्योतिषैव तमस्तरत्युपस्थेयो३ऽग्नी३-
नोपस्थेया३ इत्याहुर्मनुष्यायेन्नै
योऽहरहराहृत्याथैनं याचति स इन्नै
तमुपार्च्छत्यथ को देवानहरहर्याचि-

च । आसाते इति । ज्योतिः । वै । अग्निः । तमः । रात्रिः । यत् ॥ ४० ॥ नक्तम् । उपतिष्ठत इत्युप-तिष्ठते । ज्योतिषा । एव । तमः । तरति । उपस्थेय इत्युप-स्थेयः । अग्नीः३ । न । उपस्थेया३ इत्युप-स्थेयाः३ । इति । आहुः । मनुष्याय । इत् । नु । वै । यः । अहरहरित्यहः-अहः । आहृत्येत्या-हृत्य । अथ । एनम् । याचति । सः । इत् । नु । वै । तम् । उपेति । ऋच्छति । अथ । कः । देवान् । अहरहरित्यहः-अहः । याचिष्यति । इति ।

प्लुतोदात्तत्वं, ततस्तस्यासिद्धत्वात्कृदुत्तरपदप्रकृतिस्वरत्वम्, 'यतोऽनावः' इत्याद्युदात्तत्वम्, तेन द्वयोरुदात्तयोश्श्रवणं भवति । मनुष्यायेत्यादि । इदित्यवधारणे, नु इति वितर्के, वै इति प्रसिद्धौ । मनुष्यायाहरहः फलादिकमाहृत्यैवाथैनं यो याचति सोपि तमुपार्च्छति उपरुध्य पीडयत्येव । एवं खल्वेतत् ।

ष्यतीति तस्मान्नोपस्थेयोथो खल्वा-
हुराशिषे वै कं यजमानो यजत
इत्येषा खलु वै ॥४१॥ आहिताग्ने-
राशीर्यदग्निमुपतिष्ठते तस्मादुपस्थे-
यः प्रजापतिः पशूनसृजत ते सृष्टा
अहोरात्रे प्राविशन्ताञ्छन्दोभिरन्व-

तस्मात् । न । उपस्थेय इत्युप—स्थेयः । अथो इति । खलु । आहुः । आशिष इत्या—शिषे । वै । कम् । यजमानः । यजते । इति । एषा । खलु । वै ॥ ४१ ॥ आहिताग्नेरित्याहित—अग्नेः । आ-शीरित्या—शीः । यत् । अग्निम् । उपतिष्ठत इत्युप—तिष्ठते । तस्मात् । उपस्थेय इत्युप—स्थेयः । प्रजापतिरिति प्रजा—पतिः । पशून् । असृजत । ते । सृष्टाः । अहोरात्रे इत्यहः—रात्रे । प्रेति । अविशन् । तान् । छन्दोभिरिति छन्दः—भिः ।

'उपसर्गादृति धातौ' इति वृद्धिः । 'तुनुपूर्व*उदात्तयोर्वकारः'† इति वचनात् । यदा मनुष्यविषयेप्येवं भवति अथेदानीं को देवान् महानुभावान् अहरहर्याचिष्यति, तस्मात्कदाचिदप्यग्निर्नोपस्थेय इति । अथ समाधत्ते—अथो खल्वाहुरिति । एवं प्राप्ते

*तं—नु पूर्व. †तै. प्रा. ५-१३.

विन्दद्यच्छन्दोभिरुपतिष्ठते स्वमेव
तदन्विच्छति न तत्र जाम्यस्ती-
त्याहुर्योहरहरुपतिष्ठत इति यो वा
अग्निं प्रत्यङ्ङुपतिष्ठते प्रत्येनमोषति
यः पराङ् विष्वङ्प्रजया पशुभिरेति

अन्विति । अविन्दत् । यत् । छन्दोभिरिति छन्दः-भिः । उपतिष्ठत इत्युप-तिष्ठते । स्वम् । एव । तत् । अन्विति । इच्छति । न । तत्र । जामि । अस्ति । इति । आहुः । यः । अहरहरि-त्यहः-अहः । उपतिष्ठत इत्युप-तिष्ठते । इति । यः । वै । अग्निम् । प्रत्यङ् । उपतिष्ठत इत्युप-तिष्ठते । प्रतीति । एनम् । ओषति । यः । परा-ङ् । विष्वङ् । प्रजयेति प्र-जया । पशुभिरिति

आहुर्वेदार्थविदः—कः प्रजापतिः, अत्र सर्वदेवात्मत्वसामान्ये-नाग्निरुच्यते ; पादपूरणो वा । अग्न्युपस्थानमेव यजमानस्याशीः, नातः परमाशंसनीयमस्ति ; तस्मादग्निरुपस्थेयः, कस्सामान्यान्या-चेत इति । तस्मात्सायम्प्रातश्चोपस्थेय इति । प्रजापतिः पशूनि-त्यादि । पश्ववगमनेमेव यजमानोन्विच्छति । जामि आलस्यम् । गतमन्यत् । यो वा इत्यादि । प्रत्यङ्गातिमुख्येन ओषति

कवातिर्यङ्ङिवोपं तिष्ठेत् नैनं प्रत्यो-
षंति न विष्वङ्प्रजया पशुभिरे-
ति ॥ ४२ ॥

पशु-भिः । एति । कवातिर्यङ्ङिति कवा-तिर्यङ् ।
इव । उपेति । तिष्ठेत । न । एनम् । प्रत्योषतीति
प्रति-ओषति । न । विष्वङ् । प्रजयेति प्र-जया ।
पशुभिरिति पशु-भिः । एति ॥ ४२ ॥

सिक्तस्य सह भवति यो यत्खलु
वै पशुभिस्त्रयोदश च ॥ १ ॥

---

दहति । यः पराङ्मुख उपतिष्ठते इत्येव । विष्वङ् नानागमनः प्रजया पशुभिश्च विष्वङेति विगच्छति नष्टो भवति । तस्मात्कवातिर्यङ् ईषत्तिरश्चीन इव भूत्वा उपतिष्ठेतेति । छान्दसः कुशब्दस्य कवादेशः ॥

इति पञ्चमे नवमोनुवाकः.

मम॒ नाम॑ प्र॒थ॒मं जा॑तवेदः पि॒ता मा॒ता च॑ दधतु॒र्यद॑ग्रे॑। तत्त्वं बि॑भृहि॒

[1]मम॑। नाम॑। प्र॒थ॒मम्। जा॒त॒वे॒द॒ इति॑ जात–वे॒दः। पि॒ता। मा॒ता। च॒। द॒ध॒तुः। यत्। अग्रे॑। तत्। त्वम्। बि॒भृ॒हि॒। पुनः॑। एति॑। मत्। ऐतो॒-

[1]अग्निभ्यः प्रवत्स्यन्नाहवनीयमुपतिष्ठते—मम नामेति त्रिष्टुभा ॥ हे अग्ने जातवेदः जातानां वेदितः, यद्वा—जातधनादिक। मम यत्प्रथममाद्यं गुह्यं; 'तस्माद्विनामा ब्राह्मणोर्धुकः'* इति द्विनामत्वाद्विशेष्यते। किम्पुनस्तदित्याह—पिता माता चाग्रे जन्मकाले यद्दधतुः नाम मम चक्रतुः। सत्यपि यद्वृत्ते व्यत्ययेन निहन्यते। यद्वा—मम प्रथमं नाम माता च पिता च दधतुः तस्मादेवं नाम विशिष्टम्। ततः किम्पुनस्तदित्याह—यदग्रे यज्जन्मकाले एव ममाभूत्। प्रथमस्य नाम्नो द्वौ गुणौ, मातापितृकर्तृकत्वं अग्रे कृतत्वं च। ततो विशिष्टं मदीयं नाम त्वं बिभृहि। कुत इत्यत आह—मत् मम। 'सुपां सुलुक्' इति षष्ठ्या लुक्। कुतः? आ पुनरेतोः आपुनरागमनात्। 'भावलक्षणे स्थेण्' इति तोसुन्प्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा 'तादौ च' इति गतेः प्रकृतिस्वरत्वम्। यद्वा—आभिमुख्ये आङ्गीकर्तव्यः। कर्तरि तोसुन्। मदिति पञ्चम्येव। आ गन्तोः मत्, यावदहमागन्तास्मि तावदित्यर्थः। तव च नामाहं बिभराणि। तावन्तं कालं नामभरणं चावश्यकार्यप्रतिलम्भार्थम्। एतदुक्तं भवति—मयि प्रोषित उपसन्निहितस्त्वमहं भूत्वा मया कर्तव्यं सर्वं कुरु, यथात्र न किञ्चि-

*सं. ६-३-१.

पुनरा मदैतोस्तवाहं नाम बिभरा-
ण्यग्ने । मम नाम तव च जातवे-
दो वाससी इव विवसानौ ये चरा-

रित्या—एतोः । तव । अहम् । नाम । बिभराणि । अग्ने । [2]मम । नाम । तव । च । जातवेद इति जात—वेदः । वाससी इति । इव । विवसानाविति वि—वसानौ । ये इति । चरावः । आयुषे । त्वम् ।

---

त्परिहास्यते । अहमप्यन्यत्र त्वं भूत्वा त्वया कर्तव्यं करिष्यामि, यथा बहिर्न किञ्चित्परिहास्यते । एवमाभ्यां परस्परस्योपकुर्वद्भ्यां वर्तितव्यमिति ॥

[2]आगत्य प्रवासात्पुनस्तमुपतिष्ठते—मम नाम तव चेति । अयश्च जगतीप्रकारो विवृद्धपादः । 'आयुषे त्वं जीवसे वयम्' इति तृतीयः पादः ॥ हे जातवेदः मम च तव च सम्बन्धिनी ये नामनी विवसानौ विपरिवृत्य वसानौ मम नाम त्वं तव च नामाहमिति, अतोन्योन्यस्य विपरिवृत्ते इव धारयन्तौ चरावः त्वं चाहं च वर्तावहे । ते नामनी पुनरिदानीं यथायथं यथास्वं विपरिदधावहै पुनर्विवर्तावहै । तव नाम त्वमेव परिधत्स्व मम च नामाहमेव परिदधे । 'यथास्वे यथायथम्' इति निपात्यते । किमर्थमित्याह—आयुषे अन्नाय हविर्लक्षणाय त्वमात्मीयं नाम गृहाण । जीवसे दीर्घायुर्जीवितुम् वयमप्यात्मीयं नाम गृह्णीमः । 'अस्मदो द्वयोश्च' इत्येकस्मिन् बहुवचनम् । वचनव्यत्ययो वा ।

वः । आयुषे त्वं जीवसे वयं यथा-
यथं वि परि दधावहै पुनस्ते । न-
मोऽग्नयेऽप्रतिविद्धाय नमोनाधृष्टाय
नमस्सम्राजे । अषाढः ॥ ४३ ॥
अग्निर्बृहद्वया विश्वजित्सहन्त्यश्श्रे-

जीवसे । वयम् । यथायथमिति यथा-यथम् । वि । परीति । दधावहै । पुनः । ते इति । [3]नमः । अग्नये । अप्रतिविद्धायेत्यप्रति-विद्धाय । नमः । अनाधृष्टायेत्यना-धृष्टाय । नमः । सम्राज इति सं-राजे । अषाढः ॥ ४३ ॥ अग्निः । बृहद्वया इति बृहत्-वयाः । विश्वजिदिति विश्व-जित् ।

---

'तुमर्थे सेसेन्' इत्यसेप्रत्ययः, आद्युदात्तत्वप्रसङ्गादसुन्नन्तो नेष्यते ॥

[3]गार्हपत्यमुपतिष्ठते—नमोग्नय इति त्रिष्टुभा॥ नमोग्नये पूजेयं क्रियते। अप्रतिविद्धाय केन चिदप्यताडिताय। नमोनाधृष्टाय केन चिदप्यपरिभूताय। नमस्सम्राजे सर्वदा सङ्गतदीप्तये। 'मो राजि समः क्वौ' इति मकारः। इदानीं स एवाग्निस्स्तूयते—अयं खल्वग्निः अषाढः केन चिदपि सोढुमशक्यः। 'साढ्यै साढ्वा' इति निपात्यते, 'सहेस्साडस्सः' इति षत्वम्। बृहद्वयाः अपरिमितान्नः, विश्वजित्सर्वस्य जेता, सहन्त्यः अभिभवनशीलश्शत्रूणाम्। सहेरौणादिके झचि स्वार्थिको यत्, अद्व्यचोपि व्यत्ययेन 'यतोऽनावः' इत्याद्युदात्तत्वम्।

ष्ठो गन्धर्वः । त्वत्पितारो अग्ने देवा-
स्त्वामाहुतयस्त्वद्विवाचनाः । सं मा-

सहन्त्यः । श्रेष्ठः । गन्धर्वः । [4]त्वत्पितार इति त्वत्-पितारः । अग्ने । देवाः । त्वामाहुतय इति त्वां-आहुतयः । त्वद्विवाचना इति त्वत्-विवाचनाः । समिति । माम् । आयुषा । समिति ।

---

श्रेष्ठः प्रशस्यतमः, गन्धर्वः गवां स्तुतिशब्दानां धारयिता स्वीकर्ता । स्वीकृत्य वा तदर्थस्य कर्ता । पृषोदरादिः । योऽग्निरित्थम्भूतस्तस्मै नमः इति ॥

[1]अन्वाहार्यपचनमुपतिष्ठते—त्वत्पितार इति ॥ अयं कश्चिद्वाय त्रीप्रकारः । 'सम्मामायुषा' इति तृतीयः । हे अग्ने त्वत्पितारस्त्वत्पितृकाः त्वं पिता पाता वा येषां तादृशा देवताः । छान्दसं दीर्घत्वम्, 'ऋतश्छन्दसि' इति कबभावः । त्वामाहुतयः त्वां प्रति गन्तारः, त्वय्याहुतयो येषान्ते त्वामाहुतयः । छान्दसो द्वितीयाया अलुक् । त्वय्याहुतयः देवाहुतय इत्यर्थः । त्वद्विवाचनाः त्वं विवाचनाः विवाचयिता विशेषेण ख्यापयिता येषां ते तादृशाः, त्वन्मुखत्वाद्देवानाम् । वचेर्ण्यन्तान्नन्द्यादिलक्षणो ल्युः । स तादृशस्त्वमायुषान्नेन जीवितेन वा सुहिते सुष्ठु निहिते सुहितार्थं मां सन्धाः सन्धेहि संयोजय । गौपत्येन गवां स्वामित्वेन च मां सन्धेहि । पत्यन्तलक्षणो यत् । दधातेर्लेटि शपो लुक् । छान्दसे वा लिङि 'गातिस्था' इति सिचो

मायुषा सं गौपत्येन सुहिते मा धाः। अयमग्निश्श्रेष्ठतमोयं भगवत्तमोयꣳ सहस्रसातमः। अस्मा अस्तु सुवीर्यम्। मनो ज्योतिर्जुषतामाज्यं वि-

गौपत्येन। सुहित इति सु-हिते। मा। धाः।
5अयम्। अग्निः। श्रेष्ठतम इति श्रेष्ठ-तमः। अयम्। भगवत्तम इति भगवत्-तमः। अयम्। सहस्रसातम इति सहस्र-सातमः। अस्मै। अस्तु। सुवीर्यमिति सु-वीर्यम्। 6मनः। ज्योतिः।

---

लुक्। यद्वा—सुहिते सम्यक् स्थापय। सुहित इति प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

5आहवनीयमुपतिष्ठते—अयमित्यनुष्टुभा ॥ अयमग्निराहवनीय-श्श्रेष्ठतमः अतिशयेन प्रशस्यतमः प्रशस्तानामपि प्रशस्ततमः। प्रकर्षवतामप्यतिशयविवक्षया द्वितीय आतिशायनिको भवत्येव, यथा 'श्रेष्ठतमाय कर्मणे' इति*। अयं भगवत्तमः अतिशयेन धनवान्। तथाऽयं सहस्रसातमः सहस्रस्य बहुनो धनस्य ये सनितारस्सम्भक्तारो दातारो वा तानतिशेते। 'जनसन' इति विट्, 'विड्वनोरनुनासिकस्यात्' इत्यात्वम्। ईदृशोयमग्निरस्मै यजमानाय मह्यं सुवीर्यमस्तु शोभनवीर्यं धनमस्तु। ईदृशधन-हेतुर्ममास्त्विति यावत्। 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम्। एवं सहस्रपदोपात्तं धनं सुवीर्यशब्देन विशेष्यते ॥

6विच्छिन्ननिमित्तो होमः—मनो ज्योतिरिति। त्रिष्टुबियं,

---

*सं. १-१-१-3.

च्छिन्नं यज्ञꣳ सामिमं दधातु । या इष्टा उषसो निम्रुचंश्च तास्सं दधामि हविषा घृतेन । पयस्वतीरोष-

जुषताम् । आज्यम् । विच्छिन्नमिति वि-छिन्नम् । यज्ञम् । सामिति । इमम् । दधातु । याः । इष्टाः । उषसः । निम्रुच इति नि-म्रुचः । च । ताः । सामिति । दधामि । हविषा । घृतेन । [7]पयस्वतीः ।

विराड्वा ॥ पूर्वार्धर्चो व्याख्यातः* । सर्वस्य मनो द्योतमानोयमग्निरिदमाज्यं जुषतां, जुषमाणश्चेमं विच्छिन्नं यज्ञं सन्दधात्विति । या इष्टाः 'तास्सन्दधामि' इति वचनात् मयि प्रोषिते प्रमत्ते वा या उषसः अन्यैर्यजमानैरिष्टाः, मयानिष्टा इत्यर्थसिद्धम् । यद्वा— इष्टा यागार्हा मयानिष्टास्संधातुं या इष्टाः । इच्छतेर्निष्ठा । इषेर्वा गतिकर्मणः, इष्टाः गताः विना यागेनातिवाहिताः । उषसः अहरारम्भाः† प्रातश्च सायं चेति यावत् । म्रुचु म्लुचु स्तेयकरणे, सम्पदादिलक्षणः क्विप् । तास्सन्दधामि अनेन घृतेनैव हविषा चरुणा सङ्गताः करोमि अनेन हविषा यागवतीः करोमि । अथापरम्—या इष्टाः पूर्वं मया यागवत्यः कृताः या उषसः उदया दिवसा इत्यर्थः । याश्च निम्रुचः लुप्तयागा उषसस्ता उभयीरुषसः अनेन हविषा सन्दधामि संयोजयामि, यागवतीरेव सर्वाः करोमि, इष्टानिष्टविभागरहिताः करोमीत्यर्थः ॥

[7]अतः परमिष्टियाजमानकाण्डं प्राजापत्यम् । तत्रापि आम्ना-

*सं. १-५-३.[7] †अत्र 'निम्रुचः राज्यारम्भाः' इति भाष्यं गलितमिव भाति.

धयः ॥ ४४ ॥ पयस्वद्वीरुधां पयः ।
अपां पयसो यत्पयस्तेन मामिन्द्र
सꣳ सृज । अग्ने व्रतपते व्रतं चरि-

ओषधयः ॥ ४४ ॥ पयस्वत् । वीरुधाम् । पयः ।
अपाम् । पयसः । यत् । पयः । तेन । माम् ।
इन्द्र । समिति । सृज । [8]अग्ने । व्रतपत इति व्रत–

मति—पयस्वतीरित्यनुष्टुभा ॥ पयस्वतीः पयस्वत्यः क्षीरवत्यस्सारवत्यो वा । पानरसेन तद्वत्य ओषधय ओषध्यः फलपाकान्ताः । 'वा छन्दसि' पूर्वसवर्णदीर्घत्वम् । वीरुधां तु पयः पयस्वत् ओषधीनां पयोपि पयस्वत् सारवत् पेयत्वगुणवत् । विविधं रोहन्तीति वीरुधः लतादयः । पृषोदरादिः । अपां वा सम्बन्धि यत्पयः ईदृशं पयसोपि पयः, यत्किञ्चित्पय ओषधीनां वीरुधां वा तस्यापि पयस्ततोपि सारवत् । तेन मां संसृज योजय हे इन्द्र । एतदुक्तं भवति—ओषधयो न केवलं पयस्वत्यः वीरुधान्तु पयोपि पयस्वत्, अपान्तु ततोपि पयस्वत्पय इति ॥

[8]व्रतमुपैति—अग्ने व्रतपत इति यजुषा ॥ हे अग्ने व्रतानां ब्रह्मचर्यादीनां पते पालयितः । 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' इति पूर्वस्याविद्यमानवत्वनिषेधाद्द्वितीयं निहन्यते। व्रतं यथोक्तं चरिष्यामि तद्व्रतमहं शकेयं चरितुं समर्थो भूया-

ष्यामि तच्छकेयं तन्मे राध्यताम् ।
अग्निꣳ होतारमिह तꣳ हुवे देवान्
यज्ञियानिह यान् हवामहे । आ
यन्तु देवास्सुमनस्यमाना वियन्तु

पते । व्रतम् । चरिष्यामि । तत् । शकेयम् । तत् । मे । राध्यताम् । [9]अग्निम् । होतारम् । इह । तम् । हुवे । देवान् । यज्ञियान् । इह । यान् । हवामहे । एति । यन्तु । देवाः । सुमनस्यमाना इति सु-मनस्यमानाः । वियन्तु ।

सम् । लिङ्याशिष्यङ् । तद्व्रतं त्वत्प्रसादाच्चरितं मे मम राध्यतां सिद्ध्यतु । राध हिंसासिद्ध्योः, दैवादिकः ॥

[9]हविर्निरुप्यमाणमभिमन्त्रयते—अग्निं होतारमिति । अत्र वृत्तिद्वययोगात्संशये सङ्ख्यया त्रिष्टुबित्येके । 'आद्यात्सन्देहे । देवतादिभ्यश्च'* इति जगतीत्यन्ये ॥ इहास्मिन् कर्मणि होतारं देवानामाह्वातारमग्निं हुवे आह्वयामि । शपो लुक् । देवान्यज्ञियान्यज्ञार्हान् हवामहे आह्वयामः, ये आह्वातव्यास्तानप्याह्वयामि । 'बहुलं छन्दसि' इति ह्वयतेस्सम्प्रसारणम् । 'यज्ञर्त्विग्भ्याम्' इति यज्ञशब्दाद्घः । यद्वा—यान्हवामहे ये होतव्याः तानाह्वयामि । जुहोतेर्व्यत्ययेन शप्, आत्मनेपदं च । ते च हुतास्सुमनस्यमानाः सुमनसस्सन्त आह्वानापराधं सोढ्वा तुष्यन्तु,

*पिं.—३-६१,६२. सूत्रे पश्य

देवा हविषो मे अस्य । कस्त्वा युनक्ति स त्वा युनक्तु यानि घर्मे कपालान्युपचिन्वन्ति ॥४५॥ वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू

देवाः । हविषः । मे । अस्य । [10]कः । त्वा । युनक्ति । सः । त्वा । युनक्तु । [11]यानि । घर्मे । कपालानि । उपचिन्वन्तीत्युप—चिन्वन्ति ॥ ४५ ॥ वेधसः । पूष्णः । तानि । अपीति । व्रते । इन्द्र-

---

आयन्त्वागच्छन्तु । भृशादित्वलक्षणः क्यङ् । आगत्य च देवा हविषोस्य वियन्तु भक्षयन्तु । वी गत्यादिषु, 'क्रियाग्रहणं कर्तव्यम्' इति सम्प्रदानत्वात् 'चतुर्थ्यर्थे बहुलं छन्दसि' इति षष्ठी ॥

[10]यज्ञं यज्ञयोगेन युनक्ति—कस्त्वेति यजुषा ॥ कः प्रजापतिरेव हि त्वां युनक्ति योक्तुमर्हति, तस्मात्स त्वां युनक्तु हे यज्ञ युक्तात्मानं त्वां करोतु ॥

[11]कपालानि विमुञ्चति—यानि घर्म इत्यनुष्टुभा ॥ इयं ह्याध्वर्यवे व्याख्याता 'धृष्टिरसि'* इत्यत्र । यानि कपालानि घर्मे अग्नौ वेधसोध्वर्यवः उपचिन्वन्ति उपदधति तानि पूष्णः पुष्टि-

---

*सं. १-१-७[12].

**वि मुंञ्चताम् । अभिन्नो घर्मो जीरदानुर्यत आत्तस्तदगन्पुनः । इध्मो**

**वायू इतीन्द्र—वायू । वीति । मुञ्चताम् । [12]अभिन्नः । घर्मः । जीरदानुरिति जीर—दानुः । यतः । आत्तः । तत् । अगन् । पुनः । [13]इध्मः । वेदिः ।**

---

कारणस्याग्नेर्वृते कर्मणि अपीते समाप्ते । इदानीमिन्द्रवायू विमुञ्चताम्; न ह्यन्यस्तानि विमोक्तुं शक्नोतीति ॥

[12]भिन्नं कपालमुत्कर उदस्यति—अभिन्न इति । पङ्क्तिरियं चतुष्पदा ॥ अभिन्नोऽविगुणोस्तु घर्मो यज्ञः, सत्यपि कपालभेदे तन्निमित्तं यज्ञस्य वैगुण्यं मा भूदित्यर्थः । अथ वा—घर्मार्थं कपालं घर्मः स भिन्नोप्यभिन्नोस्तु अविनष्ट एवास्तु । अत एव जीरदानुः यागः कपालं वा भवतु वैगुण्याभावात्; जीरमुदकं तस्य दाता वर्षादिद्वारेण । यद्वा—जीरं जीवितं प्रजानां तस्य दाता । जीवेरौणादिको रक्प्रत्ययः, ददातेर्नुः, दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । जीवेरदानुक् जीरदानुः इति निर्वचनं पदकारा न सहन्ते । किञ्च—अयं घर्मो यज्ञात्मा कपालात्मा वा यतः पृथिव्या आत्तः गृहीतः तदेव पुनरगन् गच्छतु पृथिव्यां गृहीतं पृथिवीमेव गच्छतु । गमेश्छान्दसे लिङि 'मन्त्रे घस' इत्यादिना च्लेर्लुक् । 'मो नो धातोः' ॥

[13]आहवनीये सम्मीननीं जुहोति—इध्मो वेदिरित्युत्तरेणार्धर्चेन, त्रयस्त्रिंशदिति त्रिष्टुभा च ॥ इध्मो वेदिः परिधयश्च । चशब्दा-

वेदिः परिधयश्च सर्वे यज्ञस्यायुरनु
सं चरन्ति । त्रयस्त्रिꣳशत्तन्तवो ये
वितत्निरे य इमं यज्ञꣳ स्वधया
ददन्ते तेषां छिन्नं प्रत्येतद्दधामि

परिधय इति परि-धयः । च । सर्वे । यज्ञस्य । आयुः । अनु । समिति । चरन्ति । त्रयस्त्रिꣳशदिति त्रयः-त्रिꣳशत् । तन्तवः । ये । वितत्निर इति वि-तत्निरे । ये । इमम् । यज्ञम् । स्वधयेति स्व-धया । ददन्ते । तेषाम् । छिन्नम् । प्रती-

दन्येऽप्येवंजातीयास्सर्वे यज्ञस्यायुस्स्थानीयमिममनुसञ्चरन्ति अनुक्रमेण प्रत्यासन्ना भूत्वा चरन्ति इमं सेवमाना वर्तन्ते । ये च त्रयस्त्रिंशत्तन्तवः तन्तुस्थानीयाः पटमिव सूत्राणीमं यज्ञं वितत्निरे विस्तारयन्ति । के पुनस्ते? ये 'प्रजापतिर्मनसान्धोच्छेतः'* इति आकूतिप्रभृतियज्ञस्य तनितारः प्रजापत्यादयः ते वेदितव्याः । आकूत्यादयो वा यज्ञावयवाः । त्रयश्च त्रिंशाच्च । 'त्रेस्त्रयः' इति सूत्रेण त्रेस्त्रयसादेशः, 'सङ्ख्या' इति पूर्वपदप्रकृतिस्वरत्वम् । विपूर्वात्तनोतेश्छान्दसे लिटि 'तनिपत्योश्छन्दसि' इत्युपधालोपः । अथ ये च इमं यज्ञं स्वधयान्नेन हविरात्मना ददन्ते उत्पादयन्ति, उत्पाद्य वा देवेभ्यो दधति । ददतिर्भौवादिकः । तेषां सर्वेषां यच्छिन्नं भेदननिमित्तेन प्राप्तं वैगुण्यं एतत्प्रतिदधामि अनयाहुत्या प्रतिविहितं करोमि । यद्वा—समर्थे प्रतिशब्दः;

*सं. ४-४-९.

स्वाहा घर्मो देवाꣳ अप्यैतु ॥ ४६ ॥

वैश्वानरो न ऊत्याऽऽप्र यातु परा-

ति । एतत् । दधामि । स्वाहा । [14]घर्मः । देवान् ।
अपीति । एतु ॥ ४६ ॥

अषाढ ओषधय उपचिन्वन्ति पञ्च

चत्वारिꣳशच्च ॥ १० ॥

[1]वैश्वानरः । नः । ऊत्या । आ । प्रेति । यातु ।

---

यच्छिन्नमेतत्सन्दधामि सन्ततमविच्छिन्नमनयाहुत्या करोमि, स्वाहुतं चेदमस्तु ॥

[14]अन्यं कपालं तेषु विसृजति—घर्म इति ॥ घर्मो यज्ञः कपालं वा देवानप्येतु अनुप्रविशतु अन्वितगुणो भवतु ॥

इति पञ्चमे दशमोनुवाकः.

---

[1]अथ प्राजापत्यकाण्डमध्ये याज्याकाण्डं वैश्वदेवम् । तत्र 'वैश्वानरं द्वादशकपालं निर्वपेद्वारुणं चरुं दधिक्रावृण्णे चरुमभिशस्यमानः'* इति त्रिहविष्को यो वैश्वानरो द्वादशकपालः तस्य पुरोनुवाक्या—वैश्वानरो न इति गायत्री ॥ प्रायेण पञ्चमषष्ठयो-

---

*सं. २-२-५.

वतः । अग्निरुक्थेन वाहसा । ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पति-

परावत इति परा—वतः । अग्निः । उक्थेन । वाहसा । [2]ऋतावानमित्यृत—वानम् । वैश्वानरम् । ऋतस्य । ज्योतिषः । पतिम् । अजस्रम् । घर्मम् ।

---

स्सर्ववैश्वानराणामियमेव पुरोनुवाक्या वेदितव्या । वैश्वानरः विश्वेषां नराणां स्वामित्वेन सम्बन्धी अग्निः । 'नरे संज्ञायाम्' इति पूर्वपदस्य दीर्घत्वम् । ऊत्या मार्गेण करणेन अस्मद्रक्षणेन वा हेतुना आत्मनो वा तर्पणेन प्रयोजनेन । 'ऊतियूति' इति क्तिन उदात्तत्वं निपात्यते, 'उदात्तयणः' इति विभक्तेरुदात्तत्वं, 'ज्वरत्वर' इत्यादिना ऊठ् । स नोस्मानाप्रयातु आभिमुख्येनान्येभ्यश्च प्रकर्षेणास्मान् प्राप्नोतु परावतः दूराद्प्यायातु । 'उपसर्गाच्छन्दसि' इति वतिः । उक्थेन स्तोत्रेण वाहसा वहनसमर्थेन अभीष्टार्थवाहनसमर्थेनेत्यर्थः । यद्वा—प्रापणसमर्थेन मार्गेण । 'वहिहाधाञ्भ्यश्छन्दसि' इत्यसुन्, 'णित्' इति हि तत्रानुवर्तते । आगत्य चास्मानभिशस्तेर्मुञ्चन्पापं वर्णमपहन्त्विति शेषः ॥

[2]"वैश्वानरं द्वादशकपालं निर्वपेद्विद्विषाणयोरन्नं जग्ध्वा"* इत्यस्य याज्या—ऋतावानमिति गायत्री ॥ ऋतावानं सत्यवन्तं यज्ञवन्तं वा वैश्वानरम् । 'छन्दसीवनिपौ' इति वनिप्, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । ऋतस्य सत्यस्य सूर्यादेः ज्योतिषः पतिं

---

*सं, २-२-६.

म् । अजस्रं घर्ममीमहे । वैश्वानरस्यं दंसनाभ्यो बृहदरिणादेकस्स्वपस्ययां कविः । उभा पितरां

ईमहे । [3]वैश्वानरस्यं । दंसनाभ्यः । बृहत् । अरिणात् । एकः । स्वपस्ययेति सु–अपस्ययां । कविः । उभा । पितरां । महयन्नं । अजायत । अग्निः ।

---

पातारमीमहे याचामहे । किं? अजस्रमविच्छिन्नं घर्मं यज्ञं, तेन अविच्छिन्नास्स्यामेति । तेन नास्मिन्मृजाते विद्विषाणौ इति ॥

[3]' वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते'* इत्यस्य पुरोनुवाक्या—वैश्वानरस्य दंसनाभ्य इति जगती ॥ बृहदिति प्रथमपादान्तः । तेन अरिणादिति पादादित्वान्न निहन्यते । वैश्वानरस्य दंसनाभ्यः कर्मभ्यः बृहन्महत् एकः कविर्मेधावी किमरिणादधिगच्छति? किमिति सामर्थ्याल्लभ्यते, इतोन्यन्महदस्तीति कविर्मेधावी कश्चिदवबुध्यते किं? न कश्चिदित्यर्थः । यो मेधावी न भवति स कामं मिथ्यावबुध्यतां, मेधावी नैव बोद्धुमर्हतीति । री गतिरेषणयोः क्रैयादिकः, छान्दसो लुङ्, 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । कीदृशं महत्त्वमित्याह—स्वपस्यया शोभनकर्मतया महदाभ्योन्यन्नास्त्येवेत्यर्थः । वैश्वानरस्य कर्मसदृशमन्यच्छोभनत्वेन महत्कर्म कश्चिदपि मेधावी जनो न जानातीत्युक्तं भवति । अप इति कर्मनाम, शोभनकर्म स्वपः, तस्य भावस्स्वपस्यम् । छान्दसो यत्, 'सुपां सुलुक्' इति तृतीयाया यादेशः । तर्हि तेषामस्य कर्मणां मध्ये शोभनमेकं कर्मोदाह्रियतामित्याह—अयं खल्वग्निः

---

* सं. २-२-५

म॒हय॑न्नजायता॒ग्निर्द्या॑वापृथि॒वी भू-
रि॑रेतसा । पृ॒ष्टो दि॒वि पृ॒ष्टो अ॒ग्निः
पृ॒थि॒व्यां पृ॒ष्टो विश्वा॒ ओष॑धी॒रा
वि॑वेश । वै॒श्वा॒न॒रस्सह॑सा पृ॒ष्टो

द्यावा॑पृथि॒वी इति॒ द्यावा॑—पृ॒थि॒वी । भूरि॑रेत॒सेति॒ भूरि॑—रे॒त॒सा । [4]पृ॒ष्टः । दि॒वि । पृ॒ष्टः । अ॒ग्निः । पृ॒थि॒व्याम् । पृ॒ष्टः । विश्वाः॑ । ओष॑धीः । एति॑ । वि॒वे॒श । वै॒श्वा॒न॒रः । सह॑सा । पृ॒ष्टः । अ॒ग्निः ।

---

उभा उभौ पितरा पितरौ, मातापितृस्थानीयौ वा । उभयत्रापि 'सुपां सुलुक्' इत्याकारः । द्यावापृथिवी द्यावापृथिव्यौ । द्विवचनस्य पूर्वसवर्ण ईकारः, 'दिवो द्यावा' इति द्यावादेशः, 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत् प्रकृतिस्वरत्वम् । भूरिरेतसा भूरिरेतसौ स्थावरजङ्गमात्मकबहुविकारे महयन् पूजयन् प्रकाशयन् अजायत जायते । छान्दसो लङ् । यथा खलु कश्चित्सुजातः पुत्रः मातापितरौ भूरिरेतसौ युवानौ निजजन्मनालङ्कुर्वन् जायते एवमसौ जायते । इत्थं जन्मकाल एवास्य कुर्वाणस्य किन्नाम कर्म महच्छोभनं न भवतीति भावः । तस्मादीदृशोयमग्निरस्माकं जातं तमिमं पुत्रं पूतत्वतेजस्वित्वादिगुणं करोतु ॥

[4]'वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वातिपाद्य'* इत्यस्य याज्या—पृष्टो दिवीति त्रिष्टुप् ॥ अयं वैश्वा-

---

*सं॰ २-२-५.

अग्निस्स नो दिवा सः ॥ ४७ ॥
रिषः पातु नक्तम् । जातो यदग्ने
भुवना व्यख्यः पशुं न गोपा इर्यः
परिज्मा । वैश्वानर ब्रह्मणे विन्द

सः । नः । दिवा । सः ॥ ४७ ॥ रिषः । पातु ।
नक्तम् । [5]जातः । यत् । अग्ने । भुवना । व्यख्य
इति वि—अख्यः । पशुम् । न । गोपा इति गो—
पाः । इर्यः । परिज्मेति परि—ज्मा । वैश्वानर ।
ब्रह्मणे । विन्द । गातुम् । यूयम् । पात । स्वस्ति-

---

नरोग्निः दिव्यादित्यात्मना पृष्टः स्पृष्टः । छान्दसो व्यञ्जनलोपः । यद्वा—पृष्टो निषिक्तः निहितः दिव्यादित्यात्मना । पृष सेचने । पृथिव्यां च पार्थिवेषु । 'उदात्तयणः' इति विभक्तेरुदात्तत्वमुक्तम् । पृष्ट एव भूत्वा विश्वा ओषधीराविवेश, पक्तिस्थितिहेतुत्वेन सर्वं व्याप्य स्थितः । स एवम्भूतो वैश्वानरोग्निस्सहसा बलेन पृष्टस्सम्बद्धो नोस्मान् रिषः रेष्टुर्हिंसितुः दिवा पातु रक्षतु । नोस्मान्नक्तं च पातु अतिपत्तिदोषात्पात्विति ॥

[5]जातेष्ट्या याज्या—जातो यदग्न इति त्रिष्टुप् ॥ हे अग्ने वैश्वानर जातो जातमात्र एव भुवना भुवनानि भूतजातानि सर्वान् लोकान् व्यख्यः विशेषेण पश्यसि पशुं न पशुमिव गोपाः गवां पालयिता । चक्षेः छान्दसे लुङि 'अस्यतिवक्तिख्यातिभ्योङ्' इत्यङ् । इर्यः इराऽन्नं हविरात्मकं तत्र साधुस्तदर्हो वा । परिज्मा

गातुं यूयं पात स्वस्तिभिस्सदा नः।
त्वमग्ने शोचिषा शोशुचान आ
रोदसी अपृणा जायमानः। त्वं दे-
वाꣳ अभिशस्तेरमुञ्चो वैश्वानर जा-

भिरिति स्वस्ति-भिः। सदा। नः। [6]त्वम्। अग्ने। शोचिषा। शोशुचानः। एति। रोदसी इति। अपृणाः। जायमानः। त्वम्। देवान्। अभिशस्तेरित्यभि-शस्तेः। अमुञ्चः। वैश्वानर।

---

सर्वतो गन्ता। निपातोयं मनिन्प्रत्ययान्तः। यद्यस्मादेवं तस्मात् ब्रह्मणे हविरात्मनेन्नाय यागात्मने वा परिबृढाय कर्मणे गातुं मार्गं विन्द लभस्व हविः प्राप्तुं मार्गानाप्नुहि, पुनःपुनर्जातेष्टिं प्रवर्तयेति भावः। किञ्च—युष्माकमेवार्थे सदा नोस्मान्यूयं पात रक्षत स्वस्तिभिरविनाशैः, अविनाशान्प्रापय्यास्मान् पातेति। पूजार्थमेकस्मिन् बहुवचनम्॥

[6]त्रिहविष्याद्यस्य वैश्वानरस्य याज्या—त्वमग्न इति त्रिष्टुप्॥ हे अग्ने वैश्वानर जातवेदः जातानां वेदितः त्वं शोचिषा दीप्त्या शोशुचानः भृशं दीप्यमानः अत एव रोदसी द्यावापृथिव्यौ जायमान एवापृणा आपूरयसि, शोचिषा आपालयसि वा। पृ पालनपूरणयोः, छान्दसे लङि प्वादित्वाद्ध्रस्वः। शुचेर्यङ्लुगन्ताद्व्यत्ययेनात्मनेपदम्, 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। किञ्च—त्वमेव देवानृत्विजः अभिशस्तेः पापादमुञ्चः मुञ्चसि महित्वा मह-

तवेदो महित्वा । अस्माकमग्ने म-
घवत्सु धारयानामि क्षत्रमजरꣳ
सुवीर्यम् । वयं जयेम शतिनꣳ
सहस्रिणं वैश्वानर ॥ ४८ ॥ वाज-

जातवेद इति जात-वेदः । महित्वेति महि त्वा । ⁷अस्माकम् । अग्ने । मघवत्स्विति मघवत्-सु । धारय । अनामि । क्षत्रम् । अजरम् । सुवीर्यमिति सु-वीर्यम् । वयम् । जयेम । शतिनम् । सहस्रिणम् । वैश्वानर ॥ ४८ ॥ वाजम् । अग्ने । तव ।

---

स्वेन माहात्म्येन । तृतीयाया आकारादेशः । यद्वा—महिम्नः मकारनकारयोः तकारवकारौ वादेशौ भवतः, उदात्तनिवृत्तिस्वरेण तृतीयाया उदात्तत्वम् । शंस स्तुतौ अभिपूर्वोऽवद्यवदने वर्तते, क्तिनि 'तादौ च' इति गतेः प्रकृतिस्वरत्वम्, स च 'उपसर्गाश्चाभिवर्जम्' इत्यन्तोदात्तः । स त्वमभिशस्तेर्मुञ्चेति ॥

⁷"वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वा'* इत्यस्य याज्या—अस्माकमिति जगती ॥ हे अग्ने वैश्वानर अस्माकं पुत्रादीन् प्रथमं तावद्धनवतः कुरु, ततो मघवत्सु धनवत्सु कृतेषु धारय स्थापय क्षत्रं बलं अनामि अनमनशीलम् । ग्रह्यादिलक्षणो णिनिः । अजरमविनाशं सुवीर्यमनभिभवनीयपुत्रादिपुरुषकर्मकम् । 'नञो जरमरमित्रमृताः' 'वीरवीर्यौ च' इत्येतयो-

---

*सं. २-२-६.

मग्ने तवोतिभिः । वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः । इतो जातो विश्वमि-

ऊतिभिरित्यूति-भिः । [8]वैश्वानरस्य । सुमताविति सु-मतौ । स्याम । राजा । हिकम् । भुवनानाम् । अभिश्रीरित्यभि-श्रीः । इतः । जातः । विश्वम् । इदम् । वीति । चष्टे । वैश्वानरः । यतते ।

रुत्तरपदाद्युदात्तत्वम् । किञ्च—वयं जयेम शतिनं शतपोषवन्तं सहस्रिणं सहस्रपोषवन्तं च वाजमन्नं तवोतिभिः रक्षणैः रक्षाविशेषैः तृप्तिविशेषैर्वा । क्तिन उदात्तत्वमुक्तम् । हे अग्ने अञ्जनादिगुण ॥

[8]'वैश्वानरं द्वादशकपालं निर्वपेत्सनिमेष्यन्'* इत्यस्य याज्या—वैश्वानरस्य सुमताविति त्रिष्टुप् ॥ वैश्वानरस्य सुमतौ कल्याणानुग्रहबुद्धौ स्याम भवेम । 'मन्क्तिन्व्याख्यान' इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—शोभनमननके मनसि स्याम । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । वैश्वानरो विशेष्यते—हिकमिति । हेरर्थे पादपूरणार्थे वा । राजा यस्सर्वभुवनानां भूतजातानामभिश्रीराभिमुख्येनाश्रयणीयः, अभिमतश्रीर्वा । इतो हेतोर्जातमात्र एवायं विश्वं भुवनमिदं विचष्टे विशेषेण पश्यति । सूर्येण च यतते सूर्येण सङ्गतो वर्तते । 'उद्यन्तं वावादित्यमग्निरनु समारोहति'† इति दिवादित्येन सङ्गच्छते । य इत्थं महात्मा तस्य सुमतौ स्याम यथास्मभ्यं दानकामाः प्रजास्स्युरिति ॥

*सं. २-२-६. †ब्रा. २-१-२.

दं वि चष्टे वैश्वानरो यतते सूर्येण। अवं ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः। क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेनांसि शिश्रथः कृतानि। उदुत्तमं वरुण

सूर्येण। [9]अवेति। ते। हेडः। वरुण। नमोभिरिति नमः—भिः। अवेति। यज्ञेभिः। ईमहे। हविर्भिरिति हविः—भिः। क्षयन्न्। अस्मभ्यमित्यस्म—भ्यम्। असुर। प्रचेत इति प्र—चेतः। राजन्न्। एनांसि। शिश्रथः। कृतानि। [10]उदिति। उत्त-

[9]अथ त्रिहविषि मध्यमस्य वारुणस्य पुरोनुवाक्या—अवते हेड इति त्रिष्टुप् ॥ हे वरुण ते तव हेडः क्रोधमभिशस्त्यादिहेतुं नमोभिर्नमस्कारैरवेमहे अपनयामः। ई गतौ, शपो लुक्। यज्ञैश्च पूजामन्त्रैश्च हविर्भिः पुरोडाशादिभिश्चावेमहे अपनयामः। ततस्त्वमस्मभ्यमस्मदर्थमेव हे क्षयन्निवसन् अस्मदुपकारायैव यतमान। क्षियतेर्व्यत्ययेन शप्, क्षयतिरेव वा निवासकर्मा, षाष्ठिकमामन्त्रिताद्युदात्तत्वम्। अस्मदीयानि कृतान्येनांसि पापानि शिश्रथः श्रथय हे असुर रक्षसां निरसितः प्रचेतः प्रकृष्टमते राजन् सदा दीप्यमान ॥

[10]तत्रैव याज्या—उदुत्तममिति त्रिष्टुप् ॥ हे वरुण उत्तमं पाशमस्मत्सकाशादुच्छ्रथाय ऊर्ध्वमुच्छ्रथय। अधममवश्रथय अध-

पाशमस्मदवाधमं वि मध्यमः श्रं-
थाय । अथा वयमादित्य ॥ ४१ ॥
व्रते तवानागसो अदितये स्याम ।
दधिक्रावृण्णो अकारिषं जिष्णोर-

ममित्युत्—तमम् । वरुण । पाशम् । अस्मत् ।
अवेति । अधमम् । वीति । मध्यमम् । श्रथाय ।
अथ । वयम् । आदित्य ॥ ४१ ॥ व्रते । तव ।
अनागसः । अदितये । स्याम । [11]दधिक्रावृण्ण

स्तादवकृष्य नाशय । मध्यमं विश्रथय विष्वक्कृत्य नाशय । श्रथ दौर्बल्ये चुरादिरदन्तः, वर्णव्यत्ययेनोपान्त्यस्य दीर्घत्वम् । अत्र केचित्—उद्भूतादिभूतमध्यस्थशक्तितया धर्मपाशानां त्रैविध्यमाहुः । उत्तमाधममध्यमदेहप्रभवतया त्वन्ये । ऊर्ध्वाधोमध्यमगतिहेतुत्वेनापरे । अथानन्तरं वयमनागसः विमुक्तसर्वपापाः तव व्रते कर्मणि स्याम योग्या भवेम । अदितये अखण्डितत्वाय अदीनत्वाय वा स्यामेति । हे आदित्य अदितेः पुत्र । यद्वा—इत्थमनागसस्सन्तो वयमदितये अनभिशस्तये स्याम । किमर्थं? तव व्रते कर्मणि कर्मार्थं योग्यतार्थमिति । अनागस इति बहुव्रीहौ व्यत्ययेन , 'नञ्सुभ्याम्' इति न प्रवर्तते, लुप्तमत्वर्थीयो वा अनागस्विन इति ॥

[11]अथ तत्रैव त्रिहविषः उत्तमस्य 'दधिक्रावृण्णे चरुम्'* इत्यस्य

*सं. २-२-५.

श्वस्य वाजिनः । सुरभि नो मुखा करत्प्रण आयूꣳषि तारिषत् । आ

इति दधि–क्रावूण्णः । अकारिषम् । जिष्णोः । अश्वस्य । वाजिनः । सुरभि । नः । मुखा । करत् । प्रेति । नः । आयूꣳषि । तारिषत् । [12]एति ।

पुरोनुवाक्या—दधिक्रावूण्ण इत्यनुष्टुप् ॥ दधीनि धारणसमर्थानि हवींषि काष्ठानि वा । दधातेः 'आदृगमहन' इति किन् प्रत्ययः । तानि क्रामति गच्छतीति दधिक्रावा अग्निः । 'अन्येभ्योपि दृश्यते' इति क्रमेर्वनिप्, 'विड्वनोरनुनासिकस्यात्' इत्यात्त्वं, कृदुत्तरपदप्रकृतिस्वरत्वम् । जिष्णोर्जयशीलस्याश्वस्य व्यापकस्याश्वरूपस्य वा, 'अश्वो रूपं कृत्वा'* इति दर्शनात् । वाजिनोन्नवतो वेगवतो वा । ईदृशस्याग्नेरहमकार्षं करोमि, कर्मकरस्स्यामिति यावत् । करोतेश्छान्दसो लुङ्, छान्दस इकारोपजनः । स च नोस्माकं मुखा मुखानि सुरभि सुरभीणि अस्मत्सुकृतसमृद्ध्या समासादितसौरभ्याणि करत्करोतु । करोतेर्लेटि व्यत्ययेन शप् । शपो वा लुकि लेटोडागमः । छान्दसे वा लिङि 'कृमृदृरुहिभ्यः' इत्यङ् । 'ऋदृशोङि गुणः,' 'अमाङ्योगेपि' इत्यडभावः । द्वितीयाबहुवचनस्य 'सुपां सुलुक्' इति लुगाकारौ । नोस्माकमायूंषि च प्रतारिषत् प्रवर्धयतु । तारयतेर्लेटि अडागमः; 'सिब्बहुळं लेटि' इति सिप् । 'उपसर्गाद्बहुळम्' इति नसो णत्वम् ॥

[12]तत्रैव याज्या—आ दधिक्रा इति त्रिष्टुप् ॥ दधीनि क्राम-

*ब्रा. ३-८-१२

दधिक्राश्शवसा पञ्च कृष्टीस्सूर्य इव ज्योतिषापस्ततान । सहस्रसाश्शतसा वाज्यर्वा पृणक्तु मध्वा

दधिक्रा इति दधि-क्राः । शवसा । पञ्च । कृष्टीः । सूर्यः । इव । ज्योतिषा । अपः । ततान । सहस्रसा इति सहस्र-साः । शतसा इति शत-साः । वाजी । अर्वा । पृणक्तु । मध्वा । समिति ।

---

तीति 'जनसनखन' इति विट्, पूर्ववदात्वम् । ईदृशोग्निः पञ्च कृष्टीर्मनुष्यान् चतुरो वर्णान् निषादपञ्चमान् शवसा आततान अन्नवत्त्वेन बलवत्त्वेन वा सुखवतीः करोति । छान्दसो लिट् । किञ्च—सूर्य इव ज्योतिषा दीप्त्या अपः कर्माणि प्रजानामाततान व्यक्तीचकार । अप एव वा ज्योतिषा दीप्त्या ततान । 'ऊडिदम्' इत्यद्भयो विभक्तिरुदात्ता । किञ्च—सहस्रसाश्शतसाश्च बहुतरस्य बहुतमस्य प्रधानस्य संविभक्ता दाता वा भक्तेभ्यस्सहस्रं शतं वा सनोति ददातीति । तेनैव विट्, तेनैव चात्वम् । वाजी वेगवान् अन्नवान्वा । अर्वा अरणशीलः । अर्तेः 'अन्येभ्योपि दृश्यते' इति वनिप् । एवं महाभागोग्निः इमा इमान्यस्मदीयानि वचांसि मध्वा मधुसदृशेन शवसा रसेन सम्पृणक्तु संसृजतु । ततो मधुराणि शवसा सुखानि स्वयमेव श्रोष्यतीति भावः । अस्माकं श्रोतव्यानि वचनानि श्रुत्वा वचनार्थान् करोतु । अयञ्चाभिशंसनादस्मान्मुञ्चत्वित्याशास्महे ॥

सम्<u>इ</u>मा वचा॑ꣳसि । <u>अ</u>ग्निर्मू॒र्धा भुव॑ः ।
मरु॑तो॒ यद्ध॑ वो॒ दि॒वस्सु॑म्<u>ना</u>-

इ॒मा । वचा॑ꣳसि । [13]<u>अ</u>ग्निः । मू॒र्धा । [14]भुव॑ः ।
[15]मरु॑तः । यत् । ह॒ । व॒ः । दि॒वः । सु॒म्नाय॑न्त॒

[13]'आग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन्'* इति द्विहविष्कस्याग्नेयस्य याज्यानुवाक्ये—अग्निर्मूर्धा दिवः ककुत्, भुवो यज्ञस्येति गायत्रीत्रिष्टुभौ ॥ एतयोराद्या 'उपप्रयन्तः'† इत्यत्र व्याख्याता । अन्या त्वग्निकाण्डे व्याख्यास्यते, यत्राम्नायते 'अग्निर्मूर्धा'‡ इत्यत्रानुवाके । इह तु प्रतीके अनयोर्गृह्येते। अयमग्निर्देवो दिवो मूर्धा प्रधानभूतः, पृथिव्याश्च ककुत् प्रधानः पतिः, अपां रेतांसि कार्यभूतानि भुवनानि जिन्वति प्रीणयतीति प्रथमा ॥

[14]भुवो यज्ञस्य रजस उदकस्य च नेता प्रापयिता भवसि तदानीम् । कदा ? यत्र शिवाभिः नियुद्भिरश्वैस्सचसे सम्बध्यसे । मरुतामश्वा नियुतस्तद्वन्तो वायव इह गृह्यन्ते । तदानीं यज्ञं च प्रवर्तयसि उदकं चावपातयसि । दिवि च मूर्धानं प्रधानभूतं यज्ञं च दधिषे स्थापयसि सुवर्षां स्वर्गिणां सम्भक्तारम् । स त्वं हे अग्ने तव जिह्वां हविषो वोढ्रीं चकृषे कुरुष्वेति द्वितीया ॥

[15]'वैश्वानरं द्वादशकपालं निर्वपेन्मारुतं सप्तकपालं ग्रामकामः'* इति द्विहविषो मारुतस्य पुरोनुवाक्या—मरुतो यद्ध वो दिव इति गायत्री ॥ हे मरुतः यद्वो युष्मान् सुम्नायन्तस्सुखमिच्छन्तः । 'देव-

*सं. २-२-५.　　†सं. १-५-५४.　　‡सं. ४-४-४.

यन्तो हवामहे । आ तू नः ॥ ५० ॥ उप गन्तन । या वश्श- र्मं शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताधि । अस्मभ्यं तानि

इति सुम्न-यन्तः । हवामहे । एति । तु । नः ॥ ५० ॥ उपेति । गन्तन । [16]या । वः । शर्मं । शशमानाय । सन्ति । त्रिधातूनीति त्रि-धातूनि । दाशुषे । यच्छत । अधि । अस्मभ्यमित्यस्म-भ्यम् । तानि । मरुतः । वीति ।

---

सुम्नयोः' इत्यात्वम् । दिवो द्युलोकात् हवामहे आह्वयामः । पूर्ववत्सम्प्रसारणम् । हूयमाना नोस्मानुपगन्तन आत्मनो विशेषवत्त्वं ख्यापयन्तु । तुशब्दो विनिवर्तकः, तिष्ठन्त्वन्ये अस्मांस्तूमागच्छतेति । 'अन्येभ्योपि दृश्यते' इति सांहितिको दीर्घः, गमेर्लेटि शपो लुक्, 'तप्तनप्तनथनाश्च' इति तनादेशः । ह इति पादपूरणे निश्चये वा ॥

[16]तत्रैव याज्या—या व इति त्रिष्टुप् ॥ हे मरुतः वः युष्माकं या यानि शर्म शर्माणि सुखानि गृहाणि वा । पूर्वत्र 'शेश्छन्दसि' इति शेर्लोपः । उत्तरत्र 'सुपां सुलुक्' इति लुक् । त्रिधातूनि पृथिव्यादित्रिस्थानस्थितानि शशमानाय युष्मान् भजमानाय तदर्थं तस्मै दातुं सम्पादितानि यानि सन्ति । शश प्लुतगतौ, ताच्छीलिकश्चानश् । यानि च दाशुषे हविर्दत्तवते ददते वा यजमानायाधियच्छत अधिकं प्रयच्छत । यच्छतेश्छान्दसे लङि अडभावः । 'दाश्वान्

मरुतो वि यन्त रयिं नो धत्त वृष-
णस्सुवीरम् । अदितिर्न उरुष्यत्व-
दितिश्शर्म यच्छतु । अदितिः पात्वꣳ-
हसः । महीमूषु मातरꣳ सुव्रताना-

यन्त । रयिम् । नः । धत्त । वृषणः । सुवीरमिति
सु—वीरम् । [17]अदितिः । नः । उरुष्यतु । अदितिः ।
शर्म । यच्छतु । अदितिः । पातु । अꣳहसः ।
[18]महीम् । उ । स्विति । मातरम् । सुव्रतानामिति

---

साश्वान्' इति दाश्वान्निपात्यते । हे मरुतः तानि शर्माणि अस्मभ्यं वियन्त विशेषेण यच्छत विविधा वा दत्त । यच्छतेर्लेटि शपो लुक् । किञ्च—रयिं धनं च नोस्मभ्यं धत्त दत्त सुवीरं शोभनापत्यादिकम् । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । हे वृषणः कामानां वर्षितारः । 'कनिन्युवृषि' इति निपात्यते, 'वा षपूर्वस्य निगमे' इति दीर्घाभावः ॥

[17]'आदित्यं चरुं निर्वपेत्सङ्ग्राममुपप्रयास्यन्'* इत्यत्र पुरोनुवाक्या—अदितिर्न इति गायत्री ॥ अदितिरस्मानुरुष्यतु शर्म सुखं चादितिर्नो यच्छतु ददातु । अंहसः बुद्ध्यबुद्धिकृतात्पापाच्चास्मानदितिः पातु निवारयतु ॥

[18]तत्रैव याज्या—महीमूष्विति त्रिष्टुप् ॥ महीं महतीं महनीयां वा मातरं मातृस्थानीयां वा सुव्रतानां शोभनकर्मणां पुरुषाणाम् ।

---

*स. २-२-६.

मृतस्य पत्नीमवसे हुवेम । तुविक्ष-
त्रामजरन्तीमुरूचीꣳ सुशर्माणम-
दितिꣳ सुप्रणीतिम् । सुत्रामाणं
पृथिवीं द्यामनेहसꣳ सुशर्माणमदि-

सु-व्रतानाम् । ऋतस्य । पत्नीम् । अवसे । हुवेम ।
तुविक्षत्रामिति तुवि-क्षत्राम् । अजरन्तीम् । उरू-
चीम् । सुशर्माणमिति सु-शर्माणम् । अदितिम् ।
सुप्रणीतिमिति सु-प्रणीतिम् । [19]सुत्रामाणमिति
सु-त्रामाणम् । पृथिवीम् । द्याम् । अनेहसम् ।

---

'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । ऋतस्य सत्यस्य यज्ञस्य वा पत्नीं पालयित्रीं तुविक्षत्रां बहुलां बहुधनां वा । त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् । अजरन्तीमविनाशां उरूचीमुरु महतोञ्चतीं, बहुप्रकारगतिं वा । 'चौ' इति पूर्वपदस्य दीर्घत्वं, उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । सुशर्माणं सुसुखाम् । 'सोर्मनसी' इत्युत्तरपदाद्युदात्तत्वम् । अदितिमखण्डनीयां सुप्रणीतिं सुखेन शर्मणां प्रणेत्रीम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । तत्र च 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । ईदृशीं महीं देवीमवसे रक्षणाय तस्यास्तर्पणाय वा हुवेम सुष्ठु आह्वयामः । व्यत्ययेन शः । पूर्ववत्सम्प्रसारणम्, 'सुञः' इति सोस्संहितायां षत्वम् । उ इति पादपूरणे । 'अन्येषामपि दृश्यते' इति तस्य संहितायां दीर्घत्वम् ॥

[19]पुनरपि तत्रैव याज्याविकल्पः—सुत्रामाणमिति त्रिष्टुप् ॥

तिँ सुप्रणीतिम् । दैवीं नावँ स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये । इमाँ सु नावमारुहँ शतारित्राँ शतस्फ्याम् ।

सुशर्माणमिति सु–शर्माणम् । अदितिम् । सुप्रणीतिमिति सु–प्रणीतिम् । दैवीम् । नावम् । स्वरित्रामिति सु–अरित्राम् । अनागसम् । अस्रवन्तीम् । एति । रुहेम । स्वस्तये । [20]इमाम् । स्विति । नावम् । एति । अरुहम् । शतारित्रामिति शत–

सुत्रामाणं सुष्ठु त्रात्रीं रक्षित्रीम् । 'आतो मनिन्' इति मनिन् । पृथिवीं विस्तीर्णाम् । प्रथेष्षिवन्, सम्प्रसारणम् । द्यां द्युमतीमनेहसमपापाम् । पूर्ववदन्तोदात्तत्वम् । सुशर्माणमित्यादि गतम् । दैवीं देवानामियम् । 'देवाद्यञञौ' इत्यञ् । नावं नौसदृशीं स्वरित्रां शोभनारित्राम् । पूर्ववदन्तोदात्तत्वम् । अरित्रंनाम नौस्तम्भनदण्डः । अनागसमागो दोषः । पूर्ववत्प्रकृतिस्वरत्वम् । अस्रवन्तीमच्छिद्रां स्वस्तयेऽविनाशायारुहेमारुह्याम । 'लिङ्याशिष्यङ्' 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् ॥

[20]पुनरपि तत्रैव गायत्रीत्वात्पुरोनुवाक्याविकल्पः—इमामिति ॥ इमां पृथिवीं नावं नौस्थानीयां शतारित्रां शतस्फ्यां बहुतरणदण्डां अच्छिद्रामरन्ध्राम् । अच्छिद्रामिति तत्पुरुषः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । पारयिष्णुं पारप्रापणसमर्थाम् । पार तीर कर्मसमाप्तौ,

अच्छिद्रां पारयिष्णुम् ॥ ५१ ॥

अरित्राम् । शतस्फ्यामिति शत—स्फ्याम् । अच्छिद्राम् । पारयिष्णुम् ॥ ५१ ॥

दिवा स सहस्रिणं वैश्वानरादित्य तू नौनेहसꣳ सुशर्माणमेकान्न विꣳशतिश्च ॥ ११ ॥

देवासुराः परा भूमिर्भूमिरुपप्रयन्तस्सं पश्यामि यज्ञस्सं पश्याम्यग्निहोत्रं मम नाम वैश्वानर एकादश ॥ ११ ॥

देवासुराः क्रुद्धस्सं पश्यामि सं पश्यामि नक्तमुप गन्तनैकपञ्चाशत्॥५१॥

देवासुराः पारयिष्णुम् ॥

हरिः ओम् तत्सत् ॥

---

'णेश्छन्दसि' इतीष्णुच् । ईदृशीं पृथिवीं देवीं स्वारुहं सुष्ठु आरोहामि । छान्दसे लुङि 'कृमृदृरुहिभ्यः' इत्यङ् ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये प्रथमकाण्डे पञ्चमप्रपाठके एकादशोनुवाकः.

समाप्तश्च प्रपाठकः.

षष्ठः प्रपाठकः.

हरिः ओम् ॥ सं त्वा सिञ्चामि यजुषा प्रजामायुर्धनं च। बृहस्पतिप्रसूतो यजमान इह मा रिषत् ।

[1]समिति । त्वा । सिञ्चामि । यजुषा । प्रजामिति प्र—जाम् । आयुः । धनम् । च । बृहस्पतिप्रसूत इति बृहस्पति—प्रसूतः । यजमानः । इह । मा ।

## अथ षष्ठः प्रपाठकः.

[1]अथ प्राजापत्यमेव काण्डं याजमानम् । तत्राज्यसान्नाययोस्स्कन्नस्य स्वधां सम्भरति—सं त्वेत्यनुष्टुभा ॥ संसिञ्चामि सह सिञ्चामि हे स्कन्न त्वां प्रजामायुर्धनञ्च प्रजादिभिस्सह त्वामेकत्र सिञ्चामि यजुषानेन मन्त्रेण । यजनसाधनं यजुः । अपेतस्कन्नत्वदोषं प्रजादिसाधनं त्वामनेन सेचनेन करोमीत्यर्थः । बृहस्पतिप्रसूतः स्वयमेव बृहस्पतिना प्रसूतोनुज्ञातोहं करोमि, न पुनर्यथारुचि* । तस्माद्यजमान इहास्मिन् स्कन्नापराधे मा रिषत् मा बाधि । रिष्यतेश्छान्दसोङ् पुषादिर्वा कर्तव्यः† । बृहतां पतिः बृहस्पतिः । 'तद्बृहतोः करपत्योः' इति सुट् । तेन प्रसूत इति । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । तत्र च 'उभे वनस्पत्यादिषु युग-

*म—र्यथाकुपितः

†अत्र " इह केचित् रिष हिंसायां चेति पठन्ति. 'न रिष्यति न व्यथते' इत्यादयश्च प्रयोगा दृश्यन्ते । आत्रेयमैत्रेयादयस्तु न पेठुः " इति दिवाद्यन्तर्गतरुषधातुप्रकरणगता धातुवृत्तिरनुसन्धेया ॥

आज्यमसि सत्यमसि सत्यस्याध्य-
क्षमसि हविरसि वैश्वानरं वैश्वदे-
रिषत्। [2–4]आज्यम्। असि। सत्यम्। असि। सत्यस्य।
अध्यक्षमित्यधि-अक्षम्। असि। हविः। असि।
वैश्वानरम्। वैश्वदेवमिति वैश्व-देवम्। उत्पूतशुष्म-

पत्' इति पूर्वोत्तरयोर्युगपत्प्रकृतिस्वरत्वम्। बृहच्छब्दः प्रायेण समासे आद्युदात्तः, अन्यत्रान्तोदात्तः॥

[2–4]आज्यमवेक्षते—आज्यमसीति यजुर्भिः॥ अजेरञ्जेर्वा [आङ्पूर्वादजेरञ्जेर्वा क्यप्] अग्नेः प्रापणमसि प्रियतममिति यावत्। सत्यमसि सत्यस्य फलमसि। सद्विद्यमानं फलमसि [लं वा] तदर्हति। 'छन्दसि च' इति यः। अमोघमुच्यते। ब्रह्म वा सत्यम्। तदेवासि, विश्वमूलत्वात्। सत्यस्याध्यक्षमसि सत्यं त्वयाध्यक्ष्यते। सत्यं ब्रह्म अध्यक्षस्स्वामी। सत्यस्य वा प्रत्यक्षरूपं त्वमसि। अक्षेष्वधि अध्यक्षं, अक्षाणीन्द्रियाणि। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। हविरसि हविषां प्रधानमसि। सर्वप्रियतमत्वेन प्राधान्यं दर्शयितुमाह—वैश्वानरं विश्वेषां नराणां सम्बन्धीष्टसाधनत्वेन। वैश्वदेवं विश्वेषां देवानां सम्बन्धि भोज्यत्वेन होम्यत्वेन च। उत्पूतशुष्मं उत्पवनेनोद्दीपितबलं उद्भूतबलं वा। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्, तत्रापि 'गतिरन्तरः' इति गतेः प्रकृतिस्वरत्वम्। सत्यौजाः सत्यबलं, न केवलं त्वमेव सत्यं अपि तु त्वद्बलमपि सत्यमिति भावः। छान्दसो लिङ्गव्यत्ययः। ईदृशं हविस्त्वमसीति हविषः* प्राधान्यं गम्यते॥

*क. म—हविर्भिः.

वमुत्पूतशुष्म॰ स॒त्यौजा॒स्सहो॑सि सहमा॒नम॑सि॒ सह॒स्वारा॑ती॒स्सह॑स्वारातीय॒तस्सह॑स्व॒ पृत॑ना॒स्सह॑स्व

मित्युत्पूत–शुष्मम्। स॒त्यौजा॒ इति॑ स॒त्य–ओ॒जाः।
5–6सहः। अ॒सि॒। सह॑मानम्। अ॒सि॒। सह॑स्व। अरा॑तीः।
सह॑स्व। अ॒रा॒ती॒य॒तः। सह॑स्व। पृत॑नाः। सह॑स्व।
पृ॒त॒न्य॒तः। स॒हस्र॑वीर्य॒मिति॒ स॒हस्र॑–वि॒र्य॒म्। अ॒सि॒।

5–6सहोसीत्यादिके त्रिपदे गायत्र्यौ। सहस्वारातीयत इति तृतीयः पादः। सहस्रवीर्यमसीत्यपरस्याः तृतीयः पादः। तत्र पूर्वा निरवसाना, अपरा सावसाना पृतन्यत इति॥ सहोसि अभिभवनमसि शत्रूणाम्। सहमानमसि सदा शत्रूनभिभूय वर्तमानमसि। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। तादृक्त्वं सहस्वारातीः अस्मदमित्रानभिभव ये धनानां दातारो न भवन्ति। रातेः कर्तरि क्तिन्, नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम्। अरातीयतश्च सहस्व येऽस्माकमरातिमात्मानमिच्छन्ति अस्मान्वारातिभूतानात्मन इच्छन्ति तानपि सर्वानभिभव बलात्कृत्य नाशय। प्रथमे पक्षे 'छन्दसि परेच्छायामपि' इति क्यच्, सर्वत्र 'शतुरनुमः' इति विभक्तेरुदात्तत्वम्। आख्यातस्य पादादित्वान्निघाताभावः, समानवाक्ये पदात्परत्वाभावाद्वा। रातिः दाता। सहस्व पृतनाः अस्मद्विरोधिनः सर्वान् सङ्ग्रामानभिभव। पृतन्यतस्सङ्ग्रामं कर्तुमिच्छतश्च सर्वानभिभव। क्यचि 'कव्यध्वरपृतनस्य' इति लोपः, पूर्ववद्विभक्त्युदात्तत्वम्। युयुत्सवस्सेनाः पृतनाः। किं बहुना—सहस्रवीर्यं बहुप्रकारशक्तिकमसि, अतस्संस्कर्तुमर्हसीति॥

पृतन्यतः । सहस्रवीर्यमसि तन्मा जिन्वाज्यस्याज्यमसि सत्यस्य सत्यमसि सत्यायुः ॥ १ ॥ असि सत्यशुष्ममसि सत्येन त्वाभि घार-

7—13तत् । मा । जिन्व । आज्यस्य । आज्यम् । असि । सत्यस्य । सत्यम् । असि । सत्यायुरिति सत्य-आयुः ॥१॥ असि । सत्यशुष्ममिति सत्य-शुष्मम् । असि । सत्येन । त्वा । अभीति । घारयामि । तस्य ।

7—13अतः पराणि यजूंषि—तत्ताद्दक्स्वभावस्त्वं मां जिन्व प्रीणय । हे आज्य आज्यस्याप्याज्यमसि, यल्लौकिकमाज्यं तस्मादपि त्वमिष्टसाधनमाज्यं वैदिकमसि, त्वमिव यजमानस्य;* त्वत्तो हि सर्वमाज्यमुत्पाद्यते वर्षादिद्वारेण । सत्यादपि सत्यमसि, कदाचिदपि फलव्यभिचाराभावात् ; यद्वा—सत्यान्तरस्यापि सत्यापयितृत्वाद्यागद्वारेण ; त्वत्तोधिको नास्तीति भावः । सत्यायुरसि सत्यभूतमस्मिन्नायुरिति सत्यायुः । सत्यस्य वा आयुस्त्वमसि, त्वया सत्यं जीवतीति । दासीभारादिर्द्रष्टव्यः । सत्यशुष्मं सत्यस्य शुष्मं बलमसि । तस्त्वां सत्येन चक्षुषाभिघारयामि उपरि सिञ्चामि, ईषद्दृष्ट्यावेक्षे इति । 'चक्षुर्वै सत्यम्'† इति ब्राह्मणम् । 'ब्रह्मवादिनो वदन्ति । यदाज्येनान्यानि हवींष्यभिघार-

*त्वं यथा यागसाधनद्वारेण यजमानस्येष्टसाधनं, तथा लौकिकाज्यादपि त्वमेव वैदिकमाज्यं लोकानामिष्टसाधनं, वर्षादिद्वारेण सर्वलौकिकाज्योत्पादकत्वादिति भावः.

†ब्रा. ३-३-५.

यामि तस्यं ते भक्षीय पञ्चानां त्वा वातानां यन्त्रायं धर्त्रायं गृह्णामि पञ्चानां त्वर्तूनां यन्त्रायं धर्त्रायं गृह्णामि पञ्चानां त्वा दिशां यन्त्रायं धर्त्रायं

ते । भक्षीय । [14—17]पञ्चानाम् । त्वा । वातानाम् । यन्त्रायं । धर्त्रायं । गृह्णामि । पञ्चानाम् । त्वा । ऋतूनाम् । यन्त्रायं । धर्त्रायं । गृह्णामि । पञ्चानाम् । त्वा । दिशाम् । यन्त्रायं । धर्त्रायं । गृह्णामि ।

---

यति '* इत्यादि च । तस्य ते तथा ईक्षितस्य ते तव भक्षीय अहं भजे, त्वया वियुक्तो मा भूवम् । पूर्ववत्कर्मण-स्सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी ॥

[14—17]अथाज्यग्रहानुमन्त्रणमन्त्राः यजूंषि तत्र चतुर्भिः जौहव-मनुमन्त्रयते—पञ्चानां त्वेति ॥ पञ्चानां प्राच्याद्यूर्ध्वपर्यन्तपञ्चदि-क्प्रभवाणां पुरोवातादीनां वातानां यन्त्राय यमनाय स्वस्वाधारे-ष्वविचलनस्थापनाय धर्त्राय जगद्धारणाय जगद्धारणकुशलाय वा त्वां गृह्णामि हे आज्य । एवं सर्वत्र । पञ्चानामित्यत्र 'नाम-न्यतरस्याम्' इति नाम उदात्तत्वम् । पञ्चानामृतूनाम् ; हेमन्त-शिशिरयोश्शीतत्वसामान्यादेकत्वं विवक्षित्वोच्यते । ब्राह्मणं च भवति 'पञ्च वा ऋतव आर्तवाः पञ्च'† इति । पूर्ववदुभय-त्रापि नाम उदात्तत्वम् । पञ्चानां त्वा दिशां प्राच्यादीनामू-

---

*ब्रा. ३-३-५. †सं. ७-२-६,

गृह्णामि पञ्चानां त्वा पञ्चजनानां
यन्त्राय धर्त्राय गृह्णामि चरोस्त्वा
पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामि
ब्रह्मणस्त्वा तेजसे यन्त्राय धर्त्राय
गृह्णामि क्षत्रस्य त्वौजसे यन्त्राय

पञ्चानाम् । त्वा । पञ्चजनानामिति पञ्च-जनानाम् । यन्त्राय । धर्त्राय । गृह्णामि । [18—25] चरोः । त्वा । पञ्चबिलस्येति पञ्च-बिलस्य । यन्त्राय । धर्त्राय । गृह्णामि । ब्रह्मणः । त्वा । तेजसे । यन्त्राय । धर्त्राय । गृह्णामि । क्षत्रस्य । त्वा । ओजसे ।

---

ध्वान्तानाम् । 'सावेकाचः' इति दिग्भ्यो विभक्तेरुदात्तत्वम् । पञ्चानां पञ्चजनानां, देवमनुष्यासुररक्षोगन्धर्वाणां पञ्चजना इत्याख्या । 'दिक्सङ्ख्ये संज्ञायाम्' इति समासः । सप्तर्षिवत्प्रत्येकं संज्ञात्वात्पञ्चानामिति विशेष्यते ॥

[18—25] उत्तरैरष्टाभिरौपभृतमनुमन्त्रयते—चरोः पञ्चबिलस्य आकाशस्य, सर्वेषां चरणाधारत्वाच्चरुः, दिशोस्य बिलानि पञ्च । ब्रह्मणः ब्रह्मणां, जातावेकवचनम् । तेजसे तेजसः । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति चतुर्थी । ब्राह्मणानां तेजसो यन्त्राय यत्यै धर्त्राय धृत्यै गृह्णामि । क्षत्रस्य क्षत्रियाणामोजसे ओजसो बलस्य । विशे विशां वैश्यानां पुष्ट्या इति शेषः, नृणां वा । यन्त्रायेत्यादि गतम् । सुवीर्याय सुष्ठुवीर्यत्वाय । 'वीरवीर्यौ

॥ २ ॥ धर्त्राय गृह्णामि विशे त्वा यन्त्राय धर्त्राय गृह्णामि सुवीर्याय त्वा गृह्णामि सुप्रजास्त्वाय त्वा गृह्णामि रायस्पोषाय त्वा गृह्णामि ब्रह्मवर्चसाय त्वा गृह्णामि भूरस्माकꣳ हविर्देवानामाशिषो यजमानस्य

यन्त्राय ॥ २ ॥ धर्त्राय । गृह्णामि । विशे । त्वा । यन्त्राय । धर्त्राय । गृह्णामि । सुवीर्यायेति सु-वीर्याय । त्वा । गृह्णामि । सुप्रजास्त्वायेति सुप्रजाः—त्वाय । त्वा । गृह्णामि । रायः । पोषाय । त्वा । गृह्णामि । ब्रह्मवर्चसायेति ब्रह्म—वर्चसाय । त्वा । गृह्णामि । 26—27भूः । अस्माकम् । हविः । देवानाम् । आशि-

---

च' इति बहुव्रीहिस्वरः प्रवर्तते, तत्पुरुषो वा 'परादिश्छन्दसि बहुलम्' इति । सुप्रजास्त्वाय यजमानस्य सर्वस्यैव वा शोभनापत्यत्वाय । 'नित्यमसिच्प्रजामेधयोः' इत्यसिच्समासान्तः, 'ऊडिदम्' इति षष्ठ्या उदात्तत्वम्, 'षष्ठ्याः पतिपुत्र' इति सत्वम् । रायो धनस्य पोषाय पुष्ट्यै । ब्रह्मवर्चसाय ब्रह्मबलाय । 'ब्रह्महस्तिभ्यां वर्चसः' इत्यच्समासान्तः ॥

26—27शेषेण ध्रौवमनुमन्त्रयते—भूरस्माकमिति ॥ अस्माकमेव सम्बन्धी भव, मास्मान् हासीः, अस्माकमेव श्रेयसे भव ।

देवानां त्वा देवताभ्यो गृह्णामि का-
माय त्वा गृह्णामि ॥ ३ ॥
ध्रुवोसि ध्रुवोहꣳ संजातेषु भूयासं

ष इत्या–शिषः । यजमानस्य । देवानाम् । त्वा । देवताभ्यः । गृह्णामि । कामाय । त्वा । गृह्णामि ॥ ३ ॥

सत्यायुरोजसे यन्त्राय त्रयस्त्रिꣳशच्च ॥ १ ॥

[1–3]ध्रुवः । असि । ध्रुवः । अहम् । सजातेष्विति

---

भवतेर्लेटि शपो लुक्, 'इतश्च लोपः' 'भूसुवोस्तिङि' इति गुणाभावः । हविर्देवानां देवानां हविः भोज्यं भव पर्याप्नुहि । ब्राह्मणं च 'यावदेका देवता कामयते'* इत्यादि । आशिषो यजमानस्य या यजमानस्याशिषः प्रार्थनाः तास्सर्वा भव सर्वासां सम्पादनसमर्थं भव । देवानां त्वा देवानामेव स्वभूतं त्वा देवताभ्यो गृह्णामि । कामाय त्वा गृह्णामि हविर्भागिन्यो देवता यथा यथा कामयन्ते तत्तदनुरूपं गृह्णामि ॥

इति षष्ठे प्रथमोनुवाकः.

---

[1–3]परिधीन् परिधीयमानाननुमन्त्रयते—ध्रुवोसीति यजुर्भिः ॥ तत्र मध्यमं—ध्रुवोसि स्थिरोसि मध्यमत्वाद्वा परिधित्वे विभावाच्च (?) । अहमपि सजातेषु ध्रुवो भूयासम् । समानजन्मानस्सजा-

---

*ब्रा. ३-२-६.

धीरश्चेत्ता वसुविदुग्रोस्युग्रोहꣳ स-
जातेषु भूयासमुग्रश्चेत्ता वसुविदभि-
भूरस्यभिभूरहꣳ सजातेषु भूयास-

स-जातेषु । भूयासम् । धीरः । चेत्ता । वसुविदिति वसु-वित् । उग्रः । असि । उग्रः । अहम् । सजातेष्विति स-जातेषु । भूयासम् । उग्रः । चेत्ता । वसुविदिति वसु-वित् । अभिभूरित्यभि-भूः । असि । अभिभूरित्यभि-भूः । अहम् । सजातेष्विति स-जातेषु । भूयासम् । अभिभूरित्यभि-भूः । चेत्ता । वसुविदिति वसु-वित् ।

ताः । 'समानस्य छन्दसि' इति सभावः, 'वा जाते' इत्युत्तरपदान्तोदात्तत्वम् । धीरश्चेत्ता वसुविच्च भूयासमित्येव । धीरो धृष्टः सर्वसमर्थः । चेत्ता चेतिता ज्ञाता । छान्दस इडभावः । रथादिर्वा द्रष्टव्यः । वसुवित् धनानां लब्धा । दक्षिणम्—उग्रः उद्गूर्णोसि, उपरिष्टात्स्थितत्वात्, रुद्राणां सम्बन्धित्वाद्वा । अधृष्य इति केचित् । अहमपि सजातेषूग्रो भूयासं, यथा ते ममाप्रतिवादिनो विधेया भवन्ति । उग्रश्चेत्ता वसुविद्भूयासम्, य उग्रश्चेत्ता वसुविच्च भवति स उग्रो भूयासम्, न केवलमुग्र एव । उत्तरम्—अभिभूरसि उत्तरकालभावित्वान्नान्येन परिहास्यो भव, अभिभूरेवासि नातः परं किञ्चित्परिधीयत इति । अहमपि सजातेष्वभिभविता भूयासं शत्रूणां तेषामेव वा । किञ्च—योभिभूश्चेत्ता वसुविच्च भवति स एव भूयासं न केवलमभिभवितृत्वमात्रेण ॥

मभिभूश्चेत्ता वसुविद्युनज्मि त्वा
ब्रह्मणा दैव्येन हव्यायास्मै वोढवे
जातवेदः । इन्धानास्त्वा सुप्रजस-
स्सुवीरा ज्योग्जीवेम बलिहृतो वयं

4 युनज्मि । त्वा । ब्रह्मणा । दैव्येन । हव्याय ।
अस्मै । वोढवे । जातवेद इति जात—वेदः ।
5 इन्धानाः । त्वा । सुप्रजस इति सु—प्रजसः ।
सुवीरा इति सु—वीराः । ज्योक् । जीवेम । बलि-

---

[4]अग्निं योगेन युनक्ति—युनज्मीति द्विपदया त्रिष्टुभा ॥ हे जातवेदः जातानां वेदितः ब्रह्मणा मन्त्रेण दैव्येन देवयोग्येन । 'देवाद्यञञौ' । त्वां युनज्मि अस्मिन् कर्मणि युक्तं करोमि । प्रयोजनमाह—अस्मै हव्याय वोढवे, इदं हविर्वोढुम् । पूर्ववत्कर्मणस्सम्प्रदानत्वम्, 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः, 'अन्तश्च तवै युगपत्'. इत्याद्यन्तयोर्युगपदुदात्तत्वम्, अस्याप्युपलक्षणत्वात् । 'ऊडिदम्' इतीदमश्चतुर्थ्या उदात्तत्वम् ॥

[5]समिधोरभ्याधीयमानयोर्जपति—इन्धानास्त्वेति । इयमपि पूर्ववद्विपदा त्रिष्टुप् ॥ हे अग्ने त्वामिन्धानाः ज्वलयन्तः परिचरन्तो वयम् । 'विभाषा वेण्विन्धानयोः' इत्याद्युदात्तत्वम् । सुप्रजसश्शोभनापत्याः । पूर्ववदसिच् । सुवीराः शोभनसर्ववीरपुरुषाः । ज्योक् चिरं जीवेम त्वत्प्रसादात् । यस्माद्वयं ते तव बलिहृतोऽविच्छिन्नं बलिमुपहरामः, तस्माज्जीवेम चिरम् । यद्वा—बलिहृतस्तव भविष्याम इत्येवमर्थं चिरं जीवेम । बलिर्हविर्दानम् ॥

तें । यन्मे अग्ने अस्य यज्ञस्य-
रिष्यात् ॥ ४ ॥ यद्वा स्कन्दादाज्य-
स्योत विष्णो । तेन हन्मि सपत्नं
दुर्मरायुमैनं दधामि निर्ऋत्या

हत इति बलि—हृतः । वयम् । ते । [6]यत् । मे । अग्ने । अस्य । यज्ञस्य । रिष्यात् ॥ ४ ॥ यत् । वा । स्कन्दात् । आज्यस्य । उत । विष्णो इति । तेन । हन्मि । सपत्नम् । दुर्मरायुमिति दुः—मरायुम् । एति । एनम् । दधामि । निर्ऋत्या इति

[6]हवींष्यासन्नान्यभिमन्त्रयते—यन्मे अग्न इति त्रिष्टुभा ॥ हे अग्ने अस्य मम यज्ञस्य यद्बर्हिरादिकं रिष्यान्नश्येत् रक्षःप्रभृतिभिर्विनाशितं स्यात् । लेट्याडागमः । 'प्रकृत्यान्तःपादम्' इति मे इत्यस्य प्रकृतिभावः । किञ्च—आज्यस्योत आज्यस्यापिच सम्बन्धि जौहवादिकं तदेकदेशभूतं यद्रिष्यात् यद्वा स्कन्दात्* । पूर्ववदाडागमः । हे विष्णो व्यापक तेन हन्मि मारयामि सपत्नं शत्रुम् । अथ यो मारयितुं न शक्यते एनं दुर्मरायुं मारयितुमशक्यं निर्ऋत्याः पापदेवतायाः उपस्थे उत्सङ्गे आदधामि स्थापयामि । दुर्मरमात्मन इच्छतीति क्यजन्तात् 'क्याच्छन्दसि' इत्युप्रत्ययः । निर्गता ऋतेः निर्ऋतिः निर्दया । 'ऋतिस्सौत्रो धातुः घृणायां वर्तते '† इत्युक्तेः । निर्ऋतिरिति प्रादिसमासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम्, गतिसमासे 'तादौ च' इति ॥

*म—स्कन्दात् रिष्येद्वा. †काशि. ३-१-२९.

उपस्थे । भूर्भुवस्सुवरुच्छुष्मो अग्ने यजमानायैधि निशुष्मो अभिदासते । अग्ने देवेद्ध मन्विद्ध मन्द्रजि-

निः—ऋत्याः । उपस्थ इत्युप—स्थे । [7]भूः । [8]भुवः । [9]सुवः । [10]उच्छुष्म इत्युत्—शुष्मः । अग्ने । यजमानाय [*]एधि । निशुष्म इति नि—शुष्मः । अभिदासत इत्यभि—दासते । अग्ने । देवेद्धेति देव—इद्ध । मन्विद्धेति मनु—इद्ध । मन्द्रजिह्वेति मन्द्र—

[7—9]हवींष्यासादयति—भूर्भुवस्सुवरिति व्याहृतिभिः ॥ 'ब्रह्मैता व्याहृतयः'* इति ब्राह्मणम् । एतानि रूपाणि लोकत्रयात्मकानि, लोकत्रयस्थितिहेतुत्वात्; लोकत्रयात्मकव्याहृतित्रयरूपेण हवींषि स्तूयन्ते ॥

[10]इध्ममभ्याधीयमानमनुमन्त्रयते—उच्छुष्म इति पिपीलिकामध्यया त्रिपदया यजुरन्तयानुष्टुभा । तत्र द्वादशाक्षरौ प्रथमतृतीयौ पादौ, मध्यमोष्टाक्षरः, अमर्त्यस्य त इत्यादि यजुः ॥ हे अग्ने यजमानाय उच्छुष्म उद्भूतबल एधि भव, यजमानकार्येष्वाविष्कृतबलो भव । अभिदासते उपक्षयते शत्रवे निशुष्मः न्यग्भूतबलो भव । दसु उपक्षये, व्यत्ययेन शप्, धातोरकारस्य छान्दसो दीर्घः । यद्वा—दासृ दाने अभिपूर्व उपक्षयकर्मा द्रष्टव्यः । हे अग्ने अङ्गनादिगुण देवेद्ध देवैरिद्ध दीप्त मन्विद्ध मनुष्यैरिद्ध । उभयत्रापि 'तृतीया कर्मणि' इति

*सं—१-६-१०.

ह्वामर्त्यस्य ते होतर्मूर्धन्ना जिघर्मि
रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय
मनोसि प्राजापत्यं मनसा मा

जिह्व । अमर्त्यस्य । ते । होतः । मूर्धन् । एति । जिघर्मि । रायः । पोषाय । सुप्रजास्त्वायेति सुप्रजाः—त्वाय । सुवीर्यायेति सु—वीर्याय । [11]मनः ।

पूर्वपदप्रकृतिस्वरत्वम् । मन्द्रजिह्वा मदनी मदयित्री तर्पणी जिह्वा यस्य । मदि स्तुतिमोदमदस्वप्रकान्तिगतिषु, 'मन्दिवाशि'* इत्यादिना रक्प्रत्ययः, 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यविद्यमानवत्त्वाच्चतुर्णामप्यामन्त्रितानामाद्युदात्तत्वमेव । होतः देवानामाह्वातः । अमर्त्यस्यामर्त्यात्मनस्ते तव मूर्धन् मूर्ध्नि । 'सुपां सुलुक्' इति ङेर्लुक् । आजिघर्मि आभिमुख्येन क्षारयामि आदधामि । घृ क्षरणदीप्त्योः जौहोत्यादिकः, 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । रायो धनस्य पोषाय पुष्ट्यै । पूर्ववत्षष्ठ्यास्सत्वस्वरौ । सुप्रजास्त्वाय शोभनापत्यत्वाय । पूर्ववदसिच् । सुवीर्याय शोभनवीर्यत्वाय ॥

[11]स्रौवमाघारमभिमन्त्रयते—मनोसीति यजुषा ॥ मनोसि मनसा निर्वर्तितत्वात्त्वम्मन एवासि । प्राजापत्यं प्रजापतिदेवत्यम् । यद्वा—प्रजापतेरिदं प्राजापत्यं, अतस्तद्देवासि ; तेन निर्वर्तितत्वात्त्वम् । तेन मनसा भूतेम च । जातावेकवचनम् । तेन प्रजापतिना सृष्टैर्देहारम्भकैर्भूतजातैश्च सह मामाविश मया सह

*'मन्दिवाशि' (उ. १-३९) इत्यादि सूत्रं उरच्विधायकतया वृत्त्यादौ व्याख्यातम्. 'स्फायितञ्चि' इत्यादिना इति तु युक्तम्.

भूतेना विंश वागस्यैन्द्री सपत्नक्ष-
यंणी ॥ ५ ॥ वाचा मेन्द्रियेणा
विंश वसन्तमृतूनां प्रीणामि स

असि । प्राजापत्यमिति प्राजा—पत्यम् । मनसा ।
मा । भूतेन । एति । विश । [12]वाक् । असि ।
ऐन्द्री । सपत्नक्षयणीति सपत्न—क्षयणी ॥ ५ ॥
वाचा । मा । इन्द्रियेण । एति । विश । [13]वसन्त-

सुखं निर्वर्तय । 'देवा वै सामिधेनीः'* इत्यादि षष्ठद्वितीयकाण्डीयं ब्राह्मणम् ॥

[12]स्रुच्यं—वागसीति यजुषा ॥ वागसि वाचा निर्वृत्तत्वात् वागेवासि त्वम् । ऐन्द्रीन्द्रदेवत्या । यद्वा—इन्द्रस्येयमैन्द्री वाक्, सैवासि । सपत्नक्षयणी शत्रूणां क्षयकरी । तत्त्वया वाचेन्द्रियेण च । जातावेकवचनम् । तेनैवेन्द्रेण सृष्टैरिन्द्रियैश्चक्षुरादिभिश्च सह सुखं मामाविश । 'इन्द्रियमिन्द्रलिङ्गम्' इत्यादौ निपात्यते । 'सावेकाचः' इति वाचस्तृतीयोदात्ता ॥

[13]प्रयाजाननुमन्त्रयते—वसन्तमृतूनां प्रीणामीति यजुर्भिः क्रमेण च । तत्र समिधः—वसन्तमिति ॥ वसन्ति प्रजास्सुखिता अस्मिन्निति वसन्तः । औणादिको झच्प्रत्ययः । ऋतूनाम्मध्ये वसन्तमृतूनां प्रीणामि तर्पयामि । निर्धारणस्वभावान्निर्धार्यमाण ऋतुरेव भवति ; यथा—ब्राह्मणानां स्थविरमानयेति स्थविरो ब्राह्मण

*सं. २-५-११ ; ६-३-७.

मा प्रीतः प्रीणातु ग्रीष्ममृतूनां
प्रीणामि स मा प्रीतः प्रीणातु
वर्षा ऋतूनां प्रीणामि ता मा
प्रीताः प्रीणन्तु शरदमृतूनां प्रीणामि

म् । ऋतूनाम् । प्रीणामि । सः । मा । प्रीतः । प्रीणातु । [14]ग्रीष्मम् । ऋतूनाम् । प्रीणामि । सः । मा । प्रीतः । प्रीणातु । [15]वर्षाः । ऋतूनाम् । प्रीणामि । ताः । मा । प्रीताः । प्रीणन्तु । [16]शरदम् । ऋतूनाम् । प्रीणामि । सा । मा । प्रीता । प्रीणातु ।

---

एवानीयते नान्यः । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । प्रीञ् तर्पणे क्रैयादिकस्सकर्मकः । तर्पयामीत्यर्थः । स च वसन्तः प्रीतः तया तर्पितो मां प्रीणातु तर्पयतु प्रजादिभिरभिमतैः । 'ऋतवो वै प्रजाकामाः'* इत्यादि ब्राह्मणम्, 'समिधो यजति'† इत्याद्यनुवाकश्च ॥

[14]तनूनपातं—ग्रीष्ममिति ॥ गीर्यन्तेस्मिन्नापो रविकिरणैरिति ग्रीष्मः । गिरतेर्मप्रत्ययष्षुगागम ईकारश्च निपात्यते ॥

[15]इडां—वर्षा इति ॥ वर्षत्यासु पर्जन्य इति वर्षाः । एकस्मिन्नपि ऋतौ लिङ्गं बहुवचनं च स्वाभाविकम् ॥

[16]बर्हिषः‡—शरदमिति ॥ शीर्यन्ते पच्यन्ते ओषधयोस्यामिति शरत् । 'शृदृभसोदिः' इत्यदिप्रत्ययः । अत्रापि स्वाभाविकं स्त्रीत्वम् ॥

---

*सं. ७-२-६[३]. †सं. २-६-१[१]. ‡अनुमन्त्रणमिति शेषः.

सा मा प्रीता प्रीणातु हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीतामग्नीषोमयोरहं देवयज्यया

[17]हेमन्तशिशिराविति हेमन्त–शिशिरौ । ऋतूनाम् । प्रीणामि । तौ । मा । प्रीतौ । प्रीणीताम् । [18]अग्नीषोमयोरित्यग्नी–सोमयोः । अहम् । देवयज्ययेति देव–यज्यया । चक्षुष्मान् । भूयासम् ।

---

[17]स्वाहाकारस्य—हेमन्तशिशिराविति ॥ शैत्यसामान्येन द्वयोस्समस्तयोरुपादानम्, प्रयाजानां पञ्चत्वात् । 'पञ्च वा ऋतवः'* इत्यादिवचनं चोपपद्यते । हन्ति हिमेन जन्तूनिति हेमन्तः । 'हन्तेर्मुट् हि च' इति झच्प्रत्ययः । श्यति तनूकरोति हिमपीडया सङ्कोचयति भूतानीति शिशिरः । श्यतेः किरच्प्रत्ययः, द्विर्वचनमभ्यासस्येत्वं च निपात्यते ॥

[18]आज्यभागावनुमन्त्रयते—अग्नीषोमयोरिति ॥ आग्निश्च सोमश्चाग्नीषोमौ । 'ईदग्नेस्सोमवरुणयोः' इतीत्वम्, 'अग्नेस्तुत्स्तोमसोमाः' इति षत्वम्, 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । 'छन्दसि निष्टर्क्य' इत्यत्र देवयज्याशब्दो निपातितः । देवार्हो यागो देवयज्या । अग्नीषोमयोर्देवयज्यया अनेन देवार्हेण यागेन अहं चक्षुष्मान्भूयासम् । यथा यज्ञोग्नीषोमाभ्यां चक्षुष्मानेवमहमपि ताभ्यां चक्षुष्मान्भूयासमिति भावः ॥

---

*सं. १-५-१[7].

चक्षुष्मान्भूयासमग्नेरहं देवयज्ययान्नादो भूयासम् ॥ ६ ॥ दब्धिरस्यदब्धो भूयासममुं दभेयमग्नीषोमयोरहं देवयज्यया वृत्रहा भूयास-

[19]अग्नेः । अहम् । देवयज्ययेति देव-यज्यया । अन्नाद इत्यन्न-अदः । भूयासम् ॥ ६ ॥ [20]दब्धिः । असि । अदब्धः । भूयासम् । अमुम् । दभेयम् । [21]अग्नीषोमयोरित्यग्नी-सोमयोः । अहम् । देवयज्ययेति देव-यज्यया । वृत्रहेति वृत्र-हा । भूयासम् । [22]इन्द्राग्नियोरितीन्द्र-अग्नियोः । अहम् ।

---

[19]आग्नेयस्य—अग्नेरिति ॥ अन्नादोन्नानामत्ता भूयासम्, देवानामग्नेरन्नादत्वात् ॥

[20]उपांशुयाजस्य—दब्धिरिति ॥ दब्धिर्दभनं मरणं दम्भिता वा त्वमसि असुराणाम्, अहमपि त्वयादब्धो भूयासं शत्रूणामु[शत्रुभिरु]पहिंसितो मा भूवम् । अपि त्वमुं शत्रुं पाप्मानं दभेयं मारयेयम् । 'लिङ्याशिष्यङ्' । अमुमिति शत्रुनाम निर्दिशेत् ॥

[21]अग्नीषोमीयस्य—अग्नीषोमयोरिति ॥ वृत्रस्य पाप्मनो हन्ता वृत्रहा । 'ब्रह्मभ्रूणवृत्रेषु' इति क्विप् भविष्यत्यपि धातुसम्बन्धे भवति । अग्नीषोमाभ्यामिन्द्रो वृत्रमहन्, तद्वदहमप्याभ्यां भ्रातृव्यस्य हन्ता भूयासमिति ॥

[22]ऐन्द्राग्नस्य—इन्द्राग्नियोरिति ॥ 'नोत्तरपदेनुदात्तादौ' इति

मिन्द्राग्नियोरहं देवयज्ययैन्द्रिया-
व्यन्नादो भूयासमिन्द्रस्याहं देवय-
ज्ययैन्द्रियावी भूयासं महेन्द्रस्याहं
देवयज्यया जेमानं महिमानं गमेय-

देवयज्ययेति देव–यज्यया । इन्द्रियावी । अन्नाद इत्यन्न–अदः । भूयासम् । [23]इन्द्रस्य । अहम् । देवयज्ययेति देव–यज्यया । इन्द्रियावी । भूयासम् । [24]महेन्द्रस्येति महा–इन्द्रस्य । अहम् । देवयज्ययेति देव–यज्यया । जेमानम् । महिमानम् । गमेयम् ।

---

देवताद्वन्द्वलक्षणे पदद्वयप्रकृतिस्वरत्वे प्रतिषिद्धे समासान्तोदात्तत्वे च कृते 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । इन्द्रियावी अन्नादश्च भूयासं, इन्द्रेणेन्द्रियावी अग्निनान्नादः । इन्द्रियशब्दान्मत्वर्थीयो विनिः, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् ॥

[23]ऐन्द्रस्य सान्नाय्यस्य—इन्द्रस्येति ॥ इन्द्रियावान्, इन्द्रो हीन्द्रियस्य दाता भवति, इन्द्रेण हि दत्तमिन्द्रियमिति ॥

[24]माहेन्द्रस्य—महेन्द्रस्येति ॥ 'सन्महत्' इति समासः । जेमानं महिमानं च गमेयम् । जेमा जेतृत्वम् । 'तुश्छन्दसि' इतीमनिच्, छान्दस इकारलोपः, 'तुरिष्ठेमेयस्सु' इति तृलोपः । जनयितृत्वं वा । जाभावः । महत्त्वं महिमा ॥

मग्नेस्स्विष्टकृतोहं देवयज्ययायु-
ष्मान्, यज्ञेन प्रतिष्ठां गमेयम् ॥७॥
अग्निर्मा दुरिष्टात्पातु सविताघश-

[25]अग्नेः । स्विष्टकृत इति स्विष्ट–कृतः । अहम् । देवयज्ययेति देव–यज्यया । आयुष्मान् । यज्ञेन । प्रतिष्ठामिति प्रति–स्थाम् । गमेयम् ॥ ७ ॥

रिष्यांत्सपत्नक्षयंण्यन्नादो भूयासꣳ षड्ꣳशञ्च ॥२॥

[1]अग्निः । मा । दुरिष्टादिति दुः–इष्टात् ।

---

[25]स्विष्टकृतः—अग्नेस्स्विष्टकृत इति ॥ स्विष्टं करोतीति स्विष्ट-कृत्, तस्य देवयज्ययाहमायुष्मान्भूत्वा यज्ञेन प्रतिष्ठां गमेयम् । यज्ञेन या प्रतिष्ठा भवति* 'यो यतो यज्ञं प्रयुङ्क्ते । तदेनं प्रतिष्ठापयतीति । ....प्रति तिष्ठति प्रजया पशुभिर्यजमानः'† इति तामपि प्रतिष्ठां गमेयम् । 'लिङ्याशिष्यङ्' ॥

इति षष्ठे द्वितीयोनुवाकः.

---

[1]प्राशित्रेवदीयमाने जपति—अग्निर्मेति ॥ दुरिष्टाद्दुष्टाद्यागाद्वि-गुणान्मामग्निः पातु तन्निमित्तदोषापनोदनेन मां रक्षतु । अव्ययपूर्वपदप्रकृतिस्वरत्वम्, कर्मणि निष्ठायां वा 'गतिरनन्तरः' इति

---

*म, तं—यज्ञेन वा प्रतिष्ठितो भवति सं. †ब्रा. ३-३-९.

शःसाद्यो मेन्ति दूरेरातीयति तमेतेन जेषꣳ सुरूपवर्षवर्ण एहीमान्भद्रा-न्दुर्याꣳ अभ्येहि मामनुव्रता न्यु शीर्षाणि मृढ्वमिड एह्यदित एहि

पातु । सविता । अघशꣳसादित्यघ-शꣳसात् ।
[2]यः । मे । अन्ति । दूरे । अरातीयति । तम् ।
एतेन । जेषम् । [3]सुरूपवर्षवर्ण इति सुरूप-वर्ष-वर्ण । एति । इहि । इमान् । भद्रान् । दुर्यान् ।
अभि । एति । इहि । माम् । अनुव्रतेत्यनु-व्रता ।
नीति । उ । शीर्षाणि । मृढ्वम् । इडे । एति ।

---

गतेः प्रकृतिस्वरत्वम् । किञ्च—दुरिष्टं अयुक्तरूपं प्रयाजादि ततो मां पातु । यद्वा—दुरिष्टं यथा न भवति तथा मां पातु दुरिष्टाद्विनिवार्य मां रक्षतु । सविता चाघशंसात्पापरुचेः रक्षः-प्रभृतेश्च पातु ॥

[2]यजमानोऽवदीयमाने जपति—यो म इति ॥ यो मे ममान्ति अन्तिके दूरे वारातीयति अरातित्वमिच्छति, अरातिमात्मनो वास्माक-मिच्छति तं राक्षसादिमनेन जेषं जयेयम् । जयतेर्लेटि 'सिब्बहुलं लेटि' शपो लुक्, 'लेटोडाटौ' 'इतश्च लोपः' । 'कादिलोपे बहुलम्' इत्यन्तिकस्य कलोपः ॥

[3]इडामाह्रियमाणामनुमन्त्रयते—सुरूपवर्षवर्ण इति ॥ शोभनरूपौ शोभनस्वभावौ वर्षवर्णौ यस्यास्सा तथोक्ता । 'पशवो वा

सरस्वत्येहि रन्तिरसि रमतिरसि सूनर्यसि जुष्टे जुष्टिं तेऽशीयोपहूत उपहवम् ॥ ८ ॥ तेऽशीय सा मे सत्याशीरस्य यज्ञस्यं भूयादरेडता

इहि । अदिते । एति । इहि । सरस्वति । एति । इहि । रन्तिः । असि । रमतिः । असि । सूनरी । असि । जुष्टे । जुष्टिम् । ते । अशीय । उपहूत इत्युप-हूते । उपहवमित्युप-हवम् ॥ ८ ॥ ते । अशीय । सा । मे । सत्या । आशीरित्या-शीः । अस्य । यज्ञस्यं । भूयात् । अरेडता । मनसा ।

इडा '* 'वृष्टिर्वा इडा '† इति पशुवृष्टिहेतुत्वादिडाया एवमुच्यते । पूर्वपदस्याद्युदात्तत्वं छान्दसम् । ईदृशी एहि आगच्छ इमान्मदी-'यान्भद्रान् कल्याणान् भजनीयान् दुर्यान् यज्ञगृहान्; 'गृहा वै दुर्याः '‡ इत्युक्तम् । किञ्च—मामनुव्रता अनुगुणा अभिप्रेतानि साधयन्त्यभ्येह्याभिमुख्येनागच्छ । असमानपदेपि रुर्दृश्यते । अ-स्माकं शीर्षाणि निमृड्ढ्वं निर्दोषानस्मान् कुरुध्वमिति यावत्, यथा-स्माकं शिरः क्षालितमनेनेति दोषाशङ्कायां वक्तारो भवन्ति । निमृड्ढ्वमिति च एकवचनस्य स्थाने व्यत्ययेन बहुवचनम्, पूजार्थं वा वक्ष्यमाणगोभेदापेक्षम् । उ इति समुच्चयेवधारणार्थे वा । इडादयश्शब्दा गवां नामानि, यथा—'इडे रन्तेदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि '§ इति ।

*सं. १-७-१. †सं. १-७-२. ‡सं. ६-२-९. §सं. ७-१-६.

**मनसा तच्छकेयं यज्ञो दिवꣳ रोहतु यज्ञो दिवं गच्छतु यो देवयानः**

**तत् । शकेयम् । यज्ञः । दिवम् । रोहतु । यज्ञः । दिवम् । गच्छतु । यः । देवयान इति देव—यानः ।**

---

ताच्छब्द्येनेडा स्तूयते । तत्र गवां भेदान्निमृढ्वमिति बहुवचनमुपपद्यते, हे इडादयो यूयमागत्य मां निमृढ्वमिति । यदा तु गोभिरभेदेनेडोच्यते हे इडादिरूपे इड इति तदा त्वेकवचनमेव न्याय्यम् । इडा पशुसाधनीज्या वा । अदितिरदीना अखण्डनीया । सरस्वती सरणवती सरस्वतीसदृशा वा । रन्तिः रतिहेतुरसीहामुत्र च । क्तिचि 'न क्तिचि दीर्घश्च' इति टिलोपाभावः, वृषादिर्द्रष्टव्यः । रमतिः रमणीया । 'रमेर्नित्' इत्यतिप्रत्ययः । सूनरी शोभनमनुष्या, मनुष्याणां सुखहेतुत्वात् । पृषोदरादिः । यद्वा—सुष्ठु नेत्री सूनरी । नृ नये, सुपूर्वात् 'अच इः' इतीप्रत्ययः, 'कृदिकारादक्तिनः' इति ङीष्, उपसर्गविकारश्छान्दसः, सर्वधानवधारणान्नावगृह्यते । यद्वा—रन्त्यादीन्यपि त्रीणि गवां नामधेयानि । हे जुष्टे प्रिये सर्वस्य सर्वेण वा सेविते ते जुष्टिं त्वया दत्तां प्रीतिं अशीय व्याप्नुयाम् । अश्नोतेर्लिङि शपो लुक् । हे उपहूते अनुज्ञाते ते तव उपहवमनुज्ञामशीय । 'ह्वस्सम्प्रसारणं च न्यभ्युपविषु' इत्यप्, थाथादिनोत्तरपदान्तोदात्तत्वम् । साऽस्य यज्ञस्याशीः अस्य यज्ञस्य फलं मम सत्या यथाश्रुतिसिद्धिः भूयात् । 'ऊडिदम्' इतीदमः षष्ठ्या विभक्तेरुदात्तत्वम् । अरेडतेत्येकपदा त्रिष्टुप् यजुरादिः यजुरन्ता—उक्तैर्वक्ष्यमाणैश्च अरेडता अनादरमकुर्वता मनसा ।

पन्थास्तेन॑ य॒ज्ञो दे॒वाꣳ अप्यै॑त्व॒-
स्मास्वि॑न्द्र॑ इन्द्रि॒यं द॑धात्व॒स्मान्राय॑
उ॒त य॒ज्ञास्स॑चन्ताम॒स्मासु॑ सन्त्वा॒-
शिष॒स्सा न॑ः प्रि॒या सु॒प्रतू॑र्तिर्म॒-

पन्था॑ः । तेन॑ । य॒ज्ञः । दे॒वान् । अपी॒ति॑ । ए॒तु ।
4 अ॒स्मासु॑ । इन्द्र॑ः । इ॒न्द्रि॒यम् । द॒धा॒तु । अ॒स्मान् ।
राय॑ः । उ॒त । य॒ज्ञाः । स॒च॒न्ता॒म् । अ॒स्मासु॑ ।
स॒न्तु॒ । आ॒शिष॒ इत्या॑—शिष॑ः । सा । न॒ः । प्रि॒या ।

रेड़ृ अनादरे । तत्फलं शकेयं त्वत्प्रसादात्साधयितुं शक्तो भूयासम् । 'लिङ्याशिष्यङ्' यज्ञोयमस्मदीयो दिवं रोहतु दिवौकसां तृप्तये भवतु । किञ्च—अयं यज्ञोस्मानपि दिवं गच्छतु गमयतु देहपातोत्तरकालमस्मान् दिवमारोहयतु । 'बहुळमन्यत्रापि' इति णिलुक् । यद्वा—हेतुकर्म[तुकर्तृ]निर्देशः, षड्भिर्हलैः कृषतीति यथा । सामर्थ्यात्तत्रेति चेदिहापि पूर्वेण गतत्वात् आनर्थक्याद्धेतुः प्रत्येष्यते । इदानीं यज्ञस्य मार्गं उपदिश्यते—यो देवयानः पन्थाः येन पथा देवान् गच्छति देवत्वं वा प्राप्यते तेन पथायं यज्ञो देवानप्येतु तेन मार्गेण गत्वा देवाननुप्रविशतु ॥

[4]अस्मास्विति त्रिपदोष्णिक् । त्रिष्टुप्ततः परा । यद्वा—मध्येज्योतिस्त्रिष्टुप् ॥ अस्मासु त्वत्प्रसादभाक्षु इन्द्र इन्द्रियं वीर्यं दधातु । अस्मान् रायो धनानि पश्वादीनि अपि च यज्ञाः उत्तरे च क्रतवः सचन्ताम् । षच समवाये । अस्मास्वाशिषः अभिप्रेतान्यपि फलानि सन्तु भूतानि सन्तु । सा च त्वमस्माकं प्रिया तृप्तिहेतुः सुप्र-

घोनी जुष्टिरसि जुषस्वं नो जुष्टा
नः ॥ १ ॥ असि जुष्टिं ते गमेयं
मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं
यज्ञꣳ समिमं दधातु । बृहस्पतिस्त-
नुतामिमं नो विश्वे देवा इह मांद-

सुप्रतूर्तिरिति सु-प्रतूर्तिः । मघोनी । [5]जुष्टिः । असि । जुषस्व । नः । जुष्टा । नः ॥ १ ॥ असि । जुष्टिम् । ते । गमेयम् । [6]मनः । ज्योतिः । जुषताम् । आज्यम् । विच्छिन्नमिति वि-छिन्नम् । यज्ञम् । समिति । इमम् । दधातु । बृहस्पतिः । तनुताम् । इमम् । नः । विश्वे । देवाः । इह ।

---

तूर्तिः सुष्ठु प्रतरणिर्दुःखानाम् । यद्वा—सुष्ठु प्रकर्षेण च हिंसिका शत्रूणाम् । 'नसत्तनिषत्त' इति निपातनं निष्ठावद्भावात्क्तिनोपि भवति, 'क्त्वादयश्च' इत्युत्तरपदाद्युदात्तत्वम् । मघोनी धनवती । 'छन्दसीवनिपौ' इति मत्वर्थीयो वनिः, 'ऋन्नेभ्यः' इति ङीप्, 'श्वयुवमघोनाम्' इति सम्प्रसारणम् । एवङ्गुणोस्माकं भव ॥

[5—6]अवान्तरेडां प्राश्यमानामनुमन्त्रयते * *

*अत्र 'अनुमन्त्रयते' इति समानशब्ददर्शनजेन लेखकानां पङ्क्तिभ्रमेण ग्रन्थो गलित इव भाति. अतो माधवीयभाष्यमत्र दर्श्यते—

[5]जुष्टिरसीति ॥ हे अवान्तरेडे त्वं जुष्टिरसि प्रीतिरूपासि । नः अस्मान् जुषस्व प्रीणय । नोऽस्माभिर्जुष्टासि सेवितासि । ते जुष्टिं त्वदीयां प्रीतिं गमेयं प्राप्नुयाम् ॥

[6]अन्तर्वेद्यद्भिर्मार्जयते—मनो ज्योतिरिति ॥ [व्याख्यातः. सं. १-५-३[7]].

यन्ताम् । ब्रध्न पिन्वस्व ददतो मे
मा क्षायि कुर्वतो मे मोप दसत्प्र-
जापतेर्भागोस्यूर्जस्वान्पयस्वान्प्रा-
णापानौ मे पाहि समानव्यानौ मे

मादयन्ताम् । [7]ब्रध्न । पिन्वस्व । ददतः । मे । मा । क्षायि । कुर्वतः । मे । मा । उपेति । दसत् । [8]प्रजापतेरिति प्रजा-पतेः । भागः । असि । ऊर्जस्वान् । पयस्वान् । प्राणापानाविति प्राण-अपानौ । मे । पाहि । समानव्यानाविति समान-व्यानौ । मे । पाहि । उदानव्यानावित्युदान-

[7] * * * ब्रध्नेति ॥ हे ब्रध्न बन्धक मनसां, त्वय्येव हि मनोस्माकं सर्वदा बद्धम् । 'बन्धेर्ब्रधिबुधी च' इति नक्प्रत्ययः । परिबृढस्यैवेयं संज्ञा । पिन्वस्व प्रीणय अस्मानृत्विजश्च । ददतो मे मा क्षायि देयेन धनेन क्षयो मा गामि, अपि तूपचीयताम् । कुर्वतो मे मोपदसत् सामर्थ्यं श्रद्धा वा मोपक्षयं गमत्, अपि तु पुनःपुनर्वर्धताम् । दसु उपक्षये, लुङि पुषादित्वादङ् ॥

[8]अन्वाहार्यमासन्नमभिमन्त्रयते—प्रजापतेरिति ॥ प्रजापतेर्भागोसि । 'स वा एष प्राजापत्यो यदन्वाहार्यः'* इति । 'पत्यावैश्वर्ये' इति पतिशब्दे पूर्वपदप्रकृतिस्वरत्वम् । 'कर्षात्वतः' इति भाग-

[7]बार्हिषदं पुरोडाशमनुमन्त्रयते.

*सं. १-७-३.

पाह्युदानव्यानौ मे पाह्यक्षितोस्य- क्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामु- ष्मिन्लोके ॥ १० ॥

व्यानौ । मे । पाहि । आक्षितः । असि । आक्षित्यै । त्वा । मा । मे । क्षेष्ठाः । अमुत्र । अमुष्मिन्न् । लोके ॥ १० ॥

उपहवं जुष्टां नस्त्वा षड्ँ ॥ ३ ॥

शब्दोन्तोदात्तः, 'स्वरितो वानुदात्ते पदादौ' इत्येकादेशस्य संहितायां स्वरितत्वम् । ऊर्जस्वानन्नवान् पयस्वान् रसवान् स त्वं प्राणापानौ मम पाहि । मुखनासिकाभ्यां यो वायुर्निर्गच्छति स प्राणः, स च वायोस्तिर्यग्गमनशीलस्योर्ध्वगमनहेतुः जीवव्यापार- विशेषो वेदितव्यः । अपानो नामावाग्गमनो वायुः । समानो नाम सर्वसाधारणो हृदये स्थितो वायुः । व्यानो नाम मनो व्याप्य स्थितो नाडीभिरन्नादिरसस्य नेता । उदान ऊर्ध्वगमनः शब्दस्योत्पादयिता । पुनर्व्यानग्रहणमनुक्तजीववृत्तिप्रकारोपसङ्ग्रहा- र्थम्, विविधाननात्मकत्वात्तेषाम् । अक्षितः अक्षीणोसि । अक्षित्यै इह चामुत्र चाक्षयाय त्वां ददामीति सामर्थ्यात् । स त्वममुत्र परलोके अस्मि[मुष्मि]न्नैन्द्रे ब्राह्मे प्राजापत्ये वा मा क्षेष्ठाः परलोके क्षयं मा गमः । यद्वा—मे ममामुष्मिन् लोके यदाहं परलोके भविष्यामि तदा तत्र ममोपभोगार्थम् । इह हि कृत्वा परत्र भुञ्जते । 'क्षीयते वा अमुष्मिन्लोके'* इत्यादि ब्राह्मणम् ॥

इति षष्ठे तृतीयोनुवाकः.

*सं. १-७-३.

बर्हिषोहं देवयज्यया प्रजावान्भूयासं नराशꣳसस्याहं देवयज्यया पशुमान्भूयासमग्नेस्स्विष्टकृतोहं देवयज्ययायुष्मान् यज्ञेन प्रतिष्ठां गमेयमग्नेरहमुज्जितिमनूज्जेषꣳ सोमं-

[1]बर्हिषः । अहम् । देवयज्ययेति देव-यज्यया । प्रजावानिति प्रजा-वान् । भूयासम् । [2]नराशꣳसस्य । अहम् । देवयज्ययेति देव-यज्यया । पशुमानिति पशु-मान् । भूयासम् । [3]अग्नेः । स्विष्टकृत इति स्विष्ट-कृतः । अहम् । देवयज्ययेति देव-यज्यया । आयुष्मान् । यज्ञेन । प्रतिष्ठामिति प्रति-स्थाम् । गमेयम् । [4]अग्नेः ।

[1]अनूयाजान् क्रमेणानुमन्त्रयते—बर्हिष इति ॥ बर्हिषो देवताया देवयज्यया देवार्हेण यागेनाहं प्रजावान् बह्वपत्यो जीवदपत्यश्च भूयासम् ॥

[2]नराशंसस्य नरैश्शंसनीयस्य । गतम् । पशुमान् बहुपशुः । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् ॥

[3]अग्नेस्स्विष्टकृत इति ॥ व्याख्यातमेव* ॥

[4—11]सूक्तवाके 'अग्निरिदं हविरजुषत'† इत्यादिक्रमेण उज्जिती-

*सं॰ १-६-२[25]. †ब्रा. ३-५-१०.

स्याहमुज्जितिमनूज्जेषमग्नेरहमुज्जिति-
मनूज्जेषमग्नीषोमयोरहमुज्जितिमनू-
ज्जेषमिन्द्राग्नियोरहमुज्जितिमनूज्जेष-
मिन्द्रस्याहम् ॥ ११ ॥ उज्जिति-

अहम् । उज्जितिमित्युत्-जितिम् । अनु । उदिति । जेषम् । [5]सोमस्य । अहम् । उज्जितिमित्युत्-जितिम् । अनु । उदिति । जेषम् । [6]अग्नेः । अहम् । उज्जितिमित्युत्-जितिम् । अनु । उदिति । जेषम् । [7]अग्नीषोमयोरित्यग्नी-सोमयोः । अहम् । उज्जितिमित्युत्-जितिम् । अनु । उदिति । जेषम् । [8]इन्द्राग्नियोरितीन्द्र-अग्नियोः । अहम् । उज्जिति-मित्युत्-जितिम् । अनु । उदिति । जेषम् । [9]इन्द्रस्य । अहम् ॥ ११ ॥ उज्जितिमित्युत्-

वीचयति—अग्नेरहमित्याद्याः ॥ दर्शपूर्णमासाभ्यां पूर्ववद्देवता इष्ट्वा तयोरुज्जितिमुच्छ्रितमूर्ध्वलोकविषयं वा जयं नः अनूदजयन् तद्धेतुका-मुज्जितिमलभन्त । 'दर्शपूर्णमासयोर्वै देवाः'* इत्यादि ब्राह्मणम्। तत्राग्नेर्या उज्जितिरभूत् पूर्वं तामहमनूज्जेषम् ; यथाग्निरुदजयत्, तद्वदहमप्यनेनाग्नेर्यागेन उज्जेषमुज्जयेयं तादृशमैश्वर्यम्ममामुत्र भूया-दिति । 'दर्शपूर्णमासयोरेव देवतानां यजमान उज्जितिमनूज्ज-यति'* इत्यादि ब्राह्मणम् । जयतेर्लेटि 'सिब्बहुलं लेटि'

*सं. १-७-४.

मनूज्जेषं महेन्द्रस्याहमुज्जिति-
मनूज्जेषमग्नेस्स्विष्टकृतोहमुज्जिति-
मनूज्जेषं वाजस्य मा प्रसवेनो-
द्ग्राभेणोदग्रभीत् । अथा सपत्नाꣳ
इन्द्रो मे निग्राभेणाधराꣳ अकः ।

जितिम् । अनु । उदिति । जेषम् । [10]महेन्द्रस्येति महा—इन्द्रस्य । अहम् । उज्जितिमित्युत्—जितिम् । अनु । उदिति । जेषम् । [11]अग्नेः । स्विष्टकृत इति स्विष्ट—कृतः । अहम् । उज्जितिमित्युत्—जितिम् । अनु । उदिति । जेषम् । [12]वाजस्य । मा । प्रसवेनेति प्र—सवेन । उद्ग्राभेणेत्युत्—ग्राभेण । उदिति । अग्रभीत् । अथ । सपत्नान् । इन्द्रः । मे । निग्राभेणेति नि—ग्राभेण । अधरान् । अकः ।

---

अडागमः, 'इतश्च लोपः' शपो लुक्, 'तादौ च' इत्युज्जितिशब्दे गतेः प्रकृतिस्वरत्वं, लक्षणेऽनोः कर्मप्रवचनीयत्वम् । एतेन सर्वा उज्जितयो व्याख्याताः ॥

[12–13]स्रुग्व्यूहनमन्त्रौ वाजस्येत्यनुष्टुभौ ॥ व्याख्याते चैते* । वाजस्यान्नस्य प्रसूतिनिमित्तेन स्रुच उद्ग्रहणेन मामुदग्रहीदिन्द्रः । अथ मे सपत्नान् स्रुचो निग्राभेण अधरानकार्षीत्, तस्मादुद्ग्राभं निग्राभं

---

*सं. १-१-१३[1–4].

उद्ग्राभं च निग्राभं च ब्रह्म देवा अ-
वीवृधन्। अथा सपत्नानिन्द्राग्नी मे-
विषूचीनान्व्यस्यताम् । एमा अ-
ग्मन्नाशिषो दोहंकामा इन्द्रवन्तः

[13]उद्ग्राभमित्युत्–ग्राभम् । च । निग्राभमिति नि–ग्राभम् । च । ब्रह्म । देवाः । अवीवृधन् । अथ । सपत्नान् । इन्द्राग्नी इतीन्द्र–अग्नी । मे । विषूचीनान् । वीति । अस्यताम् । [14]एति । इमाः । अग्मन् । आशिष इत्या–शिषः । दोहंकामा इति

च ब्रह्म परिबृढं कर्म देवा वर्धयन्तु । अथ मम सपत्नानिन्द्राग्नी विषूचीनान् विष्वग्गतीन् व्यस्यतां विनाशयतामिति ॥

[14]यज्ञस्य दोहं वाचयति—एमा इति । इयं पुरउष्णिक्, प्रथमस्य द्वादशाक्षरत्वात् ॥ अत्र 'यर्हि होता यजमानस्य नाम गृह्णीयात्तर्हि ब्रूयादेमा अग्मन्नाशिषो दोहकामाः'* इति ब्राह्मणदर्शनात् । 'आशास्तेयं यजमानोसौ'† इत्यत्र यजमानेनाशासनीयाः 'आयुराशास्ते'† इत्यायुरादय इमा आशिष उच्यन्ते । इमा आशिष आग्मन्नागच्छन्तु । छान्दसे लुङि 'मन्त्रे घस' इत्यादिना च्लेर्लुक्, 'गमहन' इत्युपधालोपः । लङि वा शपो लुक् । दोहकामाः मया दुह्यमानं कामयमानाः । 'शीलिकामिभिक्षाचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च' इत्यणोपवादो णः ।

*सं. १-७-४, †ब्रा. ३-५-१०.

॥१२॥ वनामहे धुक्षीमहिं प्रजामिषम् । रोहितेन त्वाग्निर्देवतां गमयतु हरिभ्यां त्वेन्द्रो देवतां गमयत्वेतशेन त्वा सूर्यो देवतां गमयतु

दोहं—कामाः । इन्द्रवन्त इतीन्द्र—वन्तः ॥ १२ ॥ वनामहे । धुक्षीमहिं । प्रजामिति प्र—जाम् । इषम् । [15]रोहितेन । त्वा । अग्निः । देवताम् । गमयतु । [16]हरिभ्यामिति हरि—भ्याम् । त्वा । इन्द्रः । देवताम् । गमयतु । [17]एतशेन । त्वा ।

---

अत आगता वयमपीन्द्रवन्तः इन्द्रेण स्वामिना सहिता वनामहे । वन षण सम्भक्तौ, व्यत्ययेनात्मनेपदम् । यद्वा—वनु याचने, अनुदात्तेत् तानादिकः, विकरणव्यत्ययेन शप् । इन्द्रवन्तो वयं याचामहे प्रजामिषमन्नं च वो धुक्षीमहि । यद्वा—दोहकामा वयं वनामहे प्रजामिषं च धुक्षीमहीति । 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्त्वम् । पादादि*त्वान्न निहन्यते ॥

[15—17]प्रस्तरं प्रह्रियमाणमनुमन्त्रयते—रोहितेनेति ॥ देवतामित्यादि अग्न्यादीनां सामान्येन अभिधानम् । अग्निस्त्वामात्मीयेन रोहितेनाश्वेन देवतां गमयतु । याभ्यस्त्वं हूयसे ता अग्न्यादिदेवता गमयत्वित्यर्थः । हरिभ्यामात्मीयाभ्यामश्वाभ्यामिन्द्रस्त्वां देवानां सकाशं प्रापयतु । सूर्यश्चात्मीयेनैतशेनाश्वेन त्वां देवतापार्श्वे

---

*तं—तिङः पर.

वि ते मुञ्चामि रशना वि रश्मीन्
वि योक्त्रा यानि परिचर्तनानि धत्ता-

सूर्यः । देवताम् । गमयतु । [18]वीति । ते । मुञ्चामि । रशनाः । वीति । रश्मीन् । वीति । योक्त्रा । यानि । परिचर्तनानीति परि-चर्तनानि । धत्तात् । अस्मासु । द्रविणम् । यत् । च । भद्रम् । प्रेति ।

प्रापयतु । रोहितादयोऽग्न्यादीनामश्वाः, 'एते वै देवाश्वाः'* इति च ब्राह्मणम् ॥

[18]परिधीन् विमुच्यमानाननुमन्त्रयते—वि ते मुञ्चामीति त्रिष्टुभा ॥ अश्वत्वेनाग्निस्स्तूयते । हे अग्ने अनेन परिधिविमोकेन ते तव यानि यन्त्रणानि तानि सर्वाण्यपि विमुञ्चामीति प्रतिपाद्यते । तत्रैकश्येनाहं रशनास्तव विमुञ्चामि । रशना व्यापिकाः । 'अशेरुट्' इति युच् । कक्ष्यावस्थिताश्शरीरपरिकर्मविशेषा उच्यन्ते । रश्मीन् प्रग्रहांश्च विमुञ्चामि, योक्त्राणि योजनोपयुक्ता रज्जुविशेषाः तानि विमुञ्चामि । यानि चान्यानि तव परिचर्तनानि उरोवध्रादीनि परितो देहस्य पीडनानि । चृती हिंसादौ । तानि च मुञ्चामि यथाऽश्व एतैर्युक्तः कार्यं करोति, तथा त्वं परिधिभिः परिहित एतैरेव युक्तः कार्यमकार्षीः । अधुना कार्ये समाप्ते परिधिविमोकेन एतैरेव विमुक्तो निर्यन्त्रणो भव यथाऽश्वः कार्यसमाप्तौ विमुक्तरशनादिकस्स्वैरं धावति । ततश्च त्वमस्मासु द्रविणं धनं यच्चान्यद्भद्रं कल्याणमभीष्टं तत्तत्सर्वं धत्तात् धेहि स्थापय । किञ्च—नः अस्मान्देवतासु प्रब्रूतात्प्रब्रूहि । भागधान्भगस्य धातॄन्

*सं. १-७-४.

दस्मासु द्रविणं यच्च भद्रं प्रणो ब्रू-
ताद्भागधान्देवतासु । विष्णोश्शंयो-
रहं देवयज्यया यज्ञेन प्रतिष्ठां गमे-
यꣳ सोमस्याहं देवयज्यया ॥ १३ ॥

नः । ब्रूतात् । भागधानिति भाग—धान् । देवतासु । [19]विष्णोः । शंयोरिति शं—योः । अहम् । देवयज्ययेति देव—यज्यया । यज्ञेन । प्रतिष्ठामिति प्रति—स्थाम् । गमेयम् । [20]सोमस्य । अहम् । देवयज्ययेति देव—यज्यया ॥ १३ ॥ सुरेता इति सु—रेताः । रेतः । धिषीय । [21]त्वष्टुः । अहम् । देवयज्ययेति

दातॄन् युष्मभ्यमेतैर्भागा दत्ता भुङ्क्ष्वमिति देवतासु ख्यापयेति । 'उपसर्गाद्बहुलम्' इति नसो णत्वम् ॥

[19]शंयुवाकमुक्तमनुमन्त्रयते—विष्णोरिति ॥ विष्णुर्व्यापनवान् शमनयावनकृद्रोगभयानाम् । शाम्यतियौतिभ्यां गुणाभावश्छान्दसः। 'कम्शम्भ्याम्' इति वा मत्वर्थीयो युस्प्रत्ययः । बृहस्पतेः पुत्र उच्यते । 'देवा वै यज्ञस्य स्वगाकर्तारं नाविन्दन्ते शं युं बार्हस्पत्यम्'* इत्यादि ब्राह्मणम् । विष्णुत्वेन वा बार्हस्पत्यस्स्तूयते । 'यज्ञो वै विष्णुः'† इति ब्राह्मणम् । तस्याहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयम् । गतम् ॥

[20—21]पत्नीसंयाजाननुमन्त्रयते—सोमस्याहमित्यादिभिः ॥ सुरेता

*सं. २-६-१०. †सं. १-७-४.

सुरेता रेतो धिषीय त्वष्टुरहं देवय-
ज्यया पशूनाꣳ रूपं पुषेयं देवानां
पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयो-
रहं देवयज्यया मिथुनेन प्र भूयासं

देव-यज्यया । पशूनाम् । रूपम् । पुषेयम् ।
22 देवानाम् । पत्नीः । अग्निः । गृहपतिरिति गृह-
पतिः । यज्ञस्य । मिथुनम् । तयोः । अहम् ।
देवयज्ययेति देव-यज्यया । मिथुनेन । प्रेति ।

---

अमोघबीजः । 'सोर्मनसी' इत्युत्तरपदाद्युदात्तत्वम् । रेतो धिषीयात्मनि धारयेयम् । 'सुधितवसुधित' इत्यादौ दधातेरिकारांशो निपात्यते । 'सोमो वै रेतोधाः'* इत्यादि ब्राह्मणम् । त्वष्टुरहमिति । 'त्वष्टा वै पशूनां मिथुनानां रूपकृत्'* इति ब्राह्मणम् । पशूनां रूपं पुषेयं पोषयेयम् । 'लिङ्याशिष्यङ्' 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् ॥

22 अथान्ययोस्सहानुमन्त्रणम्—देवानामिति ॥ देवानां पत्नीः पत्न्यः अग्निश्च गृहपतिरिति यज्ञस्य मिथुनमेव तत् । तयोरहं देवयज्यया मिथुनेन पुत्रादिमिथुनेन प्रभूयासं प्रकर्षेण युक्तो भूयासम् । मिथुनापेक्षया तयोरिति द्विवचनम् । 'एतस्माद्वै मिथुनात्प्रजापतिः'* इत्यादि ब्राह्मणम् ॥

---

*सं. १-७-४.

वेदो॑सि वित्ति॑रसि वि॒देय॒ कर्मा॑सि क॒रुण॑मसि क्रि॒यास॒ꣳ स॒निर॑सि स॒नि॒तासि॑ स॒नेय॑ घृ॒तव॑न्तं कु॒ला॒यिन॒ꣳ

भू॒या॒स॒म् । [23]वेदः॑ । अ॒सि॒ । वित्ति॑ः । अ॒सि॒ । वि॒देय॑ । कर्म॑ । अ॒सि॒ । क॒रुण॑म् । अ॒सि॒ । क्रि॒या॒सम् । स॒निः । अ॒सि॒ । स॒नि॒ता । अ॒सि॒ । स॒नेय॑म् । घृ॒तव॑न्त॒मिति॑ घृ॒त—व॒न्त॒म् । कु॒ला॒यिन॑म् । रा॒यः ।

[23]वेदेन्तर्वेदि निधीयमाने यजमानं वाचयति—वेदोसीति षड्दया शक्वर्या ॥ विदेय क्रियासं सनेयमिति त्रयाणां पादानामन्ताः ; एते च तिङः परत्वान्न निहन्यन्ते । हे वेद वेदोसि यद्वित्तं वेद्यात्मकं वेत्तव्यं लब्धव्यं धनं तदेव त्वमसि; तल्लाभहेतुत्वात् । ‘वेदेन वै देवा असुराणां वित्तं वेद्यम्’* इत्यादि ब्राह्मणम् । विन्दतेः कर्मणि घञ् । वित्तिर्लाभः, लाभसाधनं वा त्वमसि धनस्य । तस्मादेव भावे करणे वा क्तिन् । तादृशेन त्वयाऽहं विदेयाभिमतं धनं लप्सीय। विन्दतिस्स्वरितेत्, ‘लिङ्याशिष्यङ्’ । कर्म अनुष्ठानं त्वमसि ; त्वदधीनत्वात् । करुणमनुष्ठापकश्चासि । करोतेरुनन्प्रत्ययः । तादृशेन त्वयाहं क्रियासं कर्ता भूयासम् । सनिस्संविभागः त्वमसि सनितासि संविभक्ता चासि, तादृशेन त्वयाहं सनेयं विन्देयं संविभजेयम् । अधुना परोक्षमुच्यते—घृतवन्तमाज्यवन्तं कुलायिनं नीडवन्तं गृहवन्तं सहस्रिणं सहस्रवन्तं भूयिष्ठवन्तं पुत्रपश्वादिभिः,

*सं. १-७-४.

रायस्पोषꣳ सहस्रिणं वेदो ददातु
वाजिनम् ॥ १४ ॥
आ प्यायतां ध्रुवा घृतेन यज्ञंयज्ञं
प्रति देवयद्भ्यः। सूर्याया ऊधोदित्या

पोषम्। सहस्रिणम्। वेदः। ददातु। वाजिनम् ॥१४॥

इन्द्रस्याहमिन्द्रवन्तस्सोमस्याहं देवयज्यया
चतुश्चत्वारिꣳशच्च ॥ ४ ॥

[1]एति। प्यायताम्। ध्रुवा। घृतेन। यज्ञंयज्ञमिति यज्ञं-यज्ञम्। प्रतीति। देवयद्भ्य इति देवयत्-भ्यः। सूर्यायाः। ऊधः। अदित्याः।

---

वाजिनमन्नवन्तं रायस्पोषं क्षेत्रपश्वादेर्धनस्य पुष्टिमस्मभ्यं वेदो ददातु रायस्पोषं धनवृद्धिं वाजिनमन्नं च ददातु ॥

इति षष्ठे चतुर्थोनुवाकः.

---

[1]ध्रुवमाप्यायमानामनुमन्त्रयते—आ प्यायतामिति। इयं विराट्त्रिष्टुप् ॥ आप्यायतां वर्धतां सदा पूर्यतां घृतेन ध्रुवा। यज्ञंयज्ञं प्रति सर्वेषु यज्ञेषु। वीप्सायां प्रतेः कर्मप्रवचनीयत्वम्। देवयद्भ्यः देवानात्मन इच्छद्भ्यः। 'न छन्दस्यपुत्रस्य' इतीत्वाभावः। देवान्वा देवयद्भ्यः तृप्तान् क्रीडयद्भ्यः ऋत्विग्भ्यः। यथा तेभ्यः पर्याप्तं भवति तथा आप्यायताम्। द्वितीयपक्षे

उपस्थे उरुधारा पृथिवी यज्ञे अ-
स्मिन्न् । प्रजापतेर्विभान्नाम लोक-
स्तस्मिꣳस्त्वा दधामि सह यजमा-

उपस्थ इत्युप—स्थे । उरुधारेत्युरु—धारा । पृथिवी । यज्ञे । अस्मिन्न् । [2]प्रजापतेरिति प्रजा—पतेः । विभानिति वि—भान् । नाम । लोकः । तस्मिन्न् । त्वा । दधामि । सह । यजमानेन ।

लसार्वधातुकानुदात्तत्वाभावश्छान्दसः । सैव ध्रुवा विशेष्यते—सूर्यायास्सूर्यवत्याः द्योस्तिष्ठद्दोस्थानीयायाः ऊधः अधोगतापीनभाग*-स्थानीया । 'सूर्याद्देवतायां चाप्' । अदित्या अदीनायाः पृथिव्या उत्तानायाः उत्सङ्गस्थाना ;† सर्वोपजीव्यत्वात् । देवमातुरेव वोपस्थ उत्सङ्गः, देवानामुपलालनस्थानत्वात् । किञ्च—उरुधारा महाधारा सन्ततप्रस्रवनी पृथिवी विस्तीर्णा । यद्वा—उरुधारा पृथिवी महार्थसाधनपृथिवीस्थानीया । तादृशी ध्रुवास्मिन् यज्ञे सर्वयज्ञार्थमाप्यायतामिति ॥

[2]यजमानभागं प्राश्नाति—प्रजापतेरिति ॥ प्रजापतेर्लोको विभान् सूर्यादिभिर्यो विविधं भाति, सूर्यादिरहितं स्वतेजसा वा, स पुनरयं लोकः । 'अयं वै प्रजापतेः'‡ इत्यादि ब्राह्मणम् । तस्मिन् लोके त्वां दधामि स्थापयामि यजमानेन मया सह हे यजमानभाग ॥

*म—भार. †म—उत्सङ्गस्थानीयायाः. ‡सं. १-७-५.

नेन सदसि सन्मे भूयास्सर्वमसि
सर्वं मे भूयाः पूर्णमसि पूर्णं मे
भूया अक्षितमसि मा मे क्षेष्ठाः
प्राच्यां दिशि देवा ऋत्विजो मार्ज-

[3]सत् । असि । सत् । मे । भूयाः । सर्वम् । असि ।
सर्वम् । मे । भूयाः । पूर्णम् । असि । पूर्णम् ।
मे । भूयाः । अक्षितम् । असि । मा । मे । क्षेष्ठाः ।
[4]प्राच्याम् । दिशि । देवाः । ऋत्विजः । मार्जय-

---

[3]पूर्णपात्र आनीयमाने यजमानं वाचयति—सदसीत्यादि ॥ सत् सत्ताविष्टं यावत्किञ्चित्तत्सर्वं त्वमसि । तस्मात्त्वं सत्ताविष्टं सर्वं मे मम भूयाः भव, सर्वस्य सत्तासाधनं भूयाः, न किञ्चिद-प्यसन्मे भूयात् । यद्वा—सत् शोभनमासि; तस्माद्यावत्किञ्चि-च्छोभनं नः तत्सर्वं मे भूयाः, सर्वं सर्वात्मकमसि, त्वत्तोन्यन्न किञ्चिदस्ति ; तस्मात्सर्वमिष्टं मम त्वं भूयाः, पूर्णं पर्याप्तं सर्व-समृद्धिभिः आप्यायितमसि । ‘वा दान्तशान्त’ इति निष्ठान्तो निपात्यते । तस्मात्त्वं मम पर्याप्तमभिमतं भूयाः । शोभनं च कृत्स्नं च पर्याप्तं च ममाभिमतं सम्पादयेति भावः । अक्षितमनु-पक्षीणमसि ; तस्मान्मद्विषये मा क्षेष्ठाः क्षयं मा गाः, मित्रमिव वर्तस्वेति ॥

[4–8]दिशो व्युत्सिञ्चति—प्राच्यामित्यादि ॥ अत्र ब्राह्मणम् । ‘सर्वाणि वै भूतानि व्रतमुपयन्तमनूपयन्ति’* इति । ततः

*सं. १-७-५.

यन्तां दक्षिणायाम् ॥ १५ ॥ दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञस्संवत्सरो यज्ञपतिर्मार्जयन्तां

न्ताम् । [5]दक्षिणायम् ॥ १५ ॥ दिशि । मासाः । पितरः । मार्जयन्ताम् । [6]प्रतीच्याम् । दिशि । गृहाः । पशवः । मार्जयन्ताम् । [7]उदीच्याम् । दिशि । आपः । ओषधयः । वनस्पतयः । मार्जयन्ताम् । [8]ऊर्ध्वायाम् । दिशि । यज्ञः । संवत्सर इति सं-वत्सरः । यज्ञपतिरिति यज्ञ-पतिः ।

---

प्राच्यां दिशि व्यवस्थिताः ये देवा ऋत्विजश्च ते इदानीं मार्जयन्तां आत्मानं मां च शोधयन्ताम् । 'एष वै दर्शपूर्णमासयोरवभृथः'* इत्यादि ब्राह्मणम् । एतेन दक्षिणायामित्यादयो व्याख्याताः । मासास्त्रिंशदहोरात्रात्मकाः । पितरस्स्वपित्रादयः, सोमपितृमदादयश्च । गृहा आवसथाः येषु निवसन्ति जन्तवः । पशवः द्विविधाः ग्राम्या आरण्याश्च द्विचतुष्पदात्मकाः दोहनवहनादिकार्यक्षमाः । यज्ञो दर्शपूर्णमासादिः । संवत्सरो द्वादशमासात्मकः । यज्ञपतिर्यजमानः, सृष्ट्यादिकृत्प्रजापतिर्वा । शिष्टं स्पष्टम् ॥

---

*सं. १-७-५.

विष्णोः क्रमोस्यभिमातिहा गायत्रेण
छन्दसा पृथिवीमनु वि क्रमे निर्भक्त-
स्स यं द्विष्मो विष्णोः क्रमोस्यभि-
शस्तिहा त्रैष्टुभेन छन्दसान्तरिक्षम-

मार्जयन्ताम् । [9]विष्णोः । क्रमः । असि । अभि-
मातिहेत्यभिमाति–हा । गायत्रेण । छन्दसा ।
पृथिवीम् । अनु । वीति । क्रमे । निर्भक्त इति निः–
भक्तः । सः । यम् । द्विष्मः । [10]विष्णोः । क्रमः ।
असि । अभिशस्तिहेत्यभिशस्ति–हा । त्रैष्टुभेन ।

---

[9—12]विष्णुक्रमान् क्रामति—विष्णोः क्रमोसीति ॥ 'विष्णुमुखा वै देवाः '* इत्यादि ब्राह्मणम् । विष्णोर्भगवतस्त्रीन् लोकान् क्रामतः यः क्रमः पदविक्षेपः स एव त्वमसि यो ममासि । विष्णोरात्मनश्चाभेदोपचारादेवमुच्यते । ब्राह्मणं च भवति 'विष्णुरेव भूत्वा यजमानः '* इत्यादि । 'नोदात्तोपदेशस्य ' इति वृद्ध्यभावः । क्रमो विशेष्यते—अभिमातिहा अभिमातिः पाप्मा तस्य हन्ता त्वमसि, यतो विष्णोः क्रमोसि । यद्वा—यो विष्णोः क्रमोस्यभिमातिहा त्रिविक्रमरूपस्य भगवतः विष्णोः सर्वलोकाक्रमणक्षमः क्रमः पदविक्षेपः सर्वानिष्टहन्ता स एव त्वमसि यो मदीयः क्रमः ; अतस्तादृशेन त्वयानुक्रमेण विक्रमणेनाभिजयामि सर्वमप्रतिबन्धेन । 'वृत्तिसर्गतायनेषु क्रमः ' इत्यात्मने-

---

*सं. १-७-५.

नु वि क्रमे निर्भक्तस्स यं द्विष्मो विष्णोः क्रमोस्यरातीयतो हन्ता जागतेन छन्दसा दिवमनु वि क्रमे निर्भक्तस्स यं द्विष्मो विष्णोः क्र-

छन्दसा । अन्तरिक्षम् । अनु । वीति । क्रमे । निर्भक्त इति निः-भक्तः । सः । यम् । द्विष्मः ।
11 विष्णोः । क्रमः । असि । अरातीयतः । हन्ता । जागतेन । छन्दसा । दिवम् । अनु । वीति । क्रमे । निर्भक्त इति निः-भक्तः । सः । यम् । द्विष्मः ।
12 विष्णोः । क्रमः । असि । शत्रूयत इति शत्रु-

पदम् । पूर्वं देवा गायत्र्यादिभिश्छन्दोभिः पृथिव्यादीन् लोकानभ्यजयन् ; अत इदमुच्यते—गायत्रेण छन्दसेति । गायत्र्याद्यात्मकत्वाच्च पृथिव्यादीनाम् । यथोक्तं—'गायत्री वै पृथिवी'* इत्यादि । तद्वदहमपि गायत्रेण छन्दसा पृथिवीमनुविक्रम इति । गायत्र्येव गायत्रम् । 'छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसङ्ख्यानम्' इत्यण्प्रत्ययः । पूर्वं विष्णुना क्रान्तां पृथिवीं पश्चादिदानीमहं विक्रम इत्यनोरर्थः । इत्थं यस्माद्विष्णुरेव भूत्वाहं विक्रमे त्वं च यथा विष्णोः क्रमोसि अतो निर्भक्तः स मया क्रान्तया इतः पृथिव्या स निर्भक्तः निर्वासितो विनाशितोस्तु यं द्विष्मः । उपक्रमे श्रुतत्वाद्भिमातिर्गम्यते । 'गतिरनन्तरः'

*सं, १-७-५.

मोसि शत्रूयतो हन्तानुष्टुभेन छन्द-
सा दिशोनु वि क्रमे निर्भक्तस्स
यं द्विष्मः ॥ १६ ॥
अगन्म सुवस्सुवरगन्म सन्दृशस्ते

यतः । हन्ता । आनुष्टुभेनेत्यानु–स्तुभेन । छन्दसा । दिशः । अनु । वीति । क्रमे । निर्भक्त इति निः–भक्तः । सः । यम् । द्विष्मः ॥ १६ ॥

दक्षिणायामन्तरिक्षमनु वि क्रमे निर्भक्तस्स
यं द्विष्मो विष्णोरेकान्न त्रिꣳशच्च ॥५॥

[1]अगन्म । सुवः । सुवः । अगन्म । संन्दृश

इति गतेः प्रकृतिस्वरत्वम् । एतेनोत्तरे व्याख्याताः । अभिशस्तिरभिशंसनं अकृतगर्होक्तिः । त्रिष्टुब्जगत्यनुष्टुप्शब्देभ्य उत्सादित्वादञ्, 'छन्दसः प्रत्ययविधाने' इत्यस्य प्राग्दीव्यतीयत्वात् । अरातीयतः अरातित्वमस्माकमिच्छतः, अरातिं वात्मन इच्छतः हन्ता हन्तुमर्हः । 'अर्हे कृत्यतृचश्च' इति तृच् । 'शतुरनुमः' इति षष्ठ्या उदात्तत्वम् । हननशीलो वा हन्ता । ताच्छीलिकस्तृन्, छान्दसमन्तोदात्तत्वम् । अरातीयत इति द्वितीयाबहुवचनम् । एवं शत्रूयत इत्यत्रापि वेदितव्यम् ॥

इति षष्ठे पञ्चमोनुवाकः.

---

[1]आहवनीयमुपतिष्ठते—अगन्मेति ॥ सुवस्स्वर्गमगन्म गमिष्यामः, गम्यास्म वा, सर्वेपि वयं सपुत्रपौत्राः । छान्दसो लुङ्, 'मन्त्रे

मा छिंत्सि यत्ते तपस्तस्मैं ते मा
वृंक्षि सुभूरसि श्रेष्ठो रश्मीनामां-

इति सं-दृशः । ते । मा । छित्सि । यत् । ते ।
तपः । तस्मैं । ते । मा । एतिं । वृक्षि । [2]सुभूरितिं
सु-भूः । असि । श्रेष्ठः । रश्मीनाम् । आयुर्धा

---

घस ' इति च्लेर्लुक् । स्वर्गे भोक्तव्यानि भुक्त्वा पश्चात्सुवः सुष्ठु अरणीयं आदित्यान्तरपुरुषं मुक्तिस्थानमगन्म गमिष्यामः गम्यास्म वा । स एव लुङ् । पूर्वाभिधानेन पूर्वस्मादस्याभ्यर्हितत्वं द्योतयति। तदर्थमहं तव सन्दृशः सन्दर्शनात् अनुध्यानलक्षणात् मा छित्सि आछेद्यो मा भूवम् । आत्माभिप्रायमेकवचनम् । आत्मनोऽच्छेदनस्य सर्वार्थसाधनत्वात् । किञ्च—यत्ते त्वदर्थं तपः कर्म यागादि तस्मै तदर्थं ते तव प्रसादात् तत एव वा सन्दृशः मा वृक्षि मा विवर्ज्यो भूयासम् । वृजी वर्जने । यद्वा—व्रश्चनीयो मा भूवं, त्वत्परिचरणव्यापारो यथा मा विच्छेदि तथानुध्यातुमर्हसीति ॥

[2]आदित्यमुपतिष्ठते—सुभूरिति ॥ सुष्ठु भवति उदेतीति सुभूः शोभनभवनोसि सर्वबोधकामाभिमतत्वात् । सुष्ठु भावयतीति वा सुभूः। ' बहुलं संज्ञाछन्दसोः ' इति णिलुक्, कृदुत्तरपदप्रकृतिस्वरत्वम्, बहुव्रीहित्वेन ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् । ईदृशोसि हे भगवन्निति । किञ्च—श्रेष्ठः प्रशस्यतरः श्रेष्ठो रश्मीनां रश्मिमतामग्निचन्द्रतारादीनां मध्ये, तेषामपि वा, प्रशस्यतमः । ' नामन्यतरस्याम् ' इति नाम उदात्तत्वम् । आयुर्धाः आयुषो धाता

युर्धा असि आयुर्मे धेहि वर्चोधा असि
वर्चो मयि धेहीदमहममुं भ्रातृव्य-
माभ्यो दिग्भ्योऽस्यै दिवोऽस्मादन्त-
रिक्षादस्यै पृथिव्या अस्मादन्नाद्या-

इत्यायुः-धाः । असि । आयुः । मे । धेहि । वर्चोधा इति वर्चः-धाः । असि । वर्चः । मयि । धेहि । [3]इदम् । अहम् । अमुम् । भ्रातृव्यम् । आभ्यः । दिग्भ्य इति दिक्-भ्यः । अस्यै । दिवः । अस्मात् । अन्तरिक्षात् । अस्यै । पृथिव्याः । अस्मात् ।

---

दातासि । स त्वं मे मम आयुर्धेहि देहि । वर्चोधाः वर्चसो बलस्य धाता स्थापयिता चासि त्वं मयि वर्चो धेहि स्थापय ॥

[3]सर्वतो भ्रातृव्यं निर्भजति—इदमहमिति ॥ इदमिति क्रिया-विशेषणम् । इदं निर्भजामि । अमुमिति भ्रातृव्याणां सामान्येन निर्देशः । विशेषनामानि च त[भ]दन्तादीन्यत्र निर्देष्टव्यानि । अमुं भ्रातृव्यं सपत्नम् । 'व्यन् सपत्ने' । आभ्यस्स-र्वाभ्योपि दिग्भ्यो निर्भजामीति भविष्यति । 'ऊडिदम्' इतीदमः पञ्चम्युदात्ता । 'सावेकाचः' इति दिग्भ्यः, अस्यास्तु 'स्वरितो वानुदात्ते पदादौ' इति संहितायामेकादेशस्य स्वरितत्वम् । अस्यै अस्या दिवः द्युलोकात् । पञ्चम्यर्थे चतुर्थी । पूर्ववद्विभक्तेरुदा-त्तत्वं ; अन्वादेशाभावात् । पूर्वत्र इदमो विभक्त्युदात्तत्वमेव । अस्मा-दन्तरिक्षात् । गतम् । अस्यै पृथिव्या इति । 'उदात्तयणः'

न्निर्भजामि निर्भक्तस्स यं द्विष्मः ॥ १७॥ सं ज्योतिषाभूवमैन्द्रीमा-

अन्नाद्यादित्यन्न–अद्यात् । निरिति । भजामि । निर्भक्त इति निः–भक्तः । सः । यम् । द्विष्मः ॥ १७ ॥ [4]समिति । ज्योतिषा । अभूवम् । [5]ऐन्द्रीम् । आवृतामित्या–वृतम् । अन्वावर्त इत्यनु–

---

इति पञ्चम्युदात्ता । अस्मात्प्रसिद्धादन्नाद्यात्, अन्नस्यादनमन्नाद्यं । अन्नमेव वात्तव्यमन्नाद्यम् । छान्दसो यत् । निर्भजामि निर्वासयामि । ततश्च स निर्भक्तः दूरीकृतः यं च वयं द्विष्म इति। गतम् ॥

[4]आत्मानमभिमृशति—सं ज्योतिषेति ॥ ज्योतिषा दीप्त्याहं समभूवमेकीभूतोस्मीति । छान्दसो वा लुङ् । कृतकर्माहमादित्यस्य परमेण वा ज्योतिषा एकीभूयासमिति । यद्वा—'आशंसायां भूतवच्च' इति भविष्यति लुङ् । इदानीमेव ज्योतिषा सम्भविष्यामीति ॥

[5]उदङ्पर्यावर्तते—ऐन्द्रीमिति ॥ ऐन्द्रीमावृतमावृत्तिं पर्यावृत्तिं अहमन्वावर्तेनुगन्तास्मि । इन्द्रेण पूर्वकृतामनु पश्चादहमनुवर्ते । यद्वा—लक्षणेऽनोः कर्मप्रवचनीयत्वम्, ऐन्द्र्यावृत्त्या इयमावृत्तिर्लक्ष्यत इति । इन्द्र आदित्यः । 'असौ वा आदित्य इन्द्रः'* इत्यादि ब्राह्मणम् ॥

---

*सं. १-७-६.

वृतमन्वावर्ते समहं प्रजया सं मया
प्रजा समहᳫं रायस्पोषेण सं मया
रायस्पोषस्समिद्धो अग्ने मे दीदिहि

आवर्ते । [6]समिति । अहम् । प्रजयेति प्र—जया ।
समिति । मया । प्रजेति प्र—जा । समिति ।
अहम् । रायः । पोषेण । समिति । मया । रायः ।
पोषः । [7]समिद्ध इति सं—इद्धः । अग्ने । मे । दीदिहि ।
समेद्धेति सं—एद्धा । ते । अग्ने । दीद्यासम् ।

[6]उपतिष्ठते—समहमिति ॥ ससाधनां क्रियामुपसर्ग आह । सा 'सं ज्योतिषाभूवम्'* इति मन्त्रान्तरेऽनन्तरप्रकृतत्वाद्भवतिक्रियेति विज्ञायते, गमनक्रिया वा । अहं प्रजया सम्भूयासम्, सङ्गंसीय वा । प्रजा च मया सह सम्भूयात्, सङ्गंसीष्ट वा । रायो धनस्य क्षेत्रपश्वादेः पोषेण पुष्ट्याहं सम्भूयासं, सङ्गंसीय वा । रायस्पोषश्च मया सह सम्भूयात्, सङ्गंसीष्ट वा ॥

[7]समिधमादधाति—समिद्ध इति ॥ हे अग्ने समिद्धः अनया समिधा सम्यग्दीपितः । कर्मणि निष्ठा, 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः, 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । स त्वं मे मदर्थे दीदिहि दीप्यस्व । दीदितिर्दीप्तिकर्मा छान्दसः । अहं च ते समेद्धा सन्दीपयिता । इडभावानुनासिकलोपौ छान्दसौ । सोहं त्वदर्थमेव दीद्यासं दीधिषीय । धातोरन्तलोपश्छान्दसः ॥

*सं. १-६-६[4].

समेद्धा ते अग्ने दीद्यासं वसुमान्
यज्ञो वसीयान्भूयासमग्न आयूꣳषि
पवस आ सुवोर्जमिषं च नः । आरे
बाधस्व दुच्छुनाम् । अग्ने पवस्व

[8]वसुमानिति वसु–मान् । यज्ञः । वसीयान् । भूयासम् । [9]अग्ने । आयूꣳषि । पवसे । एति । सुव । ऊर्जम् । इषम् । च । नः । आरे । बाधस्व । दुच्छुनाम् । [10]अग्ने । पवस्व । स्वपा इति सु–अपाः ।

[8]उपतिष्ठते—वसुमानिति ॥ अयं यज्ञः त्वत्प्रसादाद्वसुमान्धनवान् प्रशस्तैरेव बहुभिर्धनैस्तद्वान् । प्रसिद्धमिदम् । अहमपि त्वत्प्रसादाद्वसीयान् ततोपि वसुमत्तरोहं भूयासम् । वसुमच्छब्दादीयसुनि 'विन्मतोर्लुक्' 'टेः' इति टिलोपः ॥

[9–10]गार्हपत्यमुपतिष्ठते—अग्ने आयूंषीति गायत्रीभ्याम् ॥ व्याख्याते चैते 'त्वमग्ने रुद्रः'* इत्यत्र । हे अग्ने आयूंषि अन्नानि जीवनानि वा अस्मदीयानि त्वं खलु पवसे शोधय । यथा वर्धन्ते न क्षीयन्ते तथा कुर्विति भावः । नोस्माकमन्नमदनीयं भक्ष्यभोज्यादिकं ऊर्जं क्षीराज्यादिकं रसं चानुजानीह्याभिमुख्येन प्रेरय उत्पादय, सर्वदा देहीति भावः । दुच्छुनां दौर्गत्यादिसर्वोपद्रवान् दूरे नीत्वा बाधस्व विनाशय । हे अग्ने शोभनकर्मा त्वमसि अस्मान् शोभनानुष्ठानान् कुरु । अस्मदर्थं शोभनं वीर्यं तेजो दीप्तिं च बलं

*सं. १-३-१४[23–24].

स्वपा अस्मे वर्चस्सुवीर्यम् ॥ १८॥
दधत्पोषꣳ रयिं मयि । अग्ने गृह-
पते सुगृहपतिरहं त्वया गृहपतिना
भूयासꣳ सुगृहपतिर्मया त्वं गृहप-
तिना भूयाश्शतꣳ हिमास्तामाशि-
षमा शासे तन्तवे ज्योतिष्मतीं

अस्मे इति । वर्चः । सुवीर्यमिति सु-वीर्यम् ॥ १८॥
दधत् । पोषम् । रयिम् । मयि । [11]अग्ने । गृहपत
इति गृह-पते । सुगृहपतिरिति सु-गृहपतिः ।
अहम् । त्वया । गृहपतिनेति गृह-पतिना । भूया-
सम् । सुगृहपतिरिति सु-गृहपतिः । मया । त्वम् ।
गृहपतिनेति गृह-पतिना । भूयाः । शतम् । हिमाः ।

---

वा शोधय प्रापय । पोषं वृद्धियुक्तं रयिं धनं च मयि दधत् स्थापयन्निति ॥

[11]अत्रैव 'अग्ने गृहपते' इत्यादि यजुर्व्याख्यातं अग्न्युपस्थाने 'सं पश्यामि '* इत्यत्र ॥ हे अग्ने गृहकर्मणां पातः अहं त्वया गृहपतिना गृहकर्मणां पात्रा सह सुगृहपतिः सुष्ठु गृहकर्मणां पाता भूयासम् । मया च गृहपतिना त्वं सुगृहपतिः भूयाः । शतं वर्षाणि तां ज्योतिष्मतीं ब्रह्मवर्चसप्रधानामाशिषम् । अप्राप्ता-

---

*सं. १-५-६.16.

तामाशिषमा शासेमुष्मै ज्योति-
ष्मतीं कस्त्वा युनक्ति स त्वा वि
मुञ्चत्वग्ने व्रतपते व्रतमचारिषं तद-
शकं तन्मेराधि यज्ञो बभूव स

ताम् । आशिषमित्या-शिषम् । एति । शासे । तन्तवे । ज्योतिष्मतीम् । ताम् । आशिषमित्या-शिषम् । एति । शासे । अमुष्मै । ज्योतिष्मतीम् । [12]कः । त्वा । युनक्ति । सः । त्वा । वीति । मुञ्चतु । [13]अग्ने । व्रतपत इति व्रत-पते । व्रतम् । अचारिषम् । तत् । अशकम् । तत् । मे । अराधि । [14]यज्ञः ।

---

भिमतार्थनमाशीः । तन्तवे सन्तानायाजाताय पुत्रादये आशासे प्रार्थये । अमुष्मै च जाताय देवदत्तादये तां ज्योतिष्मतीमाशिषमाशासे इति ॥

[12]यज्ञं विमुञ्चति—कस्त्वेति ॥ कः प्रजापतिस्त्वां युनक्ति, अतस्स एव त्वां विमुञ्चतु हे यज्ञ स एव त्वां विमोक्तुं चार्हतीति ॥

[13]समिध आदधाति, व्रतं च विमुञ्चति—अग्ने व्रतपत इति ॥ हे अग्ने व्रतानां पातः त्वत्प्रसादाद्व्रतमचारिषं यथाशक्त्यनुष्ठितवानस्मि । त्वत्प्रसादात्तदशकं तत्प्रसाधयितुं शक्त एवाभूवम् । एतेन वैगुण्याभावः प्रतिपादितः । प्रसाधितत्वादेव तन्मे व्रतमराधि सिद्धमभूत् । एतेन फलसम्पत्तिरुक्ता ॥

[14]यज्ञस्य पुनरालम्भं जपति—यज्ञो बभूवेति । इयं पञ्चपदा

आ ॥ १९ ॥ बभूव स प्र जज्ञे स वावृधे । स देवानामधिपतिर्बभूव सो अस्मा॑ अधिपतीन्करोतु वय॑ स्याम पतयो रयीणाम् । गोमा॑

बभूव । सः । एति ॥ १९ ॥ बभूव । सः । प्रेति । जज्ञे । सः । वावृधे । सः । देवानाम् । अधिपतिरित्यधि-पतिः । बभूव । सः । अस्मान् । अधिपतीनित्यधि–पतीन् । करोतु । वयम् । स्याम । पतयः । रयीणाम् । [15]गोमानिति गो–मान् । अग्ने । आविमानित्यवि–मान् । अश्वी । यज्ञः । नृवत्सखेति

---

जगती ॥ यज्ञोयं बभूव निवृत्तोभूत् । स आबभूव स निर्वृत्तोस्माकमावृत्त्या भवतु पुनःपुनर्भवतु । छान्दसो लिट् । स प्रजज्ञे प्रजातः प्रज्ञातो वास्तु. प्रसिद्धोस्तु । स वावृधे स प्रसिद्धो बर्धताम् । 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम् । स च प्रसिद्धो देवानामधिपतिहेतुत्वादधिपतिः अधिकं पालयिता भवतु । स तादृशस्सन्नस्मानप्यधिपतीन् मनुष्याणामधिकं पालयितॄन् करोतु । तदर्थं वयं रयीणां धनानां पतयस्स्वामिनस्स्याम भवेम । पूर्ववन्नाम उदात्तत्वम् ॥

[15]प्राङुत्क्रम्य गोमतीं जपति—गोमानिति त्रिष्टुभा ॥ यज्ञः पुनराभवत्वित्युक्तं, कीदृशः स आभवत्विति स विशेष्यते—हे अग्ने गोभिर्बहुभिः अविभिरश्वैश्च तद्वान् नृवत्सखा मनुष्यवन्तो

अग्नेर्विमा॑ऽअश्वी य॒ज्ञो नृ॒वत्स॑खा स॒द॒मिद॑प्रमृ॒ष्यः । इडा॑वा॒ऽ ए॒षो अ॑सुर प्र॒जावा॑न्दी॒र्घो र॒यिः पृ॑थुबु॒ध्न॑स्स॒भावा॑न् ॥ २० ॥

नृ॒वत्–स॒खा । सद॑म् । इत् । अ॒प्र॒मृ॒ष्य इत्य॑प्र–मृ॒ष्यः । इडा॑वा॒निती॑डा–वा॒न् । ए॒षः । अ॒सु॒र । प्र॒जावा॒निति॑ प्र॒जा–वा॒न् । दी॒र्घः । र॒यिः । पृ॒थु॒बु॒ध्न इति॑ पृथु–बु॒ध्नः । स॒भावा॒निति॑ स॒भा–वा॒न् ॥२०॥

ह॒विष्म॑स्सु॒वीर्य॑ऽ स आ पश्वां॑त्रिँ॑ऽशच्च ॥६॥

देवास्सखायो यस्य तादृशः । छान्दसम्मतुपो वत्वम् । सदमित्सदैवाप्रमृष्यः अनभिभवनीयः । 'ऋदुपधाच्चाक्लृपिचृतेः' इति क्यप्, 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । इडावानन्नवान् । 'दीर्घादटि समानपादे' इति नकारस्य संहितायां रुत्वम् । प्रजावान् दीर्घः सन्ततिमान् अविच्छिन्नः पृथुबुध्नः विस्तीर्णमूलः रयिः साक्षाद्धनं च सभावान् गृहवान् एष ईदृशो यज्ञः पुनःपुनराभवतु आगच्छतु कालेकाले असुर असुमान् प्राणवान् । मत्वर्थीयो रः, सुलुक् ॥

इति षष्ठे षष्ठोनुवाकः.

यथा वै संमृतसोमा एवं वा एते
संमृतयज्ञा यद्दर्शपूर्णमासौ कस्य
वाह देवा यज्ञमागच्छन्ति कस्यं वा
न बहूनां यजमानानां यो वै देवताः
पूर्वः परिगृह्णाति स एनाश्वो भूते

[1]यथा । वै । संमृतसोमा इति समृत—सोमाः । एवम् । वै । एते । समृतयज्ञा इति समृत—यज्ञाः । यत् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । कस्यं । वा । अह । देवाः । यज्ञम् । आगच्छन्तीत्या—गच्छन्ति । कस्यं । वा । न । बहूनाम् । यजमानानाम् । यः । वै । देवताः । पूर्वः । परिगृह्णातीति परि—गृह्णाति । सः । एनाः । श्वः ।

[1]अतः परं दर्शपूर्णमासयोर्याजमानब्राह्मणं प्राजापत्यमेव काण्डम्। तत्राग्न्यन्वाधानं विधातुमाह—यथा वा इत्यादि ॥ यथा समृतानां सम्प्राप्तानां पूर्वपरिगृहीतानां सोमास्सोमयागाः, केचित्सवादयोपि भवन्ति । यथा 'पूर्वो वाचं पूर्वो देवताः पूर्वश्छन्दांसि वृङ्क्ते'* इति । एवमेते दर्शपूर्णमासयाजिनः समृतयज्ञाः सम्भूतयज्ञाः पूर्वपरिगृहीतानां देवानां भवन्ति । उभयत्रापि शाकपार्थिवत्वात्समासः । कारणमाह—कस्य वेत्यादि । यजमानानां बहुत्वे कस्य यज्ञं देवा देवादय आगच्छेयुः कस्य न? न हि

*सं. ७-५-५.

यंजत एतद्वै देवानामायतनं यदा-
हवनीयोन्तराग्नी पशूनां गार्हपत्यो
मनुष्याणामन्वाहार्यपचनः पितृणा-
मग्निं गृह्णाति स्व एवायतने देवताः
परि ॥ २१ ॥ गृह्णाति ताश्श्वो भूते

भूते । यजते । एतत् । वै । देवानाम् । आयतन-
मित्या-यतनम् । यत् । आहवनीय इत्या-हव-
नीयः । अन्तरा । अग्नी इति । पशूनाम् । गार्हप-
त्य इति गारूह-पत्यः । मनुष्याणाम् । अन्वाहा-
र्यपचन इत्यन्वाहार्य-पचनः । पितृणाम् । अग्निम् ।
गृह्णाति । स्वे । एव । आयतन इत्या-यतने ।
देवताः । परीति ॥ २१ ॥ गृह्णाति । ताः । श्वः ।

---

प्रथमपरिगृहीताहते नियमकारणं किञ्चिदस्ति तदेवाह—यो वा इत्यादि । पश्वादीनां देवतात्वमस्त्येव; तस्मात्पूर्वेद्युरेव देवता-परिग्रहार्थमन्वाधानं कर्तव्यमिति । मन्त्रलिङ्गं च 'ताः पूर्वः परि-गृह्णामि'* इति । अथ कुत्र का देवता परिगृह्यते इत्याह—एतद्वा इत्यादि । आहवनीयगार्हपत्ययोर्मध्यं पशूनामायतनम् । 'अन्त-रान्तरेण युक्ते' इति द्वितीया । गार्हपत्य इति । 'गृहपतिना संयुक्ते ञ्यः' इति ञ्यः । अन्वाहार्य ओदनः पच्यतेस्मिन्निति

---

*ब्रा. ३-७-४.

यजते व्रतेन वै मेध्योऽग्निर्व्रतपतिर्ब्राह्मणो व्रतभृद्व्रतमुपैष्यन्ब्रूयादग्ने व्रतपते व्रतं चरिष्यामीत्यग्निर्वै देवानां व्रतपतिस्तस्मा एव प्रतिप्रोच्य व्रतमा लभते बर्हिषा पूर्णमासे व्रतमु-

भूते । यजते । [2]व्रतेन । वै । मेध्यः । अग्निः । व्रतपतिरिति व्रत–पतिः । ब्राह्मणः । व्रतभृदिति व्रत–भृत् । व्रतम् । उपैष्यन्नित्युप–एष्यन् । ब्रूयात् । अग्ने । व्रतपत इति व्रत–पते । व्रतम् । चरिष्यामि । इति । अग्निः । वै । देवानाम् । व्रतपतिरिति व्रत–पतिः । तस्मै । एव । प्रतिप्रोच्येति प्रति–प्रोच्य । व्रतम् । एति । लभते । बर्-

---

अन्वाहार्यपचनो दक्षिणाग्निः । पितॄणामिति । 'नामन्यतरस्याम्' इति षष्ठ्या उदात्तत्वम् । अग्निं गृह्णातीत्यादि गतम् ॥

[2]अथ व्रतोपनयनं विधातुमाह—व्रतेन वा इत्यादि ॥ यदि व्रतचारी यजमानस्स्यात्तदा अग्निर्व्रतपतिः व्रतस्य पाता मेध्यो मेधार्हो भवति । स्वयं च ब्राह्मणो व्रतभृत् व्रतधारी भवति ; तस्माद्व्रतमुपेयादिति । व्रतमुपैष्यन्नित्यादि । व्रतपतिमग्निमामन्त्र्य तस्मै निवेद्य व्रतमारभते इति । 'एत्येधत्यूठ्सु' इति वृद्धिः । बर्हिषेत्यादि । बर्हिराहरणेन तत्कालेन सह, बर्हिराहरणानन्तरमिति

पैति वत्सैरमावास्यायामेतद्ध्यैतयो-
रायतनमुपस्तीर्यः पूर्वश्चाग्निरपरश्चे-
त्याहुर्मनुष्याः ॥ २२ ॥ इन्न्वा उप-
स्तीर्णमिच्छन्ति किमु देवा येषां

हिषा। पूर्णमास इति पूर्ण-मासे। व्रतम्। उपेति। एति। वत्सैः। अमावास्यायामित्यमा-वास्या-याम्। एतत्। हि। एतयोः। आयतनमित्या-यतनम्। [3]उपस्तीर्य इत्युप-स्तीर्यः। पूर्वः। च। अग्निः। अपरः। च। इति। आहुः। मनुष्याः ॥ २२ ॥ इत्। नु। वै। उपस्तीर्णमित्युप-स्तीर्णम्। इच्छन्ति। किम्। उ। देवाः। येषाम्।

---

यावत्। वत्सैर्वत्सानामपाकरणेन तत्कालेन सह वत्सेष्वपाकृतेष्वित्यर्थः। उक्तश्च—'वत्सं संयोगे व्रतचोदना स्यात्'*। अयश्च सन्नयतोसन्नयतश्च कालः। 'कालस्सन्नयनपक्षे तल्लिङ्गसंयोगात्'†

[3]अथोपस्तरणं विधातुमाह—उपस्तीर्य इत्यादि ॥ उपस्तीर्यः उपस्तरितव्यः। छान्दसः क्यप्। दर्भैः पूर्वेद्युरेवोभावग्नी उपस्तृणुयात् तयोस्समीपे परितस्स्तृणुयात्। मनुष्या अपि खलूपस्तीर्णं समन्तादाच्छादितं निवासं गृहमिच्छन्ति किम्पुनर्देवाः, येषामायतनं नवावसानं नूतनाध्यवसायम्। यद्वा—अवसानं गृहम्। तेन

*मी—६-४-३४. †मी—६-४-४३.

नवा॑वसान॒मुपा॑स्मि॒न्छ्वो य॒क्ष्यमा॑णे
दे॒वता॑ वसन्ति॒ य ए॒वं वि॒द्वान॒ग्निमु॑प
स्तृ॒णाति॒ यज॑मानेन ग्रा॒म्याश्च॑ प॒श-
वो॑व॒रुध्या॑ आर॒ण्याश्चेत्या॑हु॒र्यद्ग्रा॒म्या-
नु॒प॒ वस॑ति॒ तेन॑ ग्रा॒म्यानव॑ रुन्धे॒
यदा॑र॒ण्यस्या॒श्नाति॒ तेना॑र॒ण्यान्॒ यद्-

नवा॑वसान॒मिति॒ नव॑—अ॒व॒सा॒न॒म् । उपेति॑ । अ॒-
स्मि॒न्॒ । श्वः । य॒क्ष्यमा॑णे । दे॒वता॑ः । व॒स॒न्ति॒ ।
यः । ए॒वम् । वि॒द्वान् । अ॒ग्निम् । उ॒प॒स्तृ॒णाती-
त्यु॑प—स्तृ॒णाति॑ । [4]यज॑मानेन । ग्रा॒म्याः । च॒ ।
प॒शव॑ः । अ॒व॒रुध्या॒ इत्य॑व—रु॒ध्या॑ः । आ॒र॒ण्याः ।
च॒ । इति॑ । आ॒हु॒ः । यत् । ग्रा॒म्यान् । उ॒प॒व॒स॒ती-
त्यु॑प—वस॑ति । तेन॑ । ग्रा॒म्यान् । अवेति॑ । रु॒न्धे॒ ।
यत् । आ॒र॒ण्यस्य॑ । अ॒श्नाति॑ । तेन॑ । आ॒र॒ण्यान्।

कर्मधारये दासीभारादिर्द्रष्टव्यः । उपास्मिन्नित्यादि । उपवसन्ति उपेत्य वसन्ति देवा अस्मिन्निति । विद्वान्वेदार्थवित् ॥

[4]अथ सायमाशविषये विकल्पभेदानाह—यजमानेनेत्यादि ॥ ग्राम्याणामनशनेन अवरोधः आरण्यानां तन्मांसाद्यशनेन । तत्र गोश्वाजाविपुरुषगर्दभोष्ट्राः सप्त ग्राम्याः पशवः । द्विखुरश्वापदपक्षिमत्सचसरीसृपहस्तिमर्कटादयः सप्तारण्याः । यदनाश्वानित्यादि । यदि

नाश्वानुपवसेत्पितृदेवत्यस्स्यादार-
ण्यस्याश्नातीन्द्रियम् ॥ २३ ॥ वा
आरण्यमिन्द्रियमेवात्मन्धत्ते यदना-
श्वानुपवसेत्क्षोधुकस्स्याद्यदश्नीयाद्रु-
द्रोस्य पशूनभि मन्येतापोश्नाति
तन्नेवाशितं नेवानाशितं न क्षोधुको

यत् । अनाश्वान् । उपवसेदित्युप—वसेत् । पितृ-देवत्य इति पितृ—देवत्यः । स्यात् । आरण्यस्य । अ-श्नाति । इन्द्रियम् ॥२३॥ वै । आरण्यम् । इन्द्रियम् । एव । आत्मन्न् । धत्ते । [5]यत् । अनाश्वान् । उप-वसेदित्युप—वसेत् । क्षोधुकः । स्यात् । यत् । अश्नीयात् । रुद्रः । अस्य । पशून् । अभीति । मन्येत । अपः । अश्नाति । तत् । न । इव ।

सायं किञ्चिदप्यनशित्वाग्निसमीपे वसेत् । 'उपेयिवान्' इत्यादौ निपातितः । पितृदेवत्यस्स्याद्यागः, तेषामनशनप्रियत्वात् । 'देवता-न्तात्तादर्थ्ये यत्' । आरण्यस्येन्द्रियसाधनत्वात्तदशनेन तल्लाभ इत्या-रण्याशनकल्पः प्रथमः ॥

[5]अथ द्वितीयोऽपामशनकल्पः—यदित्यादि ॥ क्षोधुको बुभुक्षा-शीलः दरिद्रो वा । छान्दस उकञ् । अभिमन्येताभिक्रुध्येत् । नेवाशित-

भवंति नास्यं रुद्रः पशूनभि मंन्यते
वज्रो वै यज्ञः क्षुत्खलु वै मंनुष्यंस्य
भ्रातृंव्यो यदनांश्वानुपवसंति वज्रे-
णैव साक्षात्क्षुधं भ्रातृंव्यꣳ ह-
न्ति ॥ २४ ॥

अशितम् । न । इव । अनंशितम् । न । क्षोधुंकः । भवंति । न । अस्य । रुद्रः । पशून् । अभीतिं । मन्यते । [6]वज्रः । वै । यज्ञः । क्षुत् । खलुं । वै । मनुष्यंस्य । भ्रातृंव्यः । यत् । अनांश्वान् । उपवसतीत्युंप—वसंति । वज्रेण । एव । साक्षादितिं स—अक्षात् । क्षुधंम् । भ्रातृंव्यम् । हन्ति ॥ २४॥

परिं मनुष्यां इन्द्रियꣳ साक्षात्त्रीणिं च ॥७॥

---

मिति । नभावः । पीतवन्तमशितवन्तमाहुः । नेवानशितं, अपामशितत्वात् ॥

[6]अथानशनकल्पः तृतीयः—वज्र इति ॥ क्षुल्लक्षणमनशनलक्षणेन यज्ञात्मना वज्रेण हन्तीति क्षोधुकत्वदोषाप्रसङ्गः । 'व्यन् सपत्ने' इति व्यन् ॥

इति षष्ठे सप्तमोनुवाकः.

यो वै श्रद्धामनारभ्य यज्ञेन यजते
नास्येष्टाय श्रद्दधतेऽपः प्रणयति
श्रद्धा वा आपश्श्रद्धामेवारभ्य यज्ञे-
न यजत उभयेस्य देवमनुष्या इष्टा-
य श्रद्दधते तदाहुरति वा एता वर्त्रं
नेदन्त्यति वाचं मनो वावैता नाति

[1]यः । वै । श्रद्धामिति श्रत्-धाम् । अनारभ्येत्यना-रभ्य । यज्ञेन । यजते । न । अस्य । इष्टाय । श्रत् । दधते । अपः । प्रेति । नयति । श्रद्धेति श्रत्-धा । वै । आपः । श्रद्धामिति श्रत्-धाम् । एव । आरभ्येत्या-रभ्य । यज्ञेन । यजते । उभये । अस्य । देवमनुष्या इति देव-मनुष्याः । इष्टाय । श्रत् । दधते । तत् । आहुः । अतीति । वै । एताः । वर्त्रम् । नेदन्ति । अतीति । वाचम् । मनः । वाव ।

[1]अपां प्रणयनं विधातुमाह—यो वा इत्यादि ॥ 'श्रदन्तरोरुपसर्गवद्वृत्तिः' इति दधातेः 'आतश्चोपसर्गे' इत्यङ् । अनारभ्यासन्निधाप्य न श्रद्दधते देवा मनुष्याश्च । विशिष्टदेशमन्त्रक्रमपाठ*साधनं प्रणयनम् । 'श्रद्धा वा आपः' इति शोधकत्वेन श्रद्धाजनकत्वात् । तदाहुरित्यादि । वर्त्रं शरीरेन्द्रियवृत्तिः ।

*तं—मन्त्रकमपां.

नेदन्तीति मनसा प्रणयतीयं वै मनः ॥ २५ ॥ अनयैवैनाः प्रणयत्यस्कन्नहविर्भवति य एवं वेद यज्ञायुधानि सं भरति यज्ञो वै यज्ञायुधानि

एताः । न । अतीति । नेदन्ति । इति । मनसा । प्रेति । नयति । इयम् । वै । मनः ॥ २५ ॥ अनया । एव । एनाः । प्रेति । नयति । अस्कन्नहविरित्यस्कन्न–हविः । भवति । यः । एवम् । वेद । [2]यज्ञायुधानीति यज्ञ–आयुधानि । समिति । भरति । यज्ञः । वै । यज्ञायुधानीति यज्ञ–आयुधानि । यज्ञम् । एव । तत् । समिति । भरति । यत् । एकमेकमित्येकं–एकम् । सम्भरेदिति सं–भरेत् । पितृदेव-

---

एता आपस्तदतिनेदन्ति अतिगछन्ति अतिव्याप्य वर्तन्ते । णिद्द णेद्द गतादिषु । वागिन्द्रियं चातिनेदन्ति, मनइन्द्रियं तु नातिनेदन्ति नातिवर्तन्ते, तस्मान्मनसा प्रणयतीत्याहुः । इयं वा इत्यादि । मनसो व्यापकत्वात् । अस्कन्नहविरिति । पृथिव्यात्मना व्यापकेन मनसा धृतत्वादपाम् ॥

[2]यज्ञायुधानीत्यादि ॥ तदधीनत्वाद्यज्ञनिवृत्तेस्ताच्छब्द्यम् । एकैकप्रयोगे पितृदेवत्यानि पात्राणि स्युः । सर्वेषां सह प्रयोगे मानुषाणि स्युः । तस्माद्द्वेद्वे प्रयुनक्ति । द्वित्वान्वयाद्याज्यानुवाक्यारूपलाभः । अथो अपि च । द्वित्वान्वयेन मिथुनत्वमेव सम्पद्यते।

यज्ञमेव तत्सं भरति यदेकमेकꣳ सम्भरेत्पितृदेवत्यानि स्युर्यत्सह सर्वाणि मानुषाणि द्वेद्वे सम्भरति याज्यानुवाक्ययोरेव रूपं करोत्यथो मिथुनमेव यो वै दश यज्ञायुधानि वेद मुखतोऽस्य यज्ञः कल्पते स्फ्यः॥२६॥ च कपालानि चाग्निहोत्रहवणी च

त्यानीति पितृ–देवत्यानि । स्युः । यत् । सह । सर्वाणि । मानुषाणि । द्वेद्वे इति द्वे–द्वे । समिति । भरति । याज्यानुवाक्ययोरिति याज्या–अनुवाक्ययोः । एव । रूपम् । करोति । अथो इति । मिथुनम् । एव । यः । वै । दश । यज्ञायुधानीति यज्ञ–आयुधानि । वेद । मुखतः । अस्य । यज्ञः । कल्पते । स्फ्यः ॥ २६ ॥ च । कपालानि । च । अग्निहोत्रहवणीत्यग्निहोत्र–हवनी । च । शूर्पम् ।

---

यो वै दशेत्यादि । स्फ्यादयो दश । यज्ञायुधानि यागारम्भे यो वेद, अस्य यज्ञारम्भ एव यज्ञस्सम्पद्यते; तदात्मकत्वाद्यज्ञस्य । 'आद्यादिभ्यस्तसिः' । कानि पुनस्तानीत्याह—स्फ्यश्छेदनादिकृत् । कपालानि हविरधिश्रयणार्थानि । अग्निहोत्रहवणी हविर्निर्वपणाद्यर्था । शूर्पं परावपनार्थम् । कृष्णाजिनं कृष्णमृगचर्म उलूखलाद्यधिकर-

शूर्पं च कृष्णाजिनं च शम्या चो-
लूखलं च मुसलं च दृषच्चोपला
चैतानि वै दश यज्ञायुधानि य एवं
वेद मुखतोऽस्य यज्ञः कल्पते यो
वै देवेभ्यः प्रतिप्रोच्य यज्ञेन यजते
जुषन्तेऽस्य देवा हव्यꣳ हविर्निरुप्य-

च। कृष्णाजिनमिति कृष्ण—अजिनम्। च। शम्या। च। उलूखलम्। च। मुसलम्। च। दृषत्। च। उपला। च। एतानि। वै। दश। यज्ञायुधानीति यज्ञ—आयुधानि। यः। एवम्। वेद। मुखतः। अस्य। यज्ञः। कल्पते। [3]यः। वै। देवेभ्यः। प्रतिप्रोच्येति प्रति—प्रोच्य। यज्ञेन। यजते। जुषन्ते। अस्य। देवाः। हव्यम्। हविः। निरुप्यमाणमिति निः—उप्यमानम्। अभीति। मन्त्रयेत। अग्निम्।

---

णम्। शम्या समाहननाद्यर्था। उलूखलमवहन्तव्याधिकरणम्। मुसलमवहननकृत्। दृषत्पेषणाधिकरणम्। उपला पेषणी॥

[3]अथ हविर्निर्वपणे कश्चिद्विशेषमाह—यो वा इत्यादि॥ प्रतिप्रोच्य प्रत्यावेद्य जुषन्ते सेवन्ते अस्य हव्यं देवाः। हविर्निरुप्यमाणमित्यादि। एष वा इत्यादि। एष मन्त्रो यज्ञस्य ग्रहः गृह्यतेऽनेन यज्ञ इति। तस्माद्गृहीत्वैव यज्ञमनेनाभिमन्त्रणेन; ततो

माणमभि मन्त्रयेताग्निँ होतार-
मिह तँ हुव इति ॥ २७ ॥ देवे-
भ्य एव प्रतिप्रोच्य यज्ञेन यजते
जुषन्तेऽस्य देवा हव्यमेष वै यज्ञस्य
ग्रहो गृहीत्वैव यज्ञेन यजते तदुदि-
त्वा वाचं यच्छति यज्ञस्य धृत्या
अथो मनसा वै प्रजापतिर्यज्ञमत-
नुत मनसैव तद्यज्ञं तनुते रक्षसा-

होतारम् । इह । तम् । हुवे । इति ॥२ ७॥ देवे-
भ्यः । एव । प्रतिप्रोच्येति प्रति-प्रोच्य । यज्ञेन ।
यजते । जुषन्ते । अस्य । देवाः । हव्यम् । एषः ।
वै । यज्ञस्य । ग्रहः । गृहीत्वा । एव । यज्ञेन ।
यजते । तत् । उदित्वा । वाचम् । यच्छति । य-
ज्ञस्य । धृत्यै । अथो इति । मनसा । वै । प्रजाप-
तिरिति प्रजा-पतिः । यज्ञम् । अतनुत । मनसा ।
एव । तत् । यज्ञम् । तनुते । रक्षसाम् । अनन्व-

---

यागमारभते । तदुदित्वा तद्वचनानन्तरं वाचं यच्छत्यवचनो भवति यज्ञस्य धृत्यै गृहीतस्य यज्ञस्याविस्रंसनाय । अथो अपि च प्रजापतिरिव मनसैवायं यज्ञं तनितुमर्हति किं वाचा । एवं हि क्रियमाणं रक्षसां अनन्ववचारायाननुप्रवेशाय भवति ॥

मनन्ववचाराय यो वै यज्ञं योग आ-
गते युनक्ति युङ्क्ते युञ्जानेषु कस्त्वा
युनक्ति स त्वा युनक्त्वित्याह प्रजा-
पतिर्वै कः प्रजापतिनैवैनं युनक्ति
युङ्क्ते युञ्जानेषु ॥ २८ ॥

वचारायेत्यनु–अवचाराय । यः । वै । यज्ञम् ।
योगे । आगत इत्या–गते । युनक्ति । युङ्क्ते । यु-
ञ्जानेषु । कः । त्वा । युनक्ति । सः । त्वा । युन-
क्तु । इति । आह । प्रजापतिरिति प्रजा–पतिः ।
वै । कः । प्रजापतिनेति प्रजा–पतिना । एव ।
एनम् । युनक्ति । युङ्क्ते । युञ्जानेषु ॥ २८ ॥

वै मनस्स्फ्य इति युनक्त्वेकादश च ॥८॥

[4]अथ यज्ञयोगं विदधाति—यो वा इत्यादि ॥ योगे याग-काल आगते यज्ञं यो युनक्ति बध्नाति, अयमेव युञ्जानेषु यज-मानेषु मध्ये युङ्क्ते युङ्क्ते इति व्यपदेशमर्हति । यद्वा—युञ्जानेष्वा-त्मानं योजयति । मन्त्रपदमिदानीं व्याचष्टे—कस्त्वेति । गतम्* ॥

इति षष्ठेष्टमोनुवाकः.

*सं. १-५-१०[10].

प्रजापतिर्यज्ञानसृजताग्निहोत्रं चा-
ग्निष्टोमं च पौर्णमासीं चोक्थ्यं चा-
मावास्यां चातिरात्रं च तानुदमि-
मीत यावदग्निहोत्रमासीत्तावानग्नि-
ष्टोमो यावती पौर्णमासी तावानु-

[1]प्रजापतिरिति प्रजा-पतिः । यज्ञान् । असृजत । अग्निहोत्रमित्यग्नि-होत्रम् । च । अग्निष्टोममित्यग्नि-स्तोमम् । च । पौर्णमासीमिति पौर्ण-मासीम् । च । उक्थ्यम् । च । अमावास्यामित्यमा-वास्याम् । च । अतिरात्रमित्यति-रात्रम् । च । तान् । उदिति । अमिमीत । यावत् । अग्निहोत्रमित्यग्नि-होत्रम् । आसीत् । तावान् । अग्निष्टोम इत्यग्नि-स्तोमः । यावती । पौर्णमा-

[1]अथ दर्शपूर्णमासयोर्महाफलत्वं ख्यापयितुमाह—प्रजापतिरित्यादि ॥ अग्निहोत्रं व्याख्यातम्* । अग्निष्टोम एकाहानां प्रकृतिभूतं कर्म । अग्नेस्स्तोमः यज्ञायज्ञीयं सामाग्निष्टोमम् ; तत्प्रधानत्वात्तत्संस्थमपि कर्माग्निष्टोम उच्यते । ‘अग्नेस्तुत्स्तोमसोमाः’ इति षत्वम् । पूर्णश्चन्द्रः पूर्णमाः, तत्सम्बन्धिनी तिथिः शुक्लपञ्चदशी पौर्णमासी, तस्यां क्रियमाणमपि कर्माभेदेन पौर्णमासीत्यु-

*सं. १-५-९.

क्थ्यो यावत्यमावास्या तावानति-
रात्रो य एवं विद्वानग्निहोत्रं जुहोति
यावदग्निष्टोमेनोपाप्नोति तावदुपा-
प्नोति य एवं विद्वान्पौर्णमासीं यजते
यावदुक्थ्येनोपाप्नोति ॥२१॥ ताव-

सीति पौर्ण–मासी । तावान् । उक्थ्यः । यावती । अमावास्येत्यमा–वास्या । तावान् । अतिरात्र इत्यति–रात्रः । यः । एवम् । विद्वान् । अग्निहोत्रमित्यग्नि–होत्रम् । जुहोति । यावत् । अग्निष्टोमेनेत्यग्नि–स्तोमेन । उपाप्नोतीत्युप–आप्नोति । तावत् । उपेति । आप्नोति । यः । एवं । विद्वान् । पौर्णमासीमिति पौर्ण–मासीम् । यजते । यावत् । उक्थ्येन । उपाप्नोतीत्युप–आप्नोति ॥ २१ ॥ तावत् । उपेति । आप्नोति । यः । एवम् । विद्वान् । अमावास्या-

---

च्यते । उक्थ्यः क्रतुः अग्निष्टोमविकारः पञ्चदशस्तोत्रः । अमा सह सूर्याचन्द्रमसावस्यां वस्त इत्यमावास्या । 'अमावस्यदन्यतरस्याम्' इति निपात्यते । कृष्णपञ्चदश्युच्यते । पूर्ववत्कर्मण्यभेदेन वर्तते । अतिरात्रोप्यग्निष्टोमविकारः एकोनत्रिंशत्स्तोत्रः, रात्रिपर्यायातिरेकाद्तिरात्रः । 'अहस्सर्वैक' इत्यच्समासान्तः । तानित्यादि । ऊर्ध्वमानमुन्मानं तुलापरिच्छेदः । तत्राग्निहोत्रादिभि-

दुपाप्नोति य एवं विद्वानमावास्यां
यजते यावदतिरात्रेणोपाप्नोति ताव-
दुपाप्नोति परमेष्ठिनो वा एष यज्ञोऽग्र
आसीत्तेन स परमां काष्ठामगच्छ-
त्तेनं प्रजापतिं निरवासायत्तेनं प्र-

मित्यमा—वास्याम् । यजते । यावत् । अतिरात्रे-णेत्यति—रात्रेण । उपाप्नोतीत्युप—आप्नोति । ताव-त् । उपेति । आप्नोति । [2]परमेष्ठिनः । वै । एषः । यज्ञः । अग्रे । आसीत् । तेन । सः । परमाम् । काष्ठाम् । अगच्छत् । तेन । प्रजापतिमिति प्रजा—पतिम् । निरवासायदिति निः—अवासाययत् । तेन । प्र-

स्तुल्यगौरवात् अग्निष्टोमादयो दृश्यन्ते । तस्मादेवं विदित्वाग्निहोत्रादिकं कुर्वन्नग्निष्टोमादिफलमाप्नोति । प्रासङ्गिकमग्निहोत्रग्रहणम्, उन्मानेन सहभावात् ॥

[2]पुनरपि दर्शपूर्णमासयोस्स्तुतिः—परमेष्ठिन इत्यादि ॥ परमे महिम्नि तिष्ठतीति परमेष्ठी । उणादिषु निपात्यते । सर्वदेवतासमष्टिः परमात्मोच्यते । तस्यैष यज्ञो दर्शश्च पूर्णमासश्च अग्रे आदावासीत् । तेन स परमां काष्ठां परमैश्वर्यकाष्ठामगच्छत् । तेन यज्ञेन स परमेष्ठी प्रजापतिं जगतां स्रष्टारं निरवासाययत् देवतान्तरेभ्यो व्यावृत्तमुत्कर्षिणमकरोत् । निरवसानमुत्कर्षः । यथा—

जापतिः परमां काष्ठामगच्छत्तेनेन्द्रं निरवासाययत्तेनेन्द्रः परमां काष्ठामगच्छत्तेनाग्नीषोमौ निरवासाययत्तेनाग्नीषोमौ परमां काष्ठामगच्छतां यः ॥ ३० ॥ एवं विद्वान्दर्शपूर्णमासौ यजते परमामेव

जापतिरिति प्रजा–पतिः । परमाम् । काष्ठाम् । अगच्छत् । तेन । इन्द्रम् । निरवासाययदिति निः–अवासाययत् । तेन । इन्द्रः । परमाम् । काष्ठाम् । अगच्छत् । तेन । अग्नीषोमावित्यग्नी–सोमौ । निरवासाययदिति निः–अवासाययत् । तेन । अग्नीषोमावित्यग्नी–सोमौ । परमाम् । काष्ठाम् । अगच्छताम् । यः ॥३०॥ एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श–पूर्णमासौ । यजते । पर-

'तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति'* इति । निरवपूर्वात्स्यतेर्णिचि 'शाच्छासाह्वा' इति युक्, गतिद्वयमप्याख्यातेन समस्यते, 'गतिर्गतौ' इति प्रथमोनुदात्तः, 'उदात्तवता च तिङा सह'' इति समास(निषेध): । एवं सर्वत्र । या प्राणिनां सदा निरतिशयानन्दनिर्वृत्तिदायिनी शाश्वती पुनर्जन्मच्छेदिनी सा परमा काष्ठा तां गच्छति प्राप्नोत्येव । यो वा इत्यादि । प्रजातो

* सं.—२-५-२.

काष्ठां गच्छति यो वै प्रजातेन यज्ञेन
यजते प्र प्रजया पशुभिर्मिथुनैर्जायते
द्वादश मासास्संवत्सरो द्वादश द्व-
न्द्वानि दर्शपूर्णमासयोस्तानि सम्पा-
द्यानीत्याहुर्वत्सं चोपावसृजत्युखां
चाधि श्रयत्यवं च हन्ति दृषदौ च ।

माम् । एव । काष्ठाम् । गच्छति । यः । वै । प्र-जातेनेति प्र–जातेन । यज्ञेन । यजते । प्रेति । प्रजयेति प्र–जया । पशुभिरिति पशु–भिः । मिथुनैः । जायते । द्वादश । मासाः । संवत्सर इति सं–वत्सरः । द्वादश । द्वन्द्वानीति द्वं–द्वानि । दर्श-पूर्णमासयोरिति दर्श–पूर्णमासयोः । तानि । स-म्पाद्यानीति सं–पाद्यानि । इति । आहुः । [3]वत्सम् । च । उपावसृजतीत्युप–अवसृजति । उखाम् ।

---

जातप्रजः । यथा संवत्सरस्य द्वादश मासाः, एवं द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्सन्ति, तानि सम्पाद्यानि क्रियाविशेषैरित्याहुः । द्वेद्वे संयुक्ते द्वन्द्वं यज्ञपात्रप्रयोगे निपात्यते ॥

[3]अथ तानि दर्शयति—वत्सं चेत्यादि ॥ एतैः क्रियाविशेषैः द्वन्द्वानि सम्पद्यन्ते ; तेन द्वन्द्वबहुत्वेपि द्वन्द्वसम्पादनक्रियापेक्षं द्वादशत्वं वेदितव्यम् । वत्समुपावसृजति मातृसकाशं प्रापयति ।

समाहन्त्यधि च वर्पते कपालानि
चोप दधाति पुरोडाशं च ॥ ३१ ॥
अधिश्रयत्याज्यं च स्तम्बयजुश्च
हरत्यभि च गृह्णाति वेदिं च परि-
गृह्णाति पत्नीं च सं नह्यति प्रोक्षणी-

च । अधीति । श्रयति । अवेति । च । हन्ति । दृषदौ । च । समाहन्तीति सं—आहन्ति । अधीति । च । वर्पते । कपालानि । च । उपेति । दधाति । पुरोडाशम् । च ॥ ३१ ॥ अधिश्रयतीत्यधि—श्रयति । आज्यम् । च । स्तम्बयजुरिति स्तम्ब—यजुः । च । हरति । अभीति । च । गृह्णाति । वेदिम् । च । परिगृह्णातीति परि—गृह्णाति । पत्नीम् । च । समिति । नह्यति । प्रोक्षणीरिति प्र—उक्षणीः । च । आसादयतीत्या—सादयति । आज्यम् । च ।

अनेनोपावसर्जनेन मातृवत्सयोः द्वन्द्वभावस्सम्पद्यते । एवं सर्वत्र द्रष्टव्यम् । एतानि याजमानप्रकरणगतान्यपि अध्वर्युणैव कर्तव्यानि । उक्तं च—' याजमाने समाख्यानात्कर्माणि याजमानं स्युः '* इत्यत्र । उखामधिश्रयति, अङ्गारेषु कुम्भीं स्थापयति । अवहन्ति व्रीहीनुलूखले । दृषदौ च समाहन्ति शम्यया । अधिवपति दृषदि तण्डुलान् । कपालान्युपदधात्यङ्गारेषु । पुरोडाशं चाधिश्रयति कपा-

*मी. ३-८-१९.

श्चासादयत्याज्यं [4]चैतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि य एवꣳ सम्पाद्य यजते प्रजातेनैव यज्ञेन यजते प्र प्रजया पशुभिर्मिथुनैर्जायते ॥ ३२ ॥

[4]एतानि । वै । द्वादश । द्वन्द्वानीति द्वं—द्वानि । दर्शपूर्णमासयोरिति दर्श—पूर्णमासयोः । तानि । यः । एवम् । सम्पाद्येति सं—पाद्य । यजते । प्रजातेनेति प्र—जातेन । एव । यज्ञेन । यजते । प्रेति । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । मिथुनैः । जायते ॥ ३२ ॥

उक्थ्येनोपाप्नोत्यगच्छतां यः पुरोडाशं च चत्वारिꣳशच्च ॥ ९ ॥

लेषु । आज्यं चाधिश्रयतीत्येव । स्तम्बयजुर्हरति । सतृणं पुरीषमभिगृह्णाति । न्युप्तमञ्जलिनाग्नीध्रः वेदिं परिगृह्णाति स्फ्येनोत्तरं परिग्राहम् । पत्नीं सन्नह्यति योक्त्रेण । प्रोक्षणीरप आसादयति । आज्यं चावसादयतीत्येव, स्रुग्गृहीतमित्यर्थः ॥

[4]एतानि वा इत्यादि ॥ गतम्* ॥

इति षष्ठे नवमोनुवाकः.

---

*सं. १-६-९[2].

ध्रुवोसि ध्रुवोहꣳ सजातेषु भूयासमि-
त्याह ध्रुवानेवैनान्कुरुत उग्रोस्युग्रो-
हꣳ सजातेषु भूयासमित्याहाप्रति-
वादिन एवैनान्कुरुतेभिभूरस्यभि भूर-
हꣳ सजातेषु भूयासमित्याह य एवैनं

[1]ध्रुवः । असि । ध्रुवः । अहम् । सजातेष्विति स-जातेषु । भूयासम् । इति । आह । ध्रुवान् । एव । एनान् । कुरुते । उग्रः । असि । उग्रः । अहम् । सजातेष्विति स-जातेषु । भूयासम् । इति । आह । अप्रतिवादिन इत्यप्रति-वादिनः । एव । एनान् । कुरुते । अभिभूरित्यभि-भूः । असि । अभिभूरित्यभि-भूः । अहम् । सजातेष्विति स-जातेषु । भूयासम् । इति । आह । यः । एव । एनम् । प्रत्युत्पिपीत इति प्रति-उत्पिपीते ।

[1]ध्रुवोसीत्यादीनां याजमानमन्त्राणां ब्राह्मणम् । तत्र परिधीनामनुमन्त्रणमन्त्राः ध्रुवोसीत्यादयः ॥ एनान् सजातानविनष्टान् करोति । तथा हि सति तेष्वयं ध्रुवतरो भवति । एनानप्रतिवादिनः कुरुते सजातान् । उग्रः उद्गूर्णः यस्याग्रे न कश्चित्प्रतिवदतीति । प्रत्युत्पिपीते सजातेषु मध्ये य एनं प्रातिकूल्येन उपजीवति तमुपास्यते उपक्षिपति । पीङ् पाने, दैवादिकः, व्यत्य-

प्रत्युत्पिपीतेतमुपास्यते युनज्मि त्वा ब्रह्मणा दैव्येनेत्याहैष वा अग्नेर्योगस्तेन ॥ ३३ ॥ एवैनं युनक्ति यज्ञस्य वै समृद्धेन देवास्सुवर्गं लोकमायन् यज्ञस्य व्यृद्धेनासुरान्परा-

तम् । उपेति । अस्यते । [2]युनज्मि । त्वा । ब्रह्मणा । दैव्येन । इति । आह । एषः । वै । अग्नेः । योगः । तेन ॥३३॥ एव । एनम् । युनक्ति । [3]यज्ञस्य । वै । समृद्धेनेति सं-ऋद्धेन । देवाः । सुवर्गमिति सुवः-गम् । लोकम् । आयन् । यज्ञस्य । व्यृद्धेनेति वि-ऋद्धेन । असुरान् । परेति । अभावयन् । यत् । मे । अग्ने । अस्य । यज्ञस्य । रिष्यात् । इति । आह । यज्ञस्य । एव । तत् । समृद्धेनेति सं-ऋद्धेन । यजमानः । सुवर्ग-

येन शपश्लुः । 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इत्यस्यतेरात्मनेपदम् । 'अनुदात्ते च' इत्यभ्यस्तस्याद्युदात्तत्वम्, 'तिङि चोदात्तवति' इति द्वितीयस्य गतेः अनुदात्तत्वम्, 'गतिर्गतौ' इति प्रथमस्य ॥

[2]युनज्मि त्वेत्यग्नियोगः ॥ एष मन्त्रोऽग्नेर्योगः । अग्निर्युज्यते बद्ध्यतेऽनेनेति करणे घञ् ॥

[3]यज्ञस्येत्यादि ॥ यज्ञस्य यत्समृद्धं हविरादीनामन्यूनत्वम्, अन्यूनं वा हविरादि, तत्स्वर्गप्राप्तिहेतु । यत्पुनर्व्यृद्धं स्कन्नादिवैकल्यं तेनासुरान् पराभावयन्देवाः । 'यन्मे अग्ने' इत्यनेना

भावयन् यन्मे अग्ने अस्य यज्ञस्य-
रिष्यादित्याह यज्ञस्यैव तत्समृद्धेन
यजमानस्सुवर्गं लोकमेति यज्ञस्य
व्यृद्धेन भ्रातृव्यान्पराभावयत्यग्नि-
होत्रमेताभिर्व्याहृतीभिरुप सादयेद्य-
ज्ञमुखं वा अग्निहोत्रं ब्रह्मैता व्याहृ-
तयो यज्ञमुख एव ब्रह्म ॥ ३४ ॥

मिति सुवः—गम् । लोकम् । एति । यज्ञस्य । व्यृद्धेनेति वि—ऋद्धेन । भ्रातृव्यान् । परेति । भावयति । [4]अग्निहोत्रमित्यग्नि—होत्रम् । एताभिः । व्याहृतीभिरिति व्याहृति—भिः । उपेति । सादयेत् । यज्ञमुखमिति यज्ञ—मुखम् । वै । अग्निहोत्रमित्यग्नि—होत्रम् । ब्रह्म । एताः । व्याहृतय इति वि—आहृतयः । यज्ञमुख इति यज्ञ—मुखे । एव ।

---

सन्नहविरभिमन्त्रणेन तद्वैकल्यं प्रति पराभवनहेतुः क्रियत इत्यर्थः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥

[4]हविरासादिन्यो व्याहृतयः ॥ विविधमाह्रियन्ते आनीयन्त इति व्याहृतयः । लोकत्रयात्मिकाः, विविधफलाहरणहेतुभूता वा । अनन्तरगतेः 'तादौ च' इति प्रकृतिस्वरत्वम् । एताभिरग्निहोत्रहवि-

कुरुते संवत्सरे पर्यागत एताभिरेवो-
प सादयेद्ब्रह्मणैवोभयतस्संवत्सरं
परि गृह्णाति दर्शपूर्णमासौ चातु-
र्मास्यान्यालभमान एताभिर्व्याहृ-
तीभिर्हवीꣳष्या सादयेद्यज्ञमुखं वै
दर्शपूर्णमासौ चातुर्मास्यानि ब्रह्मै-

ब्रह्म ॥ ३४ ॥ कुरुते । संवत्सर इति सं—वत्सरे । पर्यागत इति परि—आगते । एताभिः । एव । उपेति । सादयेत् । ब्रह्मणा । एव । उभयतः । संवत्सरमिति सं—वत्सरम् । परीति । गृह्णाति । [5]दर्शपूर्णमासाविति दर्श—पूर्णमासौ । चातुर्मास्यानीति चातुः—मास्यानि । आलभमान इत्या—लभमानः । एताभिः । व्याहृतीभिरिति व्याहृति—भिः । हवीꣳषि । एति । सादयेत् । यज्ञमुखमिति यज्ञ—मुखम् । वै । दर्शपूर्णमासाविति दर्श—पूर्ण-

---

रुपसादयेत् । यज्ञमुखं वा अग्निहोत्रं, प्राधान्यात् । ब्रह्मैता इति, लोकत्रयात्मकत्वात् । पर्यागते पर्यावृत्ते । पूर्वपदप्रकृतिस्वरत्वम् । उभयतः, सार्वविभक्तिकस्तासिल् ॥

[5]दर्शपूर्णमासावित्यादि ॥ गतं* प्रथमप्रयोग इदम् ॥

---

*सं. १-६-१०.

ता व्याहृतयो यज्ञमुख एव ब्रह्म
कुरुते संवत्सरे पर्यागत एताभिरेवा
सादयेद्ब्रह्मणैवोभयतस्संवत्सरं परि
गृह्णाति यद्वै यज्ञस्य साम्ना क्रियते

मासौ । चातुर्मास्यानीति चातुः-मास्यानि । ब्रह्म । एताः । व्याहृतय इति वि-आहृतयः । यज्ञमुख इति यज्ञ-मुखे । एव । ब्रह्म । कुरुते । संवत्सर इति सं-वत्सरे । पर्यागत इति परि-आगते । एताभिः । एव । एति । सादयेत् । ब्रह्मणा । एव । उभयतः । संवत्सरमिति सं-वत्सरम् । परीति । गृह्णाति । [6]यत् । वै । यज्ञस्य । साम्ना । क्रियते । राष्ट्रम् ॥ ३५ ॥

---

[6]यद्वा इत्यादि ॥ यज्ञस्य या आशीः साम्ना क्रियते सा सामस्थाशीः आशंसनीयं फलं राष्ट्रं गच्छति यत्रायं वसति तद्राष्ट्रवासिनां तत्केवलं स्यात् । अथ यदृचा क्रियते सा यज्ञस्याशीः विशं गच्छति सर्वान्मनुष्यान् । जातावेकवचनम् । अथेदानीमयं ब्राह्मणो वराकोऽनाशीर्केणाफलेन यज्ञेन यजते, किमेतद्युज्यते ? यद्वा—तिष्ठन्त्वन्ये ; ब्राह्मणः किमनाशीर्केण यजेत यः प्रयोजनमन्तरेणाहितं निमेषमात्रमपि न करोतीति प्रतिपादनार्थं ब्राह्मणग्रहणम् । यजुषां प्रायेण करण(क)मन्त्रत्वान्न

राष्ट्रम् ॥ ३५ ॥ यज्ञस्याशीर्गच्छति यदृचा विशं यज्ञस्याशीर्गच्छत्यर्थ ब्राह्मणोनाशीर्केण यज्ञेन यजते सामिधेनीरनुवक्ष्यन्नेता व्याहृतीः पुरस्ताद्दध्याद्ब्रह्मैव प्रतिपदं कुरुते

यज्ञस्य । आशीरित्या–शीः । गच्छति । यत् । ऋचा । विशम् । यज्ञस्य । आशीरित्या–शीः । गच्छति । अथ । ब्राह्मणः । अनाशीर्केण । यज्ञेन । यजते । सामिधेनीरिति सां–इधेनीः । अनुवक्ष्यन्नित्यनु–वक्ष्यन् । एताः । व्याहृतीरिति वि–आहृतीः । पुरस्तात् । दध्यात् । ब्रह्म । एव । प्रतिपदमिति प्रति–पदम् । कुरुते । तथा । ब्राह्मणः ।

---

तत्र कदाचिदाशीरिति ऋक्सामयोरेव ग्रहणम् । नास्त्याशीरस्येति बहुव्रीहौ कप् । अयस्मयादित्वेन पदत्वाद्रुत्वम्, भत्वाद्विसर्जनीयाभावः, 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । सामिधेनीरित्यादि । समिधामाधानमन्त्रास्सामिधेन्यः 'प्र वो वाजाः'* इत्याद्याः । 'समिधामाधाने ष्येण्यण्', 'हलस्तद्धितस्य' इति यलोपः । प्रतिपदं प्रारम्भं कुरुते । प्रथमतः पद्यत इति प्रतिपत् । सम्पदादित्वात्क्विप् ॥

---

*सं. २-५-७.

तथा ब्राह्मणस्साशीर्केण यज्ञेन य-
जते यं कामयेत यजमानं भ्रातृव्य-
मस्य यज्ञस्याशीर्गच्छेदिति तस्यैता
व्याहृतीः पुरोनुवाक्यायां दध्याद्भ्रा-
तृव्यदेवत्या वै पुरोनुवाक्या भ्रातृ-
व्यमेवास्य यज्ञस्य ॥३६॥ आशी-
र्गच्छति यान्कामयेत यजमाना-

साशीर्केणेति स—आशीर्केण । यज्ञेन । यजते । [7]यम् । कामयेत । यजमानम् । भ्रातृव्यम् । अस्य । यज्ञस्य । आशीरित्या—शीः । गच्छेत् । इति । तस्य । एताः । व्याहृतीरिति वि—आहृतीः । पुरोनुवाक्यायामिति पुरः—अनुवाक्यायाम् । दध्यात् । भ्रातृव्यदेवत्येति भ्रातृव्य—देवत्या । वै । पुरोनुवाक्येति पुरः—अनुवाक्या । भ्रातृव्यम् । एव । अस्य । यज्ञस्य ॥ ३६ ॥ आशीरित्या—शीः । गच्छति । [8]यान् । कामयेत । यजमानान् । समा-

[7]यं कामयेतेत्यादि ॥ पुरस्तादवदानकालेनूच्यत इति पुरोनुवाक्या । गतमन्यत्* ॥

[8]यानित्यादि ॥ समावती समा सर्वेषां तुल्या न कदाचिदपि भ्रातृव्यस्य । यद्वा—समा अविषमा 'सदा' यजमानगामिनी ।

*सं. १-६-१०६.

न्थ्समावर्त्येनान् यज्ञस्याशीर्गच्छे-
दिति तेषामेता व्याहृतीः पुरोनु-
वाक्याया अर्धर्च एकां दध्याद्याज्या-
यै पुरस्तादेकां याज्याया अर्धर्च
एकां तथैनान्थ्समावर्ती यज्ञस्या-
शीर्गच्छति यथा वै पर्जन्यस्सुवृष्टं
वर्षत्येवं यज्ञो यजमानाय वर्षति

वर्ती । एनान् । यज्ञस्य । आशीरित्या–शीः । गच्छेत् । इति । तेषाम् । एताः । व्याहृतीरिति वि–आहृतीः । पुरोनुवाक्याया इति पुरः–अनुवाक्यायाः । अर्धर्च इत्यर्ध–ऋचे । एकाम् । दध्यात् । याज्यायै । पुरस्तात् । एकाम् । याज्यायाः । अर्धर्च इत्यर्ध–ऋचे । एकाम् । तथा । एनान् । समावर्ती । यज्ञस्य । आशीरित्या–शीः । गच्छति । यथा । वै । पर्जन्यः । सुवृष्टमिति सु–वृष्टम् । वर्षति ।

---

समाद्वावतुप्* । ऋचोर्धमर्धर्चः । 'अर्धं नपुंसकम्' इति समासः, 'ऋक्पूरब्धूः' इत्यादिना अप्रत्ययस्समासान्तः । इज्यतेऽनयेति याज्या । 'यज याच' इति कुत्वाभावः । यथेति ।

---

*समशब्दात् छन्दसि आवतुषिति कश्चित्प्रत्ययः कल्पनीय इति भावः.

स्थलयोदकं परिगृह्णन्त्याशिषा यज्ञं यजमानः परि गृह्णाति मनोसि प्राजापत्यम् ॥ ३७ ॥ मनसा मा भूतेना विशेत्याह मनो वै प्राजापत्यं प्राजापत्यो यज्ञो मन एव यज्ञमात्मन्धत्ते वागस्यैन्द्री संपत्न-

एवम् । यज्ञः । यजमानाय । वर्षति । स्थलया । उदकम् । परिगृह्णन्तीति परि-गृह्णन्ति । आशिषेत्या-शिषा । यज्ञम् । यजमानः । परीति । गृह्णाति ।
9 मनः । असि । प्राजापत्यमिति प्राजा-पत्यम् ॥ ३७ ॥ मनसा । मा । भूतेन । एति । विश । इति । आह । मनः । वै । प्राजापत्यमिति प्राजा-पत्यम् । प्राजापत्य इति प्राजा-पत्यः । यज्ञः । मनः । एव ।

---

स्थलया कूलेन उदकं परिगृह्णन्ति निरुन्धन्ति । एवमाशिषा यज्ञं यजमानः परिगृह्णाति फलप्रदानैकव्यापारयन्त्रितमिव करोति, यथा न कदाचिदपि फलमददानस्तिष्ठति, दत्ते चेदं न याचते यजमानः, याचितेयाचिते ददाति यज्ञ इति* ॥

9 मनोसीति ॥ स्त्रौवाघाराभिमन्त्रणम् । प्राजापत्याविशेषान्मन इति यज्ञ उच्यते ॥

---

*क—दत्ते याचते यजमानः, याचते ददाति यज्ञ इति.

क्षयंणी वाचा मैन्द्रियेणा विशे-
त्याहैन्द्री वै वाग्वाचमेवैन्द्रीमात्म-
न्धंत्ते ॥ ३८ ॥

यो वै संप्तदशं प्रजापतिं यज्ञमन्वा-
यंत्तं वेद प्रतिं यज्ञेनं तिष्ठति न

यज्ञम् । आत्मन्न् । धत्ते । [10]वाक् । असि । ऐन्द्री । सपत्नक्षयणीतिं सपत्न—क्षयंणी । वाचा । मा । इन्द्रियेणं । एतिं । विशा । इतिं । आह । ऐन्द्री । वै । वाक् । वाचम् । एव । ऐन्द्रीम् । आत्मन्न् । धत्ते ॥३८॥

तेनैव ब्रह्म राष्ट्रमेवास्यं यज्ञस्यं प्राजाप-
त्यꣳ षाड्विꣳशञ्च ॥ १० ॥

[1]यः । वै । सप्तदशमितिं सप्त—दशम् । प्रजापतिमितिं प्रजा—पतिम् । यज्ञम् । अन्वायत्तमि-

---

[10]वागसीति ॥ स्रुच्याघाराभिमन्त्रणम् । गतम्* ॥

इति षष्ठे दशमोनुवाकः.

---

[1]यो वा इत्यादि ॥ सप्तदशाक्षरसमूहात्मा प्रजापतिः सप्तदशः । समूहे छान्दसो डः । परिमाणे वा 'तस्य पूरणे' इति डट् ।

---

*सं. १-६-२[12].

यज्ञाद्भ्रꣳशत आ श्रावयेति चतु-
रक्षरमस्तु श्रौषडिति चतुरक्षरं
यजेति द्व्यक्षरं ये यजामह इति
पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै स-
प्तदशः प्रजापतिर्यज्ञमन्वायत्तो य

त्यनु—आयत्तम्। वेद। प्रतीति। यज्ञेन। तिष्ठति। न। यज्ञात्। भ्रꣳशते। [2]एति। श्रावय। इति। चतुर-क्षरमिति चतुः—अक्षरम्। अस्तु। श्रौषट्। इति। चतुरक्षरमिति चतुः—अक्षरम्। यज। इति। द्व्यक्ष-रमिति द्वि—अक्षरम्। ये। यजामहे। इति। पञ्चा-क्षरमिति पञ्च—अक्षरम्। द्व्यक्षर इति द्वि—अक्षरः। वषट्कार इति वषट्—कारः। एषः। वै। सप्तदश

---

अवयवधर्मेण समुदायो व्यपदिश्यते, सप्तदशसु प्रथमादीनामपि सप्तदशत्वात्। यज्ञमन्वायत्तमनुप्रविष्टम्॥

[2]आ श्रावयेत्यादि॥ तुभ्यमिदं दीयत इति देवताविशेषमाभिमुख्येन आ श्रावयेति, चतुरक्षरमध्वर्योः। अस्तु श्रौषट् एवमेतत्कर्तव्यमिति चतुरक्षरमग्नीधः। यज इमां देवतां यष्टुं याज्यां ब्रूहीति द्व्यक्षरं अध्वर्योरेव। ये यजामहे य एव वयं*स्मः त एव यजामं

---

*म—य एवं.

एवं वेद प्रति यज्ञेन तिष्ठति न य-
ज्ञाद्भ्रꣳशते यो वै यज्ञस्य प्रायणं
प्रतिष्ठाम् ॥३१॥ उदयनं वेद प्रति-
ष्ठितेनारिष्टेन यज्ञेन सꣳस्थां गच्छ-
त्या श्रावयास्तु श्रौषड्यज ये यजा-

इति सप्त-दशः । प्रजापतिरिति प्रजा-पतिः । यज्ञम् । अन्वायत्त इत्यनु-आयत्तः । यः । एवम् । वेद । प्रतीति । यज्ञेन । तिष्ठति । न । यज्ञात् । भ्रꣳशते । [3]यः । वै । यज्ञस्य । प्रायणमिति प्र-अयनम् । प्रतिष्ठामिति प्रति-स्थाम् ॥३१॥ उदयनमित्युत्-अयनम् । वेद । प्रतिष्ठितेनेति प्रति-स्थितेन । अरिष्टेन । यज्ञेन । सꣳस्थामिति सं-स्थाम् । गच्छति । एति । श्रावय । अस्तु । श्रौषट् । यज । ये । यजामहे । वषट्कार इति वषट्-

---

कस्त्वां यष्टुमर्हतीति यागसङ्कल्पाय पञ्चाक्षरं होतुः । वषट्क्रियते हविर्दीयतेनेनेति वषट्कारो वौषट्शब्दो द्व्यक्षरो होतुरेव । एष वा इत्यादि । गतम्* ॥

[3]यो वै यज्ञस्येत्यादि ॥ प्रायणं प्रारम्भः प्रवेशनम् । प्रतिष्ठा स्थितिः । उदयनं संस्था समाप्तिः । एतत्त्रयात्मकमाश्रावयादिकम् । *

---

*सं. १-६-११[1].

महे वषट्कार एतद्वै यज्ञस्य प्रायण-
मेषा प्रतिष्ठैतदुदयनं य एवं वेद
प्रतिष्ठितेनारिष्टेन यज्ञेन सꣳस्थां
गच्छति यो वै सूनृतायै दोहं वेद
दुह एवैनां यज्ञो वै सूनृता श्रावये-
त्यैवैनामह्वदस्तु ॥ ४० ॥ श्रौषडि-

कारः । एतत् । वै । यज्ञस्य । प्रायणमिति प्र-अयनम् । एषा । प्रतिष्ठेति प्रति-स्था । एतत् । उदयनमित्युत्-अयनम् । यः । एवम् । वेद । प्रतिष्ठितेनेति प्रति-स्थितेन । अरिष्टेन । यज्ञेन । सꣳस्थामिति सं-स्थाम् । गच्छति । यः । वै । सूनृतायै । दोहम् । वेद । दुहे । एव । एनाम् । यज्ञः । वै । सूनृता । एति । श्रावय । इति । एति ।

तस्मादत्रैव समस्तो यागस्समाप्तः, एतच्छेषतया सर्वमन्यत्क्रियत इति । अरिष्टः हिंसारहितः ॥

यो वै सूनृताया इत्यादि ॥ प्रियसत्यात्मिका* वाक्सूनृता । तत्तुल्यत्वात्तत्साधनत्वाद्वा अभेदेन यज्ञ उच्यते । 'यज्ञो वै सूनृता' इति गोत्वेन रूप्यते । एनां सूनृतां यज्ञं दुहे दुग्धे अभिमतं स्वर्गादिकम् । 'लोपस्त आत्मनेपदेषु' इति तलोपः ।

*म—अभिमतहितप्रियात्मिका.

त्युपावास्राग्यजेत्युदनैषीद्ये यजाम-
ह इत्युपासदद्वषट्कारेण दोग्ध्येष वै
सूनृतायै दोहो य एवं वेद दुह ए-
वैनां देवा वै सत्रमासत तेषां दि-
शोऽदस्यन्त एतामार्द्रां पङ्क्तिमपश्यन्ना

एव । एनाम् । अह्वत् । अस्तु ॥ ४० ॥ श्रौषट् । इति । उपावास्रागित्युप—अवास्राक् । यज । इति । उदिति । अनैषीत् । ये । यजामहे । इति । उपेति । असदत् । वषट्कारेणेति वषट्—कारेण । दोग्धि । एषः । वै । सूनृतायै । दोहः । यः । एवम् । वेद । दुहे । एव । एनाम् । [5]देवाः । वै । सत्रम् । आसत । तेषाम् । दिशः । अदस्यन् । ते । एताम् ।

---

एवैनामह्वत् एनामाह्वयत् दोग्धुम् । छान्दसो लुङ्, 'लिपिसिचिह्वश्च' इत्यङ् । उपावास्राक् उपसृजति वत्सम् । सृजतेर्लुङि 'बहुलं छन्दसि' इतीडभावः, 'सृजिदृशोः' इत्यमागमः, 'वदव्रज' इति वृद्धिः । उदनैषीत् उन्नयति पात्रम् । उपासदत् उपसीदति दोग्धा । आविरभवत् । आश्रावयाद्युक्तिरभिमतसिद्ध्यै सूनृतादानादिकृत् ॥

[5]देवा वा [illegible]त्यादि ॥ सत्रासनं क्रतुविशेषः एकादशरात्रादिः, तमकुर्वत । आस्यानकर्मा वा इदानीमयमास्तिः । दिशः प्राणाद्या

श्रावयेति पुरोवातमजनयन्नस्तु श्रौषडित्यभ्रꣳ समप्लावयन् यजेति विद्युतम् ॥४१॥ अजनयन् ये यजामह इति प्रावर्षयन्नभ्यस्तनयन्वषट्कारेण ततो वै तेभ्यो दिशः प्राप्यायन्त य एवं वेद प्रास्मै दिशः प्यायन्ते प्रजापतिं त्वोवेद प्रजापति-

आर्द्राम् । पङ्क्तिम् । अपश्यन्न् । एति । श्रावय । इति । पुरोवातमिति पुरः—वातम् । अजनयन्न् । अस्तु । श्रौषट् । इति । अभ्रम् । सामिति । अप्लावयन्न् । यज । इति । विद्युतमिति वि—द्युतम् ॥ ४१ ॥ अजनयन्न् । ये । यजामहे । इति । प्रेति । अवर्षयन्न् । अभीति । अस्तनयन्न् । वषट्कारेणेति वषट्—कारेण । ततः । वै । तेभ्यः । दिशः । प्रेति । अप्यायन्त । यः । एवम् । वेद । प्रेति । अस्मै । दिशः । प्यायन्ते । [6]प्रजापतिमिति प्रजा—

अदस्यन् उपक्षीणविभवा अभूवन् । दसु उपक्षये । आर्द्रामार्द्रयित्रीम्* आ समन्तादार्द्रां लोकानां वर्षहेतुं अक्षरपङ्क्तिमपश्यन् । गतमन्यत् ॥५॥

[6]प्रजापतिमित्यादि ॥ प्रजापतिं कश्चिद्वेद ज्ञातवान् । प्रजाप

*म—मार्द्रयन्तीं.

[1]सं. १-६-११.

स्त्वंवेद यं प्रजापतिर्वेद स पुण्यो भव-
त्येष वै छन्दस्यः प्रजापतिरा श्रावया-
स्तु श्रौषड्यज ये यजामहे वषट्कारो

पतिम् । त्वोवेदेति त्वः—वेद । प्रजापतिरिति प्रजा—पतिः । त्वंवेदेति त्वं—वेद । यम् । प्रजापतिरिति प्रजा—पतिः । वेद । सः । पुण्यः । भवति । एषः । वै । छन्दस्यः । प्रजापतिरिति प्रजा—पतिः । एति । श्रावय । अस्तु । श्रौषट् । यज । ये । यजामहे । वषट्कार इति वषट्—कारः । यः । एवम् । वेद ।

तिरपि कं चिद्वेद । 'त्वसमसीमनेमेत्यनुच्चानि'* इति त्वशब्दस्यानुदात्तत्वात्तस्याख्यातेनैकपद्यं मन्यन्ते पदकाराः । तत्र 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते । यमित्यादि । एतं प्रचरन्तं प्रजापतिर्वेदेति । छन्दस्य इति । 'अक्षरसमूहे छन्दस उपसङ्ख्यानम्' इति यत् । आश्रावयादीनां छन्दसां वीर्यत्वात्† यथोक्तम्—'य एवं छन्दसां वीर्यम्'‡ इत्यादि । तत्रैषां छन्दसां वीर्यत्वमुक्तम्, अत्र तु तत्समूहस्य प्रजापतित्वमिति विवेकः। एवंविदनुष्ठाता पुण्यो भवति, न चेत्पापकृत् । यत्किञ्चित्पापकृदपीति केचित् ॥

* 'त्वत्वसमसीमेत्यनुच्चानि' इत्येव फिट्सूत्रे दृश्यते.

†[ म. कोशे 'आश्रावयादिना' इत्येतदनन्तरं कतिपयाक्षरलेखपर्याप्तं स्थलमलेखं विधाय 'छन्दसां वीर्यमित्यादि' इति लिखितम् । एवन्त्वत्र पाठस्सम्भाव्येत—'आश्रावयादीनां छन्दसां वीर्यत्वात् प्रजापतिरूपत्वम् । यथोक्तम्...............विवेकः' इति ॥ ] ‡सं. ३-३-७.

य एवं वेद पुण्यो भवति वसन्तम्
॥४२॥ ऋतूनां प्रीणामीत्याहर्तवो वै
प्रयाजा ऋतूनेव प्रीणाति तेऽस्मै प्रीता
यथापूर्वं कल्पन्ते कल्पन्तेऽस्मा ऋतवो
य एवं वेदाग्नीषोमयोरहं देवयज्यया
चक्षुष्मान्भूयासमित्याहाग्नीषोमा-

पुण्यः । भवति । [7]वसन्तम् ॥ ४२ ॥ ऋतूनाम् । प्रीणामि । इति । आह । ऋतवः । वै । प्रयाजा इति प्र-याजाः । ऋतून् । एव । प्रीणाति । ते । अस्मै । प्रीताः । यथापूर्वमिति यथा-पूर्वम् । कल्पन्ते । कल्पन्ते । अस्मै । ऋतवः । यः । एवम् । वेद । [8]अग्नीषोमयोरित्यग्नी-सोमयोः । अहम् । देवयज्ययेति देव-यज्यया । चक्षुष्मान् । भूयासम् । इति । आह । अग्नीषोमाभ्यामित्यग्नी-सोमाभ्याम् । वै । यज्ञः । चक्षुष्मान् । ताभ्याम् । एव ।

---

[7]वसन्तमित्यादयः प्रयाजानुमन्त्रणमन्त्राः ॥ पञ्चत्वान्[illegible]तिहेतुत्वाच्च, प्रयाजा ऋतवः । प्रथममिज्यन्त इति प्रयाजाः । ‘प्रयाजानुयाजौ यज्ञाङ्गे’ इति कुत्वाभावः, थाथादिना उत्तरपदान्तोदात्तत्वम् । कल्पन्ते अविपर्यासेन प्रवर्तन्ते ॥

[8]अग्नीषोमयोरित्याज्यभागानुमन्त्रणम् ॥ ‘ईदग्नेः’ इतीत्वम्, ‘अग्नी-

भ्यां वै यज्ञश्चक्षुष्मान्ताभ्यामेव
चक्षुरात्मन्धत्तेऽग्नेरहं देवयज्ययान्ना-
दो भूयासमित्याहाग्निर्वै देवानाम-
न्नादस्तेनैव॥४३॥ अन्नाद्यमात्मन्धत्ते

चक्षुः । आत्मन्न् । धत्ते । [9]अग्नेः । अहम् । देवयज्ययेति देव-यज्यया । अन्नाद इत्यन्न-अदः । भूयासम् । इति । आह । अग्निः । वै । देवानाम् । अन्नाद इत्यन्न-अदः । तेन । एव ॥ ४३ ॥ अन्नाद्यमित्यन्न-अद्यम् । आत्मन्न् । धत्ते । [10]दब्धिः । असि । अदब्धः । भूयासम् । अमुम् । दभेयम् । इति ।

---

स्तुत्स्तोमसोमाः' इति षत्वम्, 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥

[9]अग्नेरहमित्याग्नेयस्य पुरोडाशस्यानुमन्त्रणम्—अग्निर्वा इत्यादि ॥ देवानाम्मध्येऽग्निरन्नादः अन्नस्यात्ता, हविषां भोक्तृत्वात् । अणपवादः, पचाद्यच् । अन्नाद्यं अन्नस्यादनमन्नाद्यं अन्नादनसामर्थ्यम् । छान्दसो भावे क्यच् [पु] । यद्वा—अन्नात्मकमदनीयमन्नाद्यम् । 'मदमदचरयमश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वाद्यत् ॥

[10]दब्धिरसीत्युपांशुयाजस्यानुमन्त्रणम्—एतया वा इत्यादि ॥ दब्धा दम्भनेन शत्रूणां दम्भनहेतुना । उपांशुयाजेन* देवा असुरानदभ्नुवन् हिंसितवन्तः ॥

---

*क—याजेनाहेन.

दब्धिरस्यदब्धो भूयासममुं दभेयमित्याहैतया वै दब्ध्या देवा असुरानदभ्नुवन्तयैव भ्रातृव्यं दभ्नोत्यग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमित्याहाग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्ताभ्यामेव भ्रातृव्यꣳ स्तृणुत इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासमित्याहेन्द्रिया-

आह । एतया । वै । दब्ध्या । देवाः । असुरान् । अदभ्नुवन् । तया । एव । भ्रातृव्यम् । दभ्नोति । [11]अग्नीषोमयोरित्यग्नी–सोमयोः । अहम् । देवयज्ययेति देव–यज्यया । वृत्रहेति वृत्र–हा । भूयासम् । इति । आह । अग्नीषोमाभ्यामित्यग्नी–सोमाभ्याम् । वै । इन्द्रः । वृत्रम् । अहन् । ताभ्याम् । एव । भ्रातृव्यम् । स्तृणुते । [12]इन्द्राग्नियोरितीन्द्र–अग्नियोः । अहम् । देवयज्ययेति देव–यज्यया । इन्द्रियावी । अन्नाद इत्यन्न–अदः । भूयासम् । इति ।

---

[11]अग्नीषोमयोरित्यग्नीषोमीयस्यानुमन्त्रणम् ॥ स्तृणुते नाशयति ॥

[12]इन्द्राग्नियोरहमित्यैन्द्राग्नस्यानुमन्त्रणम्—इन्द्रियाव्येवेत्यादि ॥

व्यैवान्नादो भवतीन्द्रस्य ॥४४॥ अहं देवयज्ययेन्द्रियावी भूयासमित्याहे-न्द्रियाव्यैव भवति महेन्द्रस्याहं देव-यज्यया जेमानं महिमानं गमेयमि-त्याह जेमानमेव महिमानं गच्छ-त्यग्नेस्स्विष्टकृतोऽहं देवयज्ययायु-

आह । इन्द्रियावी । एव । अन्नाद इत्यन्न–अदः । भवति । [13]इन्द्रस्य ॥ ४४ ॥ अहम् । देवयज्ययेति देव–यज्यया । इन्द्रियावी । भूयासम् । इति । आह । इन्द्रियावी । एव । भवति । [14]महेन्द्रस्येति महा–इन्द्रस्य । अहम् । देवयज्ययेति देव–यज्यया । जेमानम् । महिमानम् । गमेयम् । इति । आह । जेमानम् । एव । महिमानम् । गच्छति । [15]अग्नेः । स्विष्टकृत इति स्विष्ट–कृतः । अहम् । देवयज्य-

---

इन्द्रेणेन्द्रियावी, अग्निनान्नादश्च भवति । 'बहुलं छन्दसि' इति विनिः, 'अन्येभ्योपि दृश्यते' इति दीर्घत्वम् ॥

[13]इन्द्रस्येत्यैन्द्रस्य सान्नाय्यस्यानुमन्त्रणम् ॥

[14]महेन्द्रस्येति माहेन्द्रस्य ॥ जेमा जेतृत्वं सर्वोत्कृष्टत्वम् । 'तुश्छन्दसि' इति जेतृशब्दादिमनिच्, छान्दस इकारलोपः, 'तुरिष्ठेमेयस्सु' इति तृलोपः । जनयितृत्वं वा । जनेश्छान्दसो जाभावः । 'अन्येभ्योपि दृश्यन्ते' इति वा व्यत्ययेन भावे जयतेर्मनिन्प्रत्ययः, छान्दसमन्तोदात्तत्वम् । महिमानं महत्त्वम् । मह पूजायाम् । सर्वेषां पूजार्हत्वम् । पूर्ववन्मनिन्प्रत्ययस्स्वरश्च ॥

[15]अग्नेस्स्विष्टकृत इति स्विष्टकृतोनुमन्त्रणम् ॥ आयुष्मान्दीर्घायुः ।

ष्मान् यज्ञेन प्रतिष्ठां गमेयमित्या-
हायुरेवात्मन्धत्ते प्रति यज्ञेन तिष्ठ-
ति ॥ ४५ ॥

इन्द्रं वो विश्वतस्परि हवामहे जने-
येति देव—यज्यया । आयुष्मान् । यज्ञेन । प्रति-
ष्ठामिति प्रति—स्थाम् । गमेयम् । इति । आह ।
आयुः । एव । आत्मन् । धत्ते । प्रतीति । यज्ञेन ।
तिष्ठति ॥ ४५ ॥

प्रतिष्ठामह्वदस्तु विद्युतं वसन्तं तेनैवेन्द्रं-
स्याष्टात्रिंशच्च ॥ ११ ॥

[1]इन्द्रम् । वः । विश्वतः । परीति । हवामहे ।

आयुर्दीर्घमात्मनि स्थापयति । प्रतियज्ञेन तिष्ठतीति । यज्ञेन या प्रतिष्ठा यजमानस्य भवति, 'प्रति तिष्ठति प्रजया पशुभिर्यजमानः'* इति, तामपि प्रतिष्ठां गच्छतीति । यद्वा—प्रतिष्ठेति परमात्मोच्यते । यज्ञेन यजनेन तं प्रतितिष्ठति प्राप्नोतीति ॥

इति षष्ठे एकादशोनुवाकः.

---

[1]'ऐन्द्रं चरुं निर्वपेत्पशुकामः'† इत्यस्य पुरोनुवाक्या—इन्द्रं व इति गायत्री ॥ याजमानब्राह्मणमध्ये याज्याकाण्डं वैश्वदेवम् ।

*ब्रा. ३-३-९. †सं. २-२-७.

भ्यः। अस्माकमस्तु केवलः। इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजनेभ्यः। अस्माकम्। अस्तु। केवलः। [2]इन्द्रम्। नरः। नेमधितेति नेम—धिता। हवन्ते। यत्। पार्याः। युनजते। धियः। ताः। शूरः। नृषातेति

हे ऋत्विग्यजमाना वो युष्माकं मम जनेभ्यः पुत्रादिभ्यः सामर्थ्याद्युष्मभ्यमस्मभ्यं च सर्वार्थमिन्द्रं विश्वतस्परि विश्वस्मादुपरि हवामहे आह्वयामः। 'पञ्चम्याः परावध्यर्थे' इति सत्वम्। यद्वा—विश्वतो जनेभ्य उपरिस्थितमिन्द्रं वो युष्मदर्थं हवामहे। किमर्थम्? अस्माकमेव केवलोसाधारणोस्तु साधको नान्येषामिति॥

[2]तत्रैव याज्या—इन्द्रं नर इति त्रिष्टुप्॥ नरो मनुष्या इन्द्रं हवन्ते आह्वयन्ति। कीदृशम्? नेमधिता, नेम इत्यर्धस्य नाम। 'यत्सर्वेषामर्धमिन्द्रः प्राति'* इति सर्वेषां भागार्धेन इन्द्रो धीयते धार्यत इति नेमधितः। निष्ठायां 'सुधितवसुधितनेमधित' इति धिभावो निपात्यते, 'सुपां सुलुक्' इति द्वितीयैकवचनस्याकारः, 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्। कदा पुनरसौ नेमेन धार्यत इत्याह—यद्यदा। तेनेव सप्तम्या लुक्। पार्याः परलोके साधवः। छान्दसो ण्यः। यद्वा—दुःखानां पारं समाप्तिः। तत्र साध्वीर्धियः कर्माणि ता यदर्थमिन्द्रमाह्वयन्ति। ता यदा युनजते युञ्जते अनुतिष्ठन्ति तदा नेमधितेति। 'छन्दस्युभयथा' इत्यार्धधातुकत्वेन श्नमो ङित्वाभावात्,

*सं. ५-४-८.

**जंते धियस्ताः । शूरो नृषाता शवं-**
**सश्चकान आ गोमति व्रजे भंजा त्वं**
**नंः । इन्द्रियाणिं शतक्रतो या ते**

**नृ-साता । शवंसः । चकानः । एतिं । गोमतीति गो-मति । व्रजे । भज । त्वम् । नः । [3]इन्द्रियाणिं । शतक्रतो इतिं शत-क्रतो । या । ते । जनेषु ।**

‘श्वसोरल्लोपः’ इति न प्रवर्तते । अथेन्द्रः प्रत्यक्षमुच्यते—शूरः वीरः । नृषाता नृभिर्मनुष्यैः साता सातः सम्भक्तः आश्रितः नृषातः । पूर्ववदाकारः, ‘जनसनखनां सञ्झलोः’ इत्यात्वं, पूर्ववत्पूर्वपदप्रकृतिस्वरत्वं, सुषामादित्वात्षत्वम् । यद्वा—नरो मनुष्याः सनितारस्सम्भक्तारः दातारो वा यस्य नृषाता । छान्दसमात्वं, ‘ऋतश्छन्दसि’ इति कबभावः । शवसो बलस्य नेतारो यस्य दातारो यजमाना[यजना]धीनबलत्वात् । यद्वा—शवसो बलस्य नृभ्यो दाता । छान्दसमात्वम्, पूर्वपदप्रकृतिस्वरत्वं च । चकानस्तृप्तिशीलः । चक तृप्तौ, भौवादिकः उदात्तेत्, ताच्छीलिकश्चानश्, ‘बहुलं छन्दसि’ इति शपो लुक् । ईदृशस्त्वं नोस्मान् गोमति व्रजे गोजाविमनुष्यादिमति सङ्घाते । यद्वा—व्रजे गोष्ठे भूयिष्ठगोभिर्युक्ते आभज आभिमुख्येनास्मान्योजय पशुमन्तं मां कुरु । ‘द्व्यचोतस्तिङः’ इति संहितायां दीर्घत्वम् ॥

[3]‘इन्द्रायेन्द्रियावते पुरोडाशमेकादशकपालं निर्वपेत्’* इत्यस्य पुरोनुवाक्या—इन्द्रियाणीति गायत्री ॥ हे इन्द्र शतक्रतो या

*सं. २-२-७.

जनेषु पञ्चसु । इन्द्र तानि त आ वृ-
णे । अनु ते दायि मह इन्द्रियाय
सत्रा ते विश्वमनु वृत्रहत्ये । अनु॥४६

पञ्चस्विति पञ्च-सु । इन्द्र । तानि । ते । एति । वृणे । [4]अन्विति । ते । दायि । महे । इन्द्रियाय । सत्रा । ते । विश्वम् । अन्विति । वृत्रहत्य इति वृत्र-हत्ये । अन्विति ॥४६॥ क्षत्रम् । अन्विति ।

---

यानि ते तवेन्द्रियाणि वीर्याणि पञ्चसु जनेषु निषादपञ्चमेषु ब्राह्मणादिषु देवमनुष्यपितृरक्षोगन्धर्वेषु वा त्वया दत्तानि तिष्ठन्ति । यद्वा—पञ्चसु जनेषु निमित्तभूतेषु पञ्चजनपरिपालनार्थानि* यानि तव वीर्याणि त्वयि तिष्ठन्ति तान्यहमावृणे आभिमुख्येन याचे ते तवैव प्रसादान्मदभिमतान्यपि साधयन्त्विति प्रार्थये । त्वं च तथानुज्ञातुमर्हसि, यथाहं पशुमान्त्स्यामिति । यद्वा—मय्यपि तानि वीर्याणि सन्त्विति याचे, त्वं च तानि देहि । 'स एवास्मा इन्द्रियं पशून्प्र यच्छति पशुमानेव भवति '† इति ब्राह्मणम् ॥

[4]तत्रैव याज्या—अनु त इति त्रिष्टुप् ॥ हे इन्द्र यजत्र यष्टव्य । यजेरत्रः । ते तुभ्यं दायि दीयते देवेभिः ऋत्विग्भिः; सामर्थ्याद्धविरिति गम्यते । विश्वं कृत्स्नमपि तुभ्यमेव दीयते, त्वत्प्रधानत्वाद्देवानाम् । यद्वा—विश्वं हविस्तुभ्यमेव दीयतां किमन्यैर्देवैः । छान्दसो लुङ् । 'अमाङ्योगेपि ' इत्यडभावश्छान्दसः । सत्रा सत्रेषु सर्तव्येषु

*क—तत्परिपालनार्थानि. †सं. २-२-७.

क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु
ते नृषह्ये। आ यस्मिन्त्सप्त वासवा-
स्तिष्ठन्ति स्वारुहो यथा। ऋषिर्ह

सहः। यजत्र। इन्द्र। देवेभिः। अन्विति। ते।
नृषह्य इति नृ-सह्ये। [5]एति। यस्मिन्न्। सप्त।
वासवाः। तिष्ठन्ति। स्वारुह इति स्व-रुहः।
यथा। ऋषिः। ह। दीर्घश्रुत्तम इति दीर्घश्रुत्-

यज्ञेषु सर्वेष्वपि। सप्तम्या आकारः। देवतान्तरेभ्य इन्द्रस्य विशेषानाचष्टे—महे महते इन्द्रियाय वीर्याय अनु। द्वितीयार्थे चतुर्थी। महदिन्द्रियहेतुभावमनुशब्दो द्योतयति। महतेन्द्रियेण तद्वानयमिति कृत्वा तुभ्यमेव दीयते। अनु वृत्रहत्ये वृत्रहत्याम्। 'सुपां सुलुक्' इति द्वितीयाया एकारः। वृत्रं हतवानयमिति कृत्वा। क्षत्रं धनं, धनवानिति कृत्वा। सहो बलं, बलवानिति कृत्वा। अनु नृषह्ये, नृषह्यं नृणां शत्रूणामभिभवितृत्वम्, सर्वेषां नृणामयमभिभवितेति कृत्वा। 'शकिसहोश्च' इति भावे यत्, पूर्ववद्द्वितीयाया एकारः, सुपामादित्वात्षत्वम्॥

[5]'इन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकामः'* इत्यस्य पुरोनुवाक्या—आ यस्मिन्नित्यनुष्टुप्॥ सप्त, सृप्तारः सप्तसङ्ख्या वा। वासवाः जगतां वासहेतवः। वसव एव वासवाः प्रकाशोदकधारणाहरणवितरणकारिणो रश्मयोश्वा वा। वसूनां रश्मीनां समूह एव वा वासवः सप्तशतानि† प्रधानानि

*सं. २-२-७. †क—सप्तातानि.

दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः।
आमासु पक्वमैरय आ सूर्यं रोह-

तमः। इन्द्रस्य। घर्मः। अतिथिः। आमासु। पक्वम्। ऐरयः। एति। सूर्यम्। रोहयः। दिवि।

---

ते यस्मिन्तिष्ठन्ति। स्वारुहस्स्वयमेव रोहन्ति विचरन्तीति स्वारुहः। सांहितिको दीर्घश्छान्दसः। आदित्यपरतन्त्रा अपि स्वैरप्रवृत्तय इव वसन्तः भगवन्तमप्यास्थाय यस्मिन्वर्तन्ते। 'यथेति पादान्ते' इति सर्वानुदात्तो यथाशब्दः। पुनरप्यादित्यो विशेष्यते—ऋषिर्द्रष्टा सर्वस्य त्रैकालिकस्य लोकसाक्षी। दीर्घश्रुत्तमः प्रथितकीर्तितमः। ईदृशो महाभागो घर्मः आदित्योपीन्द्रस्यातिथिः अर्थित्वेन पार्श्वमागच्छति, इन्द्रनिसृष्टेनोदकेन वार्थी भवति,* दीप्यते वा पूज्यत्वेन। हशब्दः खल्वर्थे। तस्मादेवं महानुभावः इन्द्रोस्मभ्यं ब्रह्मवर्चसं ददात्विति ॥

[6]तत्रैव याज्या—आमास्विति पथ्याबृहती, तृतीयपादस्य द्वादशाक्षरत्वात् ॥ आमास्वतप्तासु भूमिष्ठास्वप्सु पक्वं परिणतं दिवि नवमासधृतं पक्ववदुदकमैरयः प्रेरयसि हे इन्द्र त्वं सूर्यं च दिव्यारोहयः आरोहयसि आसमन्तादारोप्य प्रकाशयसि। 'प्राणो वा इन्द्रः' इति प्राणवृत्तिर्भगवा†नुदेति। इदानीं प्रत्यक्षवदिन्द्र उच्यते—घर्मं न प्रवर्ग्यमिव सामन् साम्नि सामविषयाभिस्सुवृक्तिभिः, सुष्ठु शोभनं वा आवृज्यते याभिस्स्तुतिभिस्तास्सुवृक्तयः। 'मन्क्तिन्व्याख्यान'

---

*म—...निसृष्टेनन[...ष्टेनोदकेन]वाऽत्रति. †म—...वृत्तिर्भवा.

योदिवि। घर्मं न सामन्तपता सुवृक्तिभिर्जुष्टं गिर्वणसे गिरः। इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः।

घर्मम्। न। सामन्न्। तपत। सुवृक्तिभिरिति सु-वृक्ति-भिः। जुष्टम्। गिर्वणसे। गिरः। [7]इन्द्रम्। इत्। गाथिनः। बृहत्। इन्द्रम्। अर्केभिः। अर्कि-

---

इत्युत्तरपदान्तोदात्तत्वम्। यद्वा—सुवृक्तिभिश्शोभनभक्तिभिस्सामभिः। 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। सामान्निति व्यत्ययेन तृतीयाबहुवचनस्य सप्तम्येकवचनं, तस्य च 'सुपां सुलुक्' इति लुक्। ननु तृतीयाबहुवचनस्यैव लुगस्तु? नैवं शक्यते। 'न ङिसम्बुद्ध्योः' इति नलोपप्रतिषेधो न स्यात्। जुष्टमिन्द्रस्य प्रियं भागं तपत। तस्मै महानुभावाय इन्द्राय दातुं तद्योग्यं संस्कुरुत। सांहितिकोस्य दीर्घश्छान्दसः। जुष्टशब्दस्याद्युदात्तत्वमुक्तम्। किञ्च—गिर्वणसे गीर्भिर्वननीयाय भजनीयाय स्तोतव्यायेन्द्राय इन्द्रार्थं गिरः वाचश्च स्तुतिरूपाः तपतेत्येव। गीर्भिर्वननीय इति 'गतिकारकयोरपि' इत्यसुन्, पूर्वपदप्रकृतिस्वरत्वं च। स चास्मभ्यं ब्रह्मवर्चसं ददात्विति॥

[7]'इन्द्रायार्कवते पुरोडाशमेकादशकपालं निर्वपेदन्नकामः'* इत्यस्य पुरोनुवाक्या—इन्द्रमिदिति गायत्री॥ इन्द्रमित् इन्द्रमेव गाथिनो गाथावन्तः गायका उद्गातारः। व्रीह्यादित्वादिनिप्रत्ययः।

---

*सं.—२-२-७.

इन्द्रं वाणीरनूषत। गायन्ति त्वा गा-
यत्रिणः ॥४७॥ अर्चन्त्यर्कमर्किणः।
ब्रह्माणस्त्वा शतक्रतवुद्वꣳशमिव ये-

णः। इन्द्रम्। वाणीः। अनूषत। [8]गायन्ति। त्वा। गायत्रिणः ॥ ४७ ॥ अर्चन्ति। अर्कम्। अर्किणः। ब्रह्माणः। त्वा। शतक्रतविति शत–क्रतो। उदिति।

---

बृहत् बृहता साम्ना, अनूषतेति वक्ष्यते। 'सुपां सुलुक्' इति तृतीयाया लुक्। तथा अर्किणः अर्कवन्तः होतारः। ऋच स्तुतौ, घञ्, 'चजोः कु घिण्यतोः' इति कुत्वम्। अर्के-भिरर्कैः ऋग्भिः इन्द्रमेवानूषत अस्तुवन्। छान्दस ऐसभावः। तथा वाणीः वाण्यः ऋग्यजुस्सामलक्षणाः। 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्। पारिशेष्यादध्वर्यूणां वाण्यश्चेन्द्रमेव अनूषत नुवन्ति। णू स्तवने, तौदादिकः, छान्दसो लुङ्, व्यत्ययेनात्मनेपदं, कुटादित्वाद्गुणाभावः, छान्दस इडभावः। तथा स इन्द्रोस्मभ्यमन्नं ददात्विति ॥

[8]तत्रैव याज्या—गायन्तीत्यनुष्टुप्॥ हे शतक्रतो बहुकर्मन् शताश्वमेधिन्वा इन्द्र गायत्रिणः गायत्रेण साम्ना तद्वन्त उद्गातारः त्वां गायन्ति। तथा अर्किणः अर्कवन्तः ऋक्षु साधवः होतारः त्वामर्कं स्तोतव्यं अर्चयन्ति स्तुवन्ति। यद्वा—अर्च पूजायाम्, अर्चयन्त्यर्कं पूजनीयं त्वामर्चयन्ति पूजयन्ति होतारः। तथा

मिरे । अꣳहोमुचे प्र भरेमा मनीषामोषिष्ठदाव्न्ने सुमतिं गृणानाः ।

वꣳशम् । इव । येमिरे । [9]अꣳहोमुच इत्यꣳहः–मुचे । प्रेति । भरेम । मनीषाम् । ओषिष्ठदाव्न्न इत्योषिष्ठ–दाव्न्ने । सुमतिमिति सु–मतिम् । गृणा-

ब्रह्माणः ब्रह्मादयः अध्वर्यवोपि गृह्यन्ते* । ते त्वामुद्येमिरे उद्यच्छन्ते उत्थापयन्ति वर्धयन्तीत्यर्थः । छान्दसो लिट् । कमिव? वंशमिव । यथोत्तमसम्बन्धादिभिस्सत्पुरुषा वंशं स्वकुलमुत्कर्षं नयन्ति। यद्वा—वंशं ग्रामं† यथोदकादिभिश्शनैर्वर्धयन्ति तद्वत्स त्वमस्मभ्यमन्नं प्रयच्छेति । केचित्—अत्रोभयत्रार्कशब्दोऽन्नवचनः‡ । अर्किणः अन्नवन्तः अर्कैर्हविर्लक्षणैरर्कमर्च्यं पूज्यं त्वामर्चयन्ति यजन्ते । शेषं समानमिति ॥

[9]‘इन्द्रायांहोमुचे पुरोडाशमेकादशकपालं निर्वपेद्यः पाप्मना गृहीतस्स्यात्’§ इत्यस्य पुरोनुवाक्या—अंहोमुच इति त्रिष्टुप् ॥ अंहसः पापाद्विमोक्त्रे, ओषिष्ठदाव्ने दावेनोषिष्ठः दग्धृतमः आदित्यः तस्मै उदकस्य दात्रे, वर्षार्थं वा तस्य दापयित्रे; यथा—‘आदित्याज्जायते वृष्टिः’¶ इति । उष दाहे, तृजन्तात् ‘तुश्छन्दसि’ इतीष्ठन्प्रत्ययः, ‘तुरिष्ठेमेयस्सु’ इति तृशब्दस्य लोपः, ददातेः ‘आतो मनिन्’ इति वनिप्प्रत्ययः । हे इन्द्र ईदृशाय तुभ्यं

*तं—गायन्ति. †म—वंशग्रामं शद्रुमं [सद्रुमं?].

‡अस्यां पूर्वस्यां च ऋच्यर्कशब्दोऽन्नवचन इत्यर्थः. §सं. २-२-७,

¶मनुस्मृ. ३-७६.

इदमिन्द्र प्रतिं हव्यं गृभाय सत्यास्स-
न्तु यजमानस्य कामाः । विवेष य-
न्मा धिषणा जजान स्तवै पुरा पार्या-

नाः । इदम् । इन्द्र । प्रतीति । हव्यम् । गृभाय । सत्याः । सन्तु । यजमानस्य । कामाः । [10]विवेष । यत् । मा । धिषणा । जजान । स्तवै । पुरा ।

---

गृणानास्स्तुवन्तः वयं मनीषां बुद्धिं प्रभरेम त्वत्स्तुत्यर्थं प्रकर्षेण स्वीकुर्मः । कीदृशीं ? सुमतिं शोभमानाम् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । त्वां तोषयेमेत्येवंरूपाम् । त्वं च तया स्तुत्या तुष्ट इदं हव्यं प्रतिगृभाय प्रतिगृह्णीष्व । 'हृग्रहोर्भः' इति भः, 'छन्दसि शायजपि' । यजमानस्य कामा मनोरथाः अंहसो मुच्येयेत्येवमादयः सत्या अमोघा भवन्तु ॥

[10]तत्रैव याज्या—विवेषेति त्रिष्टुप् ॥ यद्यस्मान्मां धिषणा तादृशी बुद्धिः विवेष व्याप्तवती तस्मादहं जजान जातवानस्मि; नो चेदहमजातसम एव स्याम् । अपदात्परत्वान्न निहन्यते । 'समानवाक्ये निघातादयः' इति वचनाज्जजानेति न निहन्यते । का पुनस्सा धिषणेत्याह—पार्यात्पारेभवात् अत्यन्तादह्नो दिवसात् पुरा पूर्वं यावन्मरणदिवसं इन्द्रं स्तवै स्तुत्या तोषयामीतीयं धिषणा जजान ममोदपादि, अतो जातवानस्मि । पुनश्च धिषणा विशेष्यते—यत्र यस्यां धिषणायां सत्यां इन्द्र अंहसः पापात् पीपरत्पारयति उत्तारयति पुरुषम् । पार तीर कर्मसमाप्तौ, छान्दसो

दिन्द्रमहः । अꣳहसो यत्र पीपर-
यथा नो नावेव यान्तमुभये हव-
न्ते । प्र सम्राजं प्रथममध्वराणाम्
॥ ४८ ॥ अꣳहोमुचं वृषभं यज्ञि-

पार्यात् । इन्द्रम् । अहः । अꣳहसः । यत्र । पीप-
रत् । यथा । नः । नावा । इव । यान्तम् । उभये ।
हवन्ते । [11]प्रेति । सम्राजमिति सं—राजम् । प्रथ-
मम् । अध्वराणाम् ॥४८॥ अꣳहोमुचामित्यꣳहः—
मुचम् । वृषभम् । यज्ञियानाम् । अपाम् । नपातम् ।

---

लुङ्, 'चङ्यन्यतरस्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यद्वा— यत्राह्नि अस्मानिन्द्रोंहसः पारयति उत्तारयति तत्पार्यमहरिति निर्वचनं क्रियते । आ तत इन्द्रं स्तवै, यावदंहोविमोचनमित्यर्थः । अथ पारतरणं विशेष्यते—यथा अंहस उत्तारितानस्मानुभये उभयकुलप्रभवा अपि हवन्ते आह्वयन्ति आत्मरक्षार्थं मां रक्ष मां रक्षेति । यथेति निपातो यद्वृत्तप्रतिरूपकः । यथा गणकाराः— 'मात्रायां वेळायां यथा पुरा हो अहो अथो मनो' इति । तेनाख्यातं निहन्यते । यथा नदीमध्ये नावा यान्तमुभयतस्स्थिता आह्वयन्ति भो मामुत्तारय मामुत्तारयेति, तथांहस उत्तारिणी धिषणा बुद्धिर्मा विवेष व्याप्ता भवतु, अतो जजानाहमिति । तस्मात्तादृशधिषणं मामिन्द्रोंहसो मुञ्चत्विति ॥

[11]तत्रैव याज्या विकल्प्यते—प्र सम्राजमिति त्रिष्टुप् ॥ सम्राजं

यानाम् । अपां नपातमश्विना हयं-
न्तमस्मिन्नर इन्द्रियं धत्तमोजः ।
वि न इन्द्र मृधो जहि नीचा यं-

अश्विना । हयन्तम् । अस्मिन्न् । नरः । इन्द्रियम् ।
धत्तम् । ओजः । [12]वीति । नः । इन्द्र । मृधः ।
जहि । नीचा । यच्छ । पृतन्यतः । अधस्पदमि-

सङ्गतदीप्तिम् । 'मो राजि समः क्वौ' । अध्वराणां यज्ञानां प्रथमं प्रधानम् । अंहोमुचमंहसो मोक्तारं इन्द्रम्, स्थानाद्गम्यते । वृषभं वर्षितारं कामानां दातारम् । यज्ञियानां यज्ञार्हाणां मध्ये सम्राजं सम्यग्राजन्तं, यज्ञियानां वा सम्बन्धिनं स्वामित्वेन, यज्ञियानां वा वृषभम् । 'यज्ञर्त्विग्भ्याम्' इति घः । अपां नपातमपां चतुर्थमिन्द्रं अस्मान्मध्यमः ततो मेघः तत आप इति । न पातयति न च्यावयतीति नपात् । 'नाभ्राण्णपात्' इति निपात्यते । हयन्तं वर्धमानं अविच्छिन्नैश्वर्यं सर्वगम् । हय गतौ । हे नरः मनुष्या ऋत्विजः ईदृशमिन्द्रं प्रगच्छत प्रकर्षेण बन्धुत्वेन भजत, यथायं यजमानः अंहसो मुञ्चतीति । यद्वा—प्रेत्यस्याख्यातापेक्षायां धत्तमिति वक्ष्यमाणत्वाच्च धत्तेति सामर्थ्याद्योग्यं लभ्यते । इदानीमश्विनावुच्येते—हे अश्विनौ युवामपि अस्मिन् यजमाने इन्द्रियं चक्षुरादिदार्ढ्यं ओजः बलं च प्रधत्तं प्रकर्षेण स्थापयतम् । अत्रापि विशेषा*काङ्क्षायां प्रेति प्रकृतं सम्बध्यते, अंहसश्च मुक्तोस्त्विति ॥

[12]'इन्द्राय वैमृधाय पुरोडाशमेकादशकपालं निर्वपेद्यम्मृधोभि प्रवे-

*तं—विशेषणा.

च्छ पृतन्यतः । अधस्पदं तमीं
कृधि यो अस्मा॑ँ अभिदास॑ति ।
इन्द्र क्षत्रमभि वाममोजोऽजायथा
वृषभ चर्षणीनाम् । अपानुदो जनं-

त्यधः—पदम् । तम् । ईम् । कृधि । यः । अस्मान् ।
अभिदासतीत्यभि—दासति । [13] इन्द्र । क्षत्रम् ।
अभीति । वामम् । ओजः । अजायथाः । वृषभ ।
चर्षणीनाम् । अपेति । अनुदः । जनम् । अमित्र-

पेरन्नाष्ट्राणि वाभि समियुरिन्द्रमेव वैमृधम् '* इत्यस्य पुरोनुवाक्या—वि न इन्द्रेत्यनुष्टुप् ॥ हे इन्द्र नोस्माकं मृधः योद्धॄन् अस्माभिर्युद्ध्यमानान् विजहि विविधं मारय । किञ्च—पृतन्यतस्सङ्ग्रामं कर्तुमिच्छतः पुरुषान् नीचान् न्यग्भूतान् यच्छ उपरमय मारयेति यावत् । न्यक्शब्दाद्द्वितीयाबहुवचनस्य स्थाने व्यत्ययेन तृतीयैकवचनम्, 'अञ्चेश्छन्दस्यसर्वनामस्थानम्' इति तस्या उदात्तत्वम् । पृतनायाः क्यचि 'कव्यध्वरपृतनस्य' इति लोपः, 'शतुरनुमः' इति शस उदात्तत्वम् । किञ्च—योस्मानभिदासति अभिदासयति उपक्षयति । दसु उपक्षये, ण्यन्ताल्लेट्, 'छन्दस्युभयथा' इति शप आर्धधातुकत्वाण्णिलोपः, उदात्तनिवृत्तिस्वरो व्यत्ययेन न प्रवर्तते । तमुपक्षयकारिणमधस्पदमेव कृधि कुरु । ईमित्यवधारणे । अस्मत्पादयोरधः प्रणिपतितशिरस्कं कुर्विति यावत् । 'बहुलं छन्दसि' इति शपो लुक्, 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' इति धिभावः । 'अधश्शिरसी पदे' इत्यधश्शब्दस्य संहितायां सत्वम् ॥

[13] तत्रैव याज्या—इन्द्र क्षत्रमिति त्रिष्टुप् ॥ हे इन्द्र वामं वननीयं

*सं. २-२-७.

मामित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकम् । मृगो न भीमः कुचरो गिरिष्ठाः परावतः ॥ ४१ ॥ आजगामा परस्याः । सृकꣳ सꣳशाय

यन्तमित्यमित्र–यन्तम् । उरुम् । देवेभ्यः । अकृणोः । उ । लोकम् । [14]मृगः । न । भीमः । कुचरः । गिरिष्ठा इति गिरि–स्थाः । परावत इति परा–वतः ॥ ४१ ॥ एति । जगाम । परस्याः । सृकम् । सꣳशायेति सं–शाय । पविम् । इन्द्र ।

क्षत्रं क्षत्रियस्य भावं धनं वा ओजो बलं चाभ्यजायथाः अभिलक्ष्य जातोसि । वरिष्ठेन क्षत्रादिना लक्ष्यमाणजनन इत्यर्थः । चर्षणीनां मनुष्याणां वृषभ कामानां वर्षितः अभिमतस्य दातरित्यर्थः । पूर्ववन्नाम उदात्तत्वम् । एवं सामर्थ्यमुपकारतस्स्वभावतश्च प्रतिपाद्य इदानीं स्वाभिमतं प्रार्थयते—तादृशस्त्वमस्मास्वमित्रयन्तं शत्रुभावमिच्छन्तं जनमपानुदः अपनुद अपकृष्य*नाशय । छान्दसो लङ् । किञ्च—देवेभ्यो हविःप्रदानादिव्यवहारिभ्य उरुं विस्तीर्णं लोकं स्थानमकृणोः† कुरु । छान्दसो लङ्, 'धिन्विकृण्व्योरच' इत्युप्रत्ययः । उ इति पादपूरणे अवधारणे वा । देवेभ्य इति षष्ठ्यर्थे वा चतुर्थी । देवानां विस्तीर्णं लोकमस्मभ्यं देहीति ॥

[14]याज्याविकल्पः—मृगो नेति त्रिष्टुप् ॥ मृगो न मृग इव

*म—अपनुद दूरं प्रेरय अपगमयित्वा.

†म—...व्यवहारं जनार्थे............चतुर्णां लोकानां स्थानमुरुं विशालं निरवधिकविस्तीर्णमकृणोः.

पुविमिन्द्र तिग्मं वि शत्रूंन्ताढि वि मृधो नुदस्व । वि शत्रून् वि मृधो नुद वि वृत्रस्य हनू रुज । वि

तिग्मम् : [15]वीति । शत्रून् । ताढि । वीति । मृधः । नुदस्व । वीति । शत्रून् । वीति । मृधः । नुद । वीति । वृत्रस्य । हनू इति । रुज । वीति । मन्युम् ।

---

भीमः बिभेत्यस्मादिति भीमः । 'भीमादयोपादाने' । भयहेतुः व्याघ्रस्सिंहो वा । कुचरः कुत्सितं चरति । पचाद्यच् । हिंस्र-स्वभावः । गिरिष्ठाः पर्वतवासी स इव शत्रून् ताडय । यद्वा— गिरिर्मेघः गजो वा, तत्स्थः । सोर्जस् । परस्याः परावतः महतो दूरादाजगाम आगच्छति यो भृत्यं रक्षितुम् । पुरुषव्य-त्ययो वा, आजगामागच्छसि । 'उपसर्गाच्छन्दसि धात्वर्थे' इति वतिः । आख्यातस्य सांहितिको दीर्घश्छान्दसः । स त्वमित्थ-मागत्य हे इन्द्र सृकं परशरीरादिषु सरणशीलं तिग्मं प्रागेव तीक्ष्णं पविं वज्रं संशाय निशितीकृत्य तेनातितीक्ष्णेन शत्रून्वि-ताढि विविधं ताडय । ताडयतेर्लोटि शपो लुक्, 'छन्दस्युभ-यथा' इत्यार्धधातुकत्वाण्णिलोपः । मृधो योद्धॄंश्च विनुदस्व विविधं नुद विनाशय ॥

[15]अतश्च विकल्पः—वि शत्रूनित्यनुष्टुप् ॥ शत्रून् विविधं नाशय । मृधश्च योद्धॄन्विनुद विशेषतो नाशय । वृत्रस्यासुरस्य हनू विरुज विभिन्धि । वृत्रस्य वा मेघस्य हनुस्थानीये पार्श्वे विरुज विदा-

मन्युमिन्द्र भामितोऽमित्रस्याभिदासतः । त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् । हुवे

इन्द्र । भामितः । अमित्रस्य । अभिदासत इत्यभि-दासतः ।[16] त्रातारम् । इन्द्रम् । अवितारम् । इन्द्रम् । हवेहव इति हवे-हवे । सुहवमिति सु-हवम् । शूरम् । इन्द्रम् । हुवे । नु । शक्रम् । पुरुहूतमिति

रय वर्षार्थं याभ्यां वर्षन्ति मेघाः । हे इन्द्र अस्मानभिदासतः उपक्षयतः अमित्रस्य शत्रोर्मन्युं क्रोधं विनुद विनाशय भामितः अमित्रविषये क्रुद्धस्त्वम् ॥

[16] 'इन्द्राय त्रात्रे पुरोडाशमेकादशकपालं निर्वपेद्बद्धो वा परियत्तो वा'* इत्यस्य पुरोनुवाक्या—त्रातारमिन्द्रमिति त्रिष्टुप् ॥ इदि परमैश्वर्ये, इन्द्रः । ऐश्वर्यहेतून्बहून्दर्शयति—त्रातारमवितारं देवानाम्; तस्मादिन्द्रव्यपदेशभाजं अवितारं सर्वेषामपि तर्पयितारं इन्द्रं इतोपीन्द्रव्यपदेशभाजम्, हवेहवे सुहवं सर्वेष्वाह्वानेषु सुखेनाह्वातव्यं निर्भयैः । 'भावेनुपसर्गस्य' इत्यप्सम्प्रसारणं च, 'बहुलं छन्दसि' इति सम्प्रसारणे आकारान्तत्वाभावात्खलेव भवति । शूरं महाबलं सर्वजेतारं तथाप्याहूतमात्र एवागच्छन्तं इन्द्रं इतोपीन्द्रशब्दाभिधेयं शक्रं सर्वार्थसाधनशक्तं पुरुहूतं बहुभिर्यजमानैराहूतं अतोप्यासादितेन्द्रत्वं देवेश्वरं हुवे आह्वयामि । शपो

*सं. २-२-७.

नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः । मा ते अस्याम् ॥५०॥ सहसावन्परिष्टावघाय भूम

पुरु—हूतम् । इन्द्रम् । स्वस्ति । नः । मघवेति म-घ—वा । धातु । इन्द्रः । [17]मा । ते । अस्याम् ॥५०॥ सहसावन्निति सहसा—वन् । परिष्टौ । अघाय ।

---

लुक्, पूर्ववत्सम्प्रसारणम् । नु इति पादपूरणे । स मघवा प्रशस्तैर्धनैः अन्नादिभिर्हविरादिभिश्च तद्वान् अतश्चेन्द्रपदाभिधानार्हः नोस्मभ्यं स्वस्ति अविनाशं धातु ददातु । शपो लुक् । 'मघवा बहुलम्' इति निपात्यते । 'इत्थम्भूतेन कृतमिति च' इति पुरुहूतशब्दोन्तोदात्तः । यद्वा—पुरुषु स्थानेषु हूतः पुरुहूतः । 'तृतीया कर्मणि' इति प्राप्तत्यभावात् कृदुत्तरपदप्रकृतिस्वरत्वमेव निपात्यते । अत्र पुनःपुनः इन्द्रोक्तिरस्माकं सर्वार्थेषु त्वमेव शरणं नान्य इत्यादरसूचनार्था ॥

[17]तत्रैव याज्या—मा ते अस्यामिति त्रिष्टुप् ॥ हे सहसावन् बलवन् इन्द्र । सह एव सहसं बलं तद्वान् । 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । यद्वा—अवतुप्रत्ययश्छान्दसः - ते तवास्यां परिष्टौ परितस्सर्वतस्सर्वस्यामिष्टौ । छान्दसं ह्रस्वत्वम्, शकन्ध्वादित्वाद्वा पररूपत्वम् । अघाय पापाय कर्मवैगुण्यलक्षणाय मा भूम विगुणकारिणो न भवेम; सर्वेणापि प्रकारेणाविगुणो यज्ञोस्त्विति यावत् । हे हरिवः हरिवन् हरिभिर्हयैस्तद्वान् । 'मतुवसोः' इति रुत्वम् । परादै परदानाय च

हरिवः परादै। त्रायस्व नोऽवृकेभि-
र्वरूथैस्तव प्रियासस्सूरिषु स्याम।
अनवस्ते रथमश्वाय तक्षन्त्वष्टा

भूम । हरिव इति हरि-वः । परादा इति परा-
दै । त्रायस्व । नः । अवृकेभिः । वरूथैः । तव ।
प्रियासः । सूरिषु । स्याम । [18]अनवः । ते । रथम् ।
अश्वाय । तक्षन् । त्वष्टा । वज्रम् । पुरुहूतेति

मा भूम प्रत्याख्यानाय । अन्येभ्यो दानं परादाः । 'क्विप्च' इति क्विप् । चतुर्थ्येकवचने आकारलोपाभावश्छान्दसः । यद्वा—तुमर्थे कैप्रत्ययः, यथा—'प्रयै' इति । परादातुं च वयं मा भूम कदापि त्वया त्याज्या मा भूमेत्यर्थः । तस्मान्नोस्मान्त्राय-स्व रक्ष अवृकेभिः अवृकैश्चोरादिहिंसकरहितैः वरूथैर्गुप्तियुक्तै-र्गृहैः; ईदृशगृहवासिनः कृत्वा त्रायस्वेति । 'नञ्सुभ्याम्' इत्य-वृकशब्दोन्तोदात्तः । किम्बहुना—सूरिषु मेधाविषु मध्ये वयमेव तव प्रियासः प्रियास्स्याम भवेम । आज्जसेरसुक् । 'युष्मदस्मदो-र्ङसि' इति तवशब्द आद्युदात्तः ॥

[18]'इन्द्रायार्काश्वमेधवते पुरोडाशमेकादशकपालं निर्वपेद्यं महायज्ञो नोपनमेत्'* इत्यस्य पुरोनुवाक्या—अनवस्त इति त्रिष्टुप् ॥ हे पुरुहूत बहुभिराहूत इन्द्र ते तव रथमनवो मनुष्यास्तक्षन् तक्षन्तु संस्कुर्वन्तु । लङ् लोडर्थे, अडभावश्छान्दसः । अश्वायाश्वं योक्तुं

*सं—२-२-७.

वज्रं पुरुहूत द्युमन्तम् । ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उं । वृष्णे यत्ते वृषणो अर्कमर्चा-

पुरु–हूत । द्युमन्तमिति द्यु–मन्तम् । ब्रह्माणः । इन्द्रम् । महयन्तः । अर्कैः । अवर्धयन्न् । अहये । हन्तवै । उ । [19]वृष्णे । यत् । ते । वृषणः । अर्कम् ।

---

यथा योग्यो भवति तथा संस्कुर्वन्तु । यद्वा—अश्वाय व्याप्तिमते तुभ्यं यथा पर्याप्तो भवति त्वष्टा देवानां शिल्पी वज्रं तक्षतु तीक्ष्णीकरोतु । कीदृशम्? द्युमन्तं दीप्तिमन्तम् । किञ्च—ब्रह्माणः ब्राह्मणाश्च त्वामिन्द्रमीश्वरं अर्कैर्मन्त्रैः हविर्लक्षणैरन्नैर्वा महयन्तः पूजयन्तः अवर्धयन् वर्धयन्तु यशसा । किमर्थं? अहये अघाय अहिंसनाय आगत्य हन्तीत्यहिस्सर्पादिः । 'आङि शृहनिभ्यां ह्रस्वश्च' इतीण्प्रत्ययः । कर्माणि चतुर्थी । हन्तवै हन्तुम् । 'तुमर्थे सेसेन्' इति तवैप्रत्ययः । 'अन्तश्च तवै युगपत्' इत्याद्यन्तयोरुदात्तत्वम् । उः पादपूरणे । त्वं चास्माकं महायज्ञमुपनयेति ॥

[19]तत्रैव याज्या—वृष्ण इति त्रिष्टुप् ॥ हे इन्द्र ते तुभ्यं वृष्णे वर्षित्रे अभिमतदात्रे । षष्ठ्यर्थे चतुर्थी । तव वर्षितुः अर्कमर्चनीयामाज्ञां अर्चनीयं वा ते तव यागमर्चानर्चयन्ति पूजयन्ति। लेट्याडागमः । के? वृषणः ग्रावाणः वर्षितारो मेघाः वृष्टिं कुर्वन्तस्तवार्कमर्चयन्ति मेघा इत्यर्थः । 'वा षपूर्वस्य निगमे' इति दीर्घाभावः । अदितिः पृथिवी च सजोषाः समानप्रीतिः त्वया

निन्द्र ग्रावाणो अदितिस्सजोषाः ।
अनश्वासो ये पवयोऽरथा इन्द्रेषिता
अभ्यवर्तन्त दस्यून् ॥ ५१ ॥

अर्चान् । इन्द्र । ग्रावाणः । अदितिः । सजोषा इति स-जोषाः । अनश्वासः । ये । पवयः । अरथाः । इन्द्रेषिता इतीन्द्र-इषिताः । अभ्यवर्तन्तेत्यभि-अवर्तन्त । दस्यून् ॥ ५१ ॥

वृत्रहत्यनु गायत्रिणोऽध्वराणां परावतोऽस्यामष्टाचत्वारिंशच्च ॥ १२ ॥

सं त्वा सिञ्चामि ध्रुवोऽस्यग्निर्मा बर्हिषोहमाप्यायतामगन्म यथा वै यो वै श्रद्धां प्रजापतिर्यज्ञान्ध्रुवोसीत्याह यो वै सप्तदशमिन्द्रं वो द्वादश॥१२॥

तैर्वा मेघैरानुकूल्यं भजमाना सस्याद्युत्पादयतस्तव कर्मार्कमर्चयति। यद्यदा एवमेते कुर्वन्ति, तदानीं दुष्टात्मानो दस्यवोपि त्वयैव हन्तव्या इति तत्प्रार्थयते—अनश्वासः अश्वरहिताः । 'आज्जसेरसुक्' अरथाः रथरहिताः अश्वरथमनपे*क्षमाणाः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । ये पवयस्तवायुधविशेषाः इन्द्रेषितास्सर्वदेन्द्रेणैव प्रेषिताः अन्येन प्रेषितुमशक्याः; ते दस्यू-

*म—मनवे.

सं त्वा॑ ब॒र्हिषो॒हं यथा॑ वा ए॒वं वि॒द्वान्छ्रौषं॒ण्नह॒सा॒वन्नेकं॑पञ्चा॒शत् ॥ ५१ ॥

सं त्वा॑ सिञ्चा॒मि॒ दस्यू॑न् ॥

हरिः ॐ तत्सत् ॥

नभ्य वर्तन्त दस्यूनभिवर्तन्तां आभिमुख्येन हन्तुं वर्तन्ताम् । स्वरणादिद्वारा अस्मदुपक्षपयितारो दस्यवः । तानभिभूय पराजितान्कृत्वा सर्वदाऽस्मात्रक्षन्तो वर्तन्तामिति भावः । छान्दसो लङ् । एवं सर्वस्य लोकस्य रक्षको महात्मा त्वम्; अतोस्माकमपि महायज्ञमुपनयेति ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये
ज्ञानयज्ञाख्ये प्रथमे काण्डे षष्ठे
प्रपाठके द्वादशोनुवाकः.
समाप्तश्च प्रपाठकः.

# शुद्धाशुद्धपत्रिका.

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ५ | ३ | युष्मोक- | युष्माकं- |
| ७ | ,, | जंम्मे | जँ मे |
| ,, | ६ | हिंसिषम् | हिँसिषम् |
| ८ | ३ | हिंसिष्टम् | हिँसिष्टम् |
| १५ | १ | सुभव | सुभव |
| ३० | ४ | [2]त्वा । एषः । | त्वा । [2]एषः । |
| ,, | ५ | पाहि ॥ | पाहि ॥९॥ |
| ३५ | ३ | [2]एषः । | [3]एषः । |
| ४१ | ४ | ध्रुवः । | [2]ध्रुवः । |
| ४२ | ,, | एषः । | [3]एषः । |
| ५१ | ३ | मित्यर्कव | मित्यर्कवा |
| ५२ | ४ | एषः । | [2]एषः । |
| ५६ | ९ | त्वा ॥२१॥ | त्वा॥२१॥ महानेका-न्न विंशतिः॥२०॥ |
| ५९ | ७ | महानूव | महान्नूव |
| ६२ | ३ | यज्ञः | [3]यज्ञः । |
| ६४ | ,, | विवंस्वः । | [4]विवंस्वः । |

| पृष्ठ. | पङ्क्ती. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ६८ | २ | गयम्ं | गयंम् |
| ७९ | ८ | उपयाम | [2]उपयाम |
| ,, | ९ | एषः । | [3]एषः । |
| ८० | ,, | अभूत् । | अभूत् । |
| ८९ | १० | सर्वस्य महा | सर्वस्य महा |
| ९८ | ८ | धता । | धाता । |
| १०४ | ३ | तिष्ठतानु । | तिष्ठतानु । |
| १०७ | ,, | अपदे । | अपदे । |
| ११७ | ६ | जतवेद | जातवेद |
| १२१ | ७ | पिभावसु | विभावसु |
| १२३ | २ | सुवीर्यम्ं । | सुवीर्यम् । |
| १२७ | २० | दिवं | दिवं |
| १४५ | ११ | यस्येति | यस्येति |
| १५२ | ८ | इमम्ं । | इमम् । |
| १५३ | १ | सप्त ते | सप्त ते |
| १५५ | ९ | आदित्याः । | आदित्याः । |
| १६४ | ३ | अस्य । | [2]अस्य । |
| १६५ | १ | सामृषिम्ं । | सामृषिम् । |
| १६८ | ३ | दुच्छुनाम्ं । | दुच्छुनाम् । |

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| २०८ | ३ | विकृतं | विकृतं |
| २१५ | १४ | त । | ते । |
| २३३ | २ | नक्कम् । | नक्कम् । |
| २३७ | १० | एनाꣳसि | एनाꣳसि |
| २५२ | ८ | यन्त्रांय । | यन्त्रायं । |
| २७० | ६ | सुप्रतूंर्ति | सुप्रतूंर्ति |
| २८५ | ७ | दक्षिणायम् । | दक्षिणायाम् । |
| २८९ | २ | श्रेष्ठौ | श्रेष्ठौ |
| २९० | ७ | आभ्यः । | आभ्यः । |
| २९३ | ४ | दुच्छुनाम् । | दुच्छुनाम् । |
| ३१३ | ” | काष्ठा | काष्ठा |
| ३१४ | १ | ” | ” |
| ३१८ | १४ | पीते | पीत |
| ३२८ | १२ | कारः । | कारः । |
| ३३३ | ३ | वषट्कारो | वषट्कारो |
| ३३६ | ८ | हेन्द्रिया— | हेन्द्रिया— |
| ३४३ | ३ | आमासु | आमासु |
| ३४६ | ५ | इत्योषिष्ठ | इत्यौषिष्ठ |
| ३५१ | ७ | गिरिष्ठा | गिरिष्ठा |

# भाष्यस्य शुद्धिपत्रम्.

| पृष्ठाङ्काः. | पङ्क्त्यङ्काः. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ३ | १२ | क्विप् | क्विप् |
| १३ | ४ | श्रुश्रुणु | श्रुशृणु |
| १८ | ६ | यजमानन्य | यजमानस्य |
| २७ | ९ | पुनरष्याश्विन | पुनरप्याश्विन |
| ४३ | २ | | *सं. ६-९-१०. |
| ,, | ६ | * | † |
| ,, | ७ | † | ‡ |
| ५६ | २ | लुङ्लिङ्लिटः | लुङ्लङ्लिटः |
| ५८ | ११ | भवतेर्लुङि | भवतेर्लेटि |
| ६३ | ,, | स्वव | असिवत् (पा) |
| ६४ | ४ | अस्माना | अस्मास्वा (पा) |
| ६६ | १२ | तादृश्या | तादृशं (पा) |
| ६७ | २ | भाग्य | भवन (पा) |
| ७० | ९ | त्रन् | तृन् |
| ९३ | ७ | अभ्यैःमि | अभ्यैमि |
| १०० | २ | विद्वध्रिः | विद्वद्भिः |
| १०८ | १३ | पराङ्मखी | पराङ्मुखी |
| ११७ | ,, | सत्वेषु | सर्वेषु |
| १२५ | ८ | रुद्धृतो | रुद्धृतो |
| १२६ | १६ | सं. १-२-१४. | सं. १-२-१४.[17] |
| १२९ | १६ | द्धिधिरेव | स्तुतिरेव |

| पृष्ठाङ्काः. | पङ्क्त्यङ्काः; | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १४८ | १ | भूम्रा | भूम्रा |
| १५९ | ९ | मलेस्वं | मलेखं |
| ,, | १३ | सं. १-५-३.$^{6}$ | सं. १-५-३.$^{5}$ |
| १८२ | १० | तत्सवितुरति | तत्सवितुरिति |
| १९२ | ५ | दुम्छुनां | दुच्छुनां |
| २२१ | १५ | लिङि | लुङि |
| २३९ | ११ | ,, | ,, |
| २४२ | ५ | धनाश्च | धनाश्च |
| २४८ | ३ | आज्यमसीते | आज्यमसीति |
| २५५ | ४ | रथादिर्वा | रथादिर्वा |
| २७० | ८ | शब्दर्शनजेन | शब्ददर्शनजेन |
| ३१८ | ५ | मध्द | मध्ये |
| ३२३ | ,, | प्येण्यण् | पेण्यण् |
| ३२४ | ,, | सं. १-६-१०६$^{6}$ | सं. १-६-१०.$^{6}$ |

